श्रीमत्कृष्णमिश्रयतिप्रणीतं

# प्रबोधचन्द्रोदयम् ।

चन्द्रिकाव्याख्या-प्रकाशाख्यव्याख्याभ्यां

सहितम् ।





मूल्यं १। रूप्यकः ।

श्रीः ।

श्रीमत्कृष्णमिश्रयतिप्रणीतं

# प्रबोधचन्द्रोदयम् ।



चन्द्रिकाव्याख्या-प्रकाशाख्यव्याख्याभ्यां

तत्र

श्रीमद्राजाधिराजपरमेश्वरश्रीमत्प्रतापश्रीकृष्णरायमहासाम्राज्य-
धुरंधरश्रीसाल्वतिम्मदण्डनायकभागिनेयनाण्डिल्लगोप-
मन्त्रिशेखरविरचितया चन्द्रिकाव्याख्यया,
रामदासदीक्षितकृतप्रकाशटीकया च
समलंकृतम् ।



पणशीकरोपाह्वविद्वद्वर्यलक्ष्मणशर्मतनुजनुषा
वासुदेवशर्मणा संशोधितम् ।

पञ्चमावृत्तिः ।

तच्च

मुम्बय्यां

पाण्डुरङ्ग जावजी,

इत्येतैः स्वीये निर्णयसागराख्यमुद्रणयन्त्रालये प्रकाशितम् ।

शकाब्दाः १८४६, ख्रिस्ताब्दाः १९२४.

मूल्यं सपादो १। रूप्यकः ।

# प्रस्तावना ।

विदितमस्त्येवैतत्तत्रभवतां विपश्चितां यदिदं प्रबोधचन्द्रोदयं नाम नाटकं प्रधानशान्तरसमप्युपसर्जनीभूतशृङ्गाराद्यखिलरससमाश्लिष्टं धीरोदात्तनायकोपोद्धतनायकसन्धिपञ्चकोपसन्धिचतुःषष्ट्यङ्गविष्कम्भादिपञ्चकभारत्यादिरीतिपरिभाषापताकास्थानकवृत्तार्थौचित्याद्यखिलनाट्यगुणविलसैर्मण्डितमप्यामूलान्तमध्यात्मविषयविद्याप्रतिघातिनानापाखण्डिमतोच्छेदकारिसिद्धान्तानाविष्कुर्वन्नुभयप्रवणतयानौपम्येन वरीवर्ति धरामण्डले ।

श्रूयते चैतद्विषये किंवदन्ती—पुरा किल विद्वद्वृन्दललामभूतोऽखिलविद्योदधिपारदृश्वेवासीत्कृष्णमिश्राख्यो दण्डी। स च निरवधिनिजानन्दाप्लुतोऽपि लोकसंग्रहचिकीर्षया स्वादृतमाश्रममाश्रमधर्मेण पालयन्नध्यापयंश्च विविधग्रन्थविषयानलंचकार निजावासप्रदेशम् । पेठुश्च तत्रानेके निजनिजाभिलषितान्भागांश्छात्राः । रात्रंदिवमधीयानेषु तेष्वेकोऽन्तेवासी महानुभावान्तेवासित्वस्यावन्ध्यतां ख्यापयन्निवोदञ्चन्मुमुक्षोऽपि पूर्वतनानन्तभवाभ्यस्तवैषयिकविलासवागुराग्रथितस्वान्ततयाध्यात्मविषयपराङ्मुखः केवलं काव्यालंकारनाटकगतशृङ्गारादिविषयेष्वेवाविष्टान्तःकरण आसीत् । तद्बुबोधयिषामिषेण वेदान्तसिद्धान्तोद्घाटनपुरःसरं परमकारुणिकेन प्रस्तुतकविधुरीणेनेदं नाटकं सरसरसिकचेतोहारि निखिलनाट्यगुणमण्डितमपि जीवन्मुक्तिपर्यवसायि निर्माय विषयिणं छात्रमुद्बुद्धप्रबोधं संपाद्यानुपमकविचातुरी विशदीकृतेत्यलं प्रशस्तप्रशंसया ।

अधुनास्य चन्द्रिकाव्याख्यान्वितमेकं प्रकाशाख्यव्याख्यान्वितं चापरं प्राचीनहस्तलिखितं टीकाद्वयपुस्तकमप्यस्माभिः समुपलब्धम् । चन्द्रिकाव्याख्यात्रा तत्रतत्रालंकारमागध्यादिप्राकृतभाषाभेदविवरणसंधिसंध्युपाङ्गभारत्यादिरीतीनां यथावद्विवरणमपूर्वया रीत्या तत्तत्प्रमाणोपन्यासेन सविस्तरं कृतमस्ति । प्रकाशटीकाकृता तु ग्रन्थगतगद्यपद्यपदपदार्थवैशद्यायातीव समीचीनः प्रयत्नः कृतोऽस्ति । संप्रति च प्रत्युदीरितविवेकानां सचेतसामेतट्टीकाद्वयस्यापि ग्रन्थपर्यालोचनसमकालं युगपल्लाभो भूयादिति मूलाधो व्याख्याद्वयस्य यथावद्योजनेन समस्कारीदं पुस्तकम् । लब्धव्याख्ययोर्मध्ये चन्द्रिकाया अतिदौर्लभ्येन पुस्तकान्तरालाभात्तद्गतबहुतरलेखकादिप्रमादानां यावन्मतिविभवं शोधनं कृतमस्ति । तथाच व्यवस्थायां चन्द्रिकादृतपाठं मूलेऽवस्थाप्यान्यतरः प्रकाशकाराभीप्सितपाठः पृष्ठाधष्टिप्पणीरूपेण समावेशितोऽस्ति । तथा प्रकाशव्याख्यागृहीतपाठानुकूलबालभाषाछायादि टीकायां तत्र तत्र [ ] एतादृक्चिह्नान्तर्गर्भितत्वेन संगृह्य क्वचित्संदिग्धस्थले (?) चैतादृशचिह्नविशेषो निवेशितोऽस्ति । कृतेऽप्येतादृशि प्रयासे

संस्करणावसरेऽनवधानचक्षुःशेमुषीचापल्यनिबन्धना दोषा नियतं भवन्त्येवेति कृत्वा तत्परिशोधनपूर्वं तत्क्षमापनायात्र शिरोवनतिपूर्वं विद्वदभ्यर्थनमप्यकारि ।

आशास्ते च सारज्ञुषो विदुषः सविनयमत्रत्यं दृग्दोषादिप्रमादजं पतितं संशोध्यानेन पुस्तकेन स्वीयं ग्रन्थभाण्डागारं सादरमलंकुर्युरिति ।

पणशीकरोपाह्वविद्वद्वरलक्ष्मणशर्मात्मजो

**वासुदेवशर्मा ।**

---

## पात्राणि—

| पात्रम् | |
|---|---|
| सूत्रधारः ... ... | नाटकाचार्यः |
| नटी ... ... ... | तत्पत्नी |
| विवेकः ... ... | प्रधाननायकः |
| मतिः ... ... | तत्पत्नी |
| वस्तुविचारः ... | विवेककिंकरः |
| संतोषः ... ... | सत्सहचरः |
| पुरुषः... ... ... | उपनिषत्पतिः |
| प्रबोधोदयः ... | पुरुषपुत्रः |
| श्रद्धा ... ... | सात्विकी, राजसी तामसीति ३ प्र. |
| शान्तिः ... ... | विवेकभगिनी |
| करुणा ... ... | शान्तिसखी |
| मैत्री ... ... ... | श्रद्धासखी |
| विष्णुभक्तिः ... | उपनिषत्सखी |
| उपनिषत् ... ... | वेदान्तशास्त्रम् |
| सरस्वती ... ... | विष्णुभक्तिसखी |
| क्षमा ... ... | विवेकदासी |
| वैराग्यम्... ..., निदिध्यासनम्, संकल्पः | मनस उत्पन्नाः |
| पारिपार्श्वकः ..., पुरुषः ... ..., सारथिः ... ..., प्रतिहारी... ... | इतरे |
| महामोहः ... | विवेकशत्रुः |
| चार्वाकः ... | मोहमित्रम् |
| कामः ... ..., क्रोधः ... ..., लोभः ... ..., दम्भः ... ..., अहंकारः ... | मोहामात्यादयः |
| मनः ... ... ... | संकल्पात्मकम् |
| दिगम्बरः ... ..., भिक्षुः ... ..., क्षपणकः ... ..., कापालिकः ... | बुद्धजिनादिमतप्रवर्तकाः |
| मिथ्यादृष्टिः ... | मोहपत्नी |
| विभ्रमावती ... | तत्सखी |
| रतिः ... ... ... | कामपत्नी |
| हिंसा ... ... | क्रोधपत्नी |
| तृष्णा ... ... | लोभपत्नी |
| बटुः ... ... ..., शिष्यः ... ..., पुरुषः ... ..., दौवारिकः ... ... | इतरे |

---

श्रीः

# प्रबोधचन्द्रोदयस्थपद्यानामकाराद्यनुक्रमेण सूची ।

श्रीः ।

श्रीमन्महानुभावकृष्णमिश्रयतिप्रणीतं

# प्रबोधचन्द्रोदयम् ।

नाण्डिल्लगोपप्रभुविरचितया चन्द्रिकाख्यटीकया
प्रकाशाख्यटीकया च संवलितम् ।

## प्रथमोऽङ्कः १

मध्याह्नार्कमरीचिकास्विव पयःपूरो यदज्ञानतः
खं वायुर्ज्वलनो जलं क्षितिरिति त्रैलोक्यमुन्मीलति ।

---

### चन्द्रिकाव्याख्या ।

श्रीरामचन्द्रः श्रियमातनोतु सीतासहायो मुनिधर्मपद्धयाः ।
यस्याङ्घ्रिपङ्केरुहरेणुरासीदश्मव्रतोद्यापनकर्महेतुः ॥
अस्ति प्रशस्तमहिमा नरसिंहसूनुः
श्रीकृष्णरायनृपतिर्नृपसार्वभौमः ।
यस्योद्धता समरसीम्नि कृपाणवल्ली
दूतीभवत्यमरलोकविलासिनीनाम् ॥
नास्तं याति सदोदयाद्रिशिखरे तिष्ठत्यरिक्ष्माभृतां
हस्ताब्जानि निमीलयत्यगणयँल्लोकान्समाक्रामति ।
तापं छत्रवतामहर्निशमतीवापादयत्यद्भुतं
श्रीकण्ठेश्वरकृष्णरायनृपतेस्तीव्रप्रतापांशुमान् ॥
प्रतापरुद्रस्य गजेश्वरस्य पुत्रीं पवित्रीकृतभूतधात्रीम् ।
प्रत्यग्रहीद्यः प्रकटप्रतापो भद्रां सुभद्रामिव पाण्डवेयः ॥
तस्य श्रीकृष्णरायस्य प्राज्यराज्यधुरंधरः ।
कुलक्रमागतो मन्त्री साल्वतिम्मचमूपतिः ॥

---

### प्रकाशाख्यव्याख्या ।

श्रीः ॥ [प्रारिप्सितग्रन्थप्रत्यूहविघाताय शिष्टवृतत्वेनेष्टत्वादादौ नान्दीसंज्ञकं मङ्गलमाचरति—नान्दीस्वरूपं च—'नन्दन्ति काव्यानि कवीन्द्रवर्याः कुशीलवाः

आ पूर्वपश्चिमसमुद्रमधत्त राज्य-
मासेतुसिंहगिरि चाप्रतिमप्रतापः ।
यः कृष्णरायनृपपालकदण्डनाथः
कौण्डिण्यगोत्रतिलकः कविपारिजातः ॥
तद्भागिनेयौ तरणिप्रतापौ नाण्डिल्लयप्प्यप्रभुगोपवर्यौ ।
विराजतस्तिम्मयमन्त्रिपुत्रौ कृष्णाम्बिकागर्भपयोधिचन्द्रौ ॥
अथ मन्त्रीश्वरो ज्यायान्कौशिकान्वययोस्तयोः ।
अभवत्साल्वतिम्मस्य जामाताब्धेरिवाच्युतः ॥
का(आ)शा वीतप्रकाशा रणभुवि पतिताः कुन्तलाः कुन्तलूना-
श्चोला भ्रश्यन्निचोला निशिततरशरैश्छिन्नदेहा विदेहाः ।
लाटाः संत्यक्तघोटाः सपदि भयवशाज्जातभङ्गाः कलिङ्गा
यस्मिन्नाण्डिल्लयप्प्यप्रभुवरतिलके विक्रमादात्तखङ्गे ॥
त्यागेन तिम्मसचिवाप्ययवत्प्रतीतो
यः कोऽपि नास्ति यदि देवमणिस्ततः किम् ।
तन्मन्दुरान्तरजुषां तुरगोत्तमानां
कण्ठेषु देवमणयः कति वा न सन्ति ॥
तस्यानुजस्तरुणभास्करदिव्यतेजा
नाण्डिल्लगोपसचिवो नवमार्गवेत्ता ।
चाणक्यभट्टिशिवधर्मयुगंधरादी-
न्यः पूर्वमन्त्रितिलकानपि धिक्करोति ॥
पल्यङ्किकाकटकचामरकर्णभूषा-
हाराङ्गदादिवसुधाधिपलाञ्छनानि ।
श्रीकृष्णरायसचिवेश्वरसाल्वतिम्म-
दत्तानि तानि विविधानि समग्रहीद्यः ॥
यः कोण्डुवीडुनगरीं विनिकोण्डुमुख्यै-
र्दुर्गैः समं समधिगम्य महामहिम्ना ।
प्रादान्मुदा सकलभूसुरपुंगवेभ्यः
श्रीरामचन्द्रपुरमुख्यमहाग्रहारान् ॥
सोऽयं प्रधानोत्तममौलिरत्नं नाण्डिल्लगोपप्रभुरात्मवेत्ता ।
प्रबोधचन्द्रोदयनाटकस्य टीकां हितार्थं व्यतनोद्बुधानाम् ॥

**मध्याह्नार्केत्यादि** । मध्याह्नार्कमरीचिकास्वित्येकं पदम् । 'इवेन सह नित्यस-

---

पारिषदाश्च सन्तः । यस्मादलं सज्जनसिन्धुहंसी तस्मादियं सा कथितेति नान्दी ॥' इति ॥ तल्लक्षणं च—'आशीर्नमस्क्रियावस्तु श्लोकः काव्यार्थसूचकः । नान्दीति गद्यगदितपदैर्द्वादशभिस्तथा ॥' इति ॥ **मध्याह्नेति** ॥ वयं तदौपनिषदं महस्तेजः

यत्तत्त्वं विदुषां निमीलति पुनः स्रग्भोगिभोगोपमं
सान्द्रानन्दमुपास्महे तदमलं स्वात्मावबोधं महः ॥ १ ॥

---

मासो विभक्त्यलोपश्च' इति वक्तव्यात्काव्यादावव्ययप्रयोगः काव्यस्य नित्यस्थितिं संपादयति। अह्नो मध्यं मध्यमो भागः। एकदेशिसमासः। 'संख्याविसाय-' इत्यत्र सायग्रहणाल्लिङ्गात्सर्वैकदेशैरह्नः समासो जात इत्याह वृत्तिकारः। 'अह्नोऽह्न एतेभ्यः' इत्यह्नादेशः। तत्र वर्तमानोऽर्को मध्याह्नार्कः। तस्य मरीचिका मरुभूमिप्रविष्टाः किरणाः। मरीचय एव मरीचिकाः। स्वार्थे कः। तासु। अत्र मरीचिकास्विति वहुवचनं बाहुल्याभिप्रायेण। अनेन मरुमरीचिकाभ्रान्तिपरम्पराऽविच्छेदेन प्रचरतीति सूचितम्। पयःपूरस्तरङ्गितप्रवाहः यदज्ञानतः यस्य ब्रह्मणोऽधिष्ठानभूतस्याज्ञानतोऽपरिज्ञानात्। खं वायुर्ज्वलनो जलं क्षितिरिति। अपरार्धं स्पष्टम्। इतिशब्दः प्रकारवाचितया शब्दस्पर्शरूपरसगन्धादीनामहंकारादीनां चोपसंग्राहकः। एवंप्रकारेण त्रैलोक्यमुन्मीलति। स्फुरतीत्यर्थः। त्रयो लोकास्त्रैलोक्यम्। स्वार्थे ष्यञ्। पिण्डाण्डं ब्रह्माण्डं चात्मन्यध्यस्तमवभासत इति वाक्यार्थः। यत्तत्त्वं विदुषामिति। यस्य ब्रह्मणस्तत्त्वमबाधितस्वरूपं विदुषां साक्षात्कुर्वताम्। 'न लोकाव्यय-' इत्यादिना कृद्योगलक्षणषष्ठीनिषेधात्तत्त्वमिति द्वितीया। पुनर्निमीलति लीनो भवति। पुनःशब्दस्त्वर्थः। विदुषां पुनरित्यन्वयः। यद्वा पुनःपुनरित्यर्थः। पुनःपुनर्मीलतीत्यन्वयः। तदुक्तम्—'तत्त्वज्ञानवतां चित्तं पुनः संसारवासनाः। आच्छादयन्ति मुञ्चन्ति पथि भानुं यथा घनाः ॥' उन्मीलनोदाहरणस्यौपाधिकभ्रमत्वेन ज्ञानमात्रनिवर्त्यत्वान्निमीलने ज्ञाननिवर्त्यमुदाहरणान्तरमाह—स्रग्भोगिभोगोपममिति। स्रजि मालायां भोगिभोगः सर्पकायः प्रतीयते स उपमा यस्य त्रैलोक्यं तत्। विधेयविशेषणमेतत्। निमीलनक्रियाविशेषणं वा। रज्जुसर्पादिभ्रान्तयो यस्य कस्यचित्पुरुषस्य यदा कदाचित्काले उत्पद्यन्ते। मरुमरीचिकाभ्रान्तिस्तु सर्वेषामाबालगोपालं युगपदेव मध्याह्नसमये सूर्ये प्रकाशमाने सति नियमेनैवोत्पद्यत इति। विद्वांसो जीवन्मुक्तास्ते च विरलाः शुकवामदेवकृष्णमिश्रादयः। अनेन षष्ठाङ्के 'अम्भःशीतकर' इत्यादिश्लोकार्थः सूचितः। प्रथमोदाहरणं संसारिविषयं, द्वितीयोदाहरणं मुक्तविषयमिति विवेकः। अधिष्ठानरूपं तावदेवाह—सान्द्रानन्दमिति। आनन्दघनमित्यर्थः। उपास्महे। उपासनं कुर्म इत्यर्थः। पूजायां बहुवचनम्। तदिति

---

उपास्महे सेवयामः। कीदृशम्। सान्द्रो निविडो नित्यो य आनन्दस्तद्रूपम्। पुनः कीदृशम्। अमलमविद्यातत्कार्यदोषशून्यम्। स्वात्मावबोधं स्वप्रकाशम्। किं तत्। यदज्ञानतो यस्याज्ञानादिदं त्रैलोक्यमुन्मीलति प्रादुर्भवति। तदेवाह—खमि-

यच्छब्दपरामृष्टं ब्रह्मोच्यते । अनेन प्रत्यग्ब्रह्मणोरैक्यलक्षणः काव्यार्थः शब्दतः सूचितः । तथाहि । उपास्महे इत्यत्रोपशब्दः समीपवाची । सामीप्यं तारतम्यनिबन्धनम् । तारतम्यस्य क्वचिद्विश्रान्त्या भवितव्यम् । तद्विश्रान्तिः प्रत्यगात्मन्येव समाप्यते । तदुक्तं सुरेश्वरवार्तिके—'उपोपसर्गः सामीप्ये तत्प्रतीचि समाप्यते' इति प्रत्यगात्मन्यास्महे उपास्महे इति जीवात्मपरमात्मनोरैक्यमापन्ना वयमित्यर्थः । तदैक्यानुसंधानमेव मङ्गलाचरणं मुख्यं ततोऽन्यद्गौणमित्यभिप्रायः । यद्यपि सूत्रधारवाक्ये उपास्महे इति नान्वेति तथापि 'महापुरुषकीर्तितमनुकीर्तयेच्छ्रेयस्कामः' इति स्मृतेर्मध्याह्नार्कमरीचिकेत्यादिपद्यं महापुरुषकृष्णमिश्रकीर्तितमनुकीर्तितं सूत्रधारेण । अतो मङ्गलाचरणं सिद्धमिति ध्येयम् । पुनः किंलक्षणं प्रत्यग्रूपमिति तत्राह—अमलमित्यादिना । किमहंकारादिसंस्पृष्टं ब्रह्म । नेत्याह—स्वात्मावबोधमिति । आत्मशब्दोऽन्तःकरणवाची । शोभनश्चासावात्मा च स्वात्मा । आत्मनः शोभनत्वं यज्ञदानतपोध्ययनजनितसंस्कारसंस्कृतत्वं तेन स्वात्मनावबुध्यत इत्यवबोधम् । स्वच्छान्तःकरणेन ज्ञायमानमित्यर्थः । यद्वा प्रकाशान्तरनिरपेक्षेणैव प्रदीपादिवत्प्रकाशत इति स्वयंप्रकाशमित्यर्थः । अवबोधमित्यत्र कर्मणि व्युत्पत्त्या नपुंसकता प्रथमव्याख्याने । द्वितीयव्याख्याने तु भावव्युत्पत्त्या पुंलिङ्गता(पादक)मापकत्वादनाविष्टलिङ्गता । मह इति । स्वयंज्योतिः । अत्र श्लोके ब्रह्म तटस्थलक्षणं स्वरूपलक्षणं चोक्तम् । तथा हि । पयःपूरो मध्याह्नार्कमरीचिकास्विव ब्रह्मणि जगदुत्पद्यते । उन्मीलति स्थितिं प्राप्नोति तत्रैव निमीलति च । अतश्च सृष्टिस्थितिलयकर्तृत्वं 'यतो वा' इत्यादिश्रुतिनिरूपितं प्रतिपादितम् । सान्द्रानन्दमित्यादिना स्वरूपलक्षणं प्रतिपादितमिति ध्येयम् । उपास्महे इत्यनेनैक्यरूपो विषयः सूचितः । निमीलतीत्यनेनाविद्यानिवृत्तिरूपं प्रयोजनं निर्दिष्टम् । सान्द्रानन्दमित्यनेनानन्दावाप्तिलक्षणं प्रयोजनमुक्तम् । ननु 'आनन्दनिष्यन्दिषु रूपकेषु व्युत्पत्तिमात्रं फलमल्पबुद्धिः । योऽपीतिहासादिवदाह साधुस्तस्मै नमः स्वादुपराङ्मुखाय ॥' 'धर्मार्थकाममोक्षेषु वैलक्षण्यं कलासु च । करोति कीर्तिं प्रीतिं च साधुकाव्यनिषेवणम् ॥' इति धर्मादीनां फलत्वे स्वसंवेद्यपरमानन्दस्वरूपो रसास्वाद एव दशरूपकाणां फलं, पुनरितिहासादिवद्धर्मार्थकाममोक्षव्युत्पादनमात्रं फलम् । अथ कथमुच्यते

---

त्यादि । [ अज्ञानात्प्रपञ्चोत्पत्तिं लोकदृष्टान्तेनाह—] मध्याह्नार्कमरीचिकासु पयःपूर इव । यथा मध्याह्ने सिकतादिप्रतिफलितेष्वर्ककिरणेषु पयःपूरज्ञानं जायते तथाऽसत्यप्यानन्दादिरूपब्रह्मज्ञानात्प्रपञ्चजनिरित्यर्थः । एवं चेत्कथमनर्थनिवृत्तिरित्याशङ्क्य सदृष्टान्तमाह—यत्तत्त्वं यस्य त्रैलोक्यस्य तात्त्विकं स्वरूपं विदुषां ज्ञानिनां पुन-

अपिच

अन्तर्नाडीनियमितमरुल्लङ्घितब्रह्मरन्ध्रं
स्वान्ते शान्तिप्रणयिनि समुन्मीलदानन्दसान्द्रम् ।

---

अविद्यानिवृत्तिः फलमिति । मैवम् । अस्य रूपकस्य नाटकभूमिकवेदान्तशास्त्ररूपत्वादविद्यानिवृत्त्यानन्दावाप्तिरूपप्रयोजनद्वयनिर्देशः । अत्रेदमुपसंहरति—अस्मिन्नाटके मुखप्रतिमुखसंधिषु रामायणादिष्विव चित्रतुरगादिप्रतिपत्तितुल्यप्रतिपत्त्या काव्यश्रवणानन्तरं विभावाद्यनुसंधानवतां सचेतसां समनन्तरमेव रसास्वादसमुद्भूतो विगलितवेद्यान्तर आनन्द उदेति । निर्वहणसंधौ तु विगलितवेद्यान्तरः साक्षाद्ब्रह्मानन्द एव । अतोऽत्र पञ्चमाङ्कपर्यन्तमारोपितविषयजन्य आनन्दः । षष्ठाङ्के तु स्वरूपानन्द एव । अविद्यानिवृत्तिरपि स्वरूपानन्द एवेति वक्ष्यत इति न काचित्क्षतिः । ननु नाटके शान्तरसस्य निर्विकारत्वाद्विभावादिगम्यत्वाभावान्न प्राधान्यम्, अतः स्वरूपानन्दो नाटकाभिव्यङ्ग्यो न भवतीति चेत् । मैवम् । शान्तरसोऽपि विभावानुभावव्यभिचारिसंयोगनिष्पन्नः, अतः प्रधानतया नाटके प्रतिपाद्यस्य शान्तरसस्य प्राधान्यं तद्विरुद्धैः रौद्रादिरसैर्नोपनीयते । अङ्गाङ्गिभावेन निबन्धनात् । यथोक्तं ध्वनिकृता—'अविरोधी विरोधी वा रसोऽङ्गिनि रसान्तरे । परिपोषं च नेतव्यो यथा स्यादविरोधिता ॥' इति । एतच्च पुरस्तान्नाटकान्ते सम्यङ्निरूपयिष्यामः । उपास्महे इत्यनेनाधिकारिणः सूचिताः ॥ १ ॥ आत्मतुष्टयधीनत्वान्मङ्गलाचरणस्य पुनरपि मङ्गलान्तरमारभते—**अन्तर्नाडीनियमितेत्यादि** । नाड्य इडा-पिङ्गलाद्यास्तासामन्तः नाडीनां द्वारेषु नियमितो निरुद्धो मरुद्वायुः । सुषुम्नाप्रविष्ट इति यावत् । यद्वान्तर्नाड्यां सुषुम्नायां नियमितो नियमेनेतरनाडीद्वारनिरोधेन सुषुम्नां प्रवेशितः तेन सार्धं लङ्घितमतिक्रान्तं ब्रह्मरन्ध्रं सहस्रकमलद्वारं येन प्रत्यग्ज्योतिषा तत् ।

---

निमीलति नश्यति । आत्मस्वरूपातिरिक्तं न भवति । ब्रह्मस्वरूपेण तिष्ठतीत्यर्थः । तत्र दृष्टान्तः—स्रग्भोगिभोगोपमम् । स्रजि मालायामुत्पन्नो यो भोगिभोगः सर्पदेहस्तेनोपमेयम् । तथाचायमर्थः—मालातत्त्वसाक्षात्काराभिन्नः सर्पदेहो न भवति किंतु तत्स्वरूपेणावतिष्ठते, एवं ब्रह्माद्वैतसाक्षात्कारात्स्वरूपातिरिक्तरूपेण प्रपञ्चो न तिष्ठतीति । एवं च सति अज्ञाननिवृत्तिः प्रयोजनम् । प्रयोजनकामोऽधिकारी । प्रतिपाद्यप्रतिपादकभावः संबन्धः । ऐक्यमभिधेयमित्यादि प्रदर्शितम् ॥ १ ॥—अपिचेति । प्राक्तनमङ्गलसमुच्चयार्थोऽपिचशब्दः ॥—अन्तरिति । चन्द्रार्धमौलेश्चन्द्रशेखरस्य प्रत्यग्ज्योतिर्जडानृताहंकारादिभ्यः प्रातिकूल्येन सत्यज्ञानानन्दादिरूपत्वेना-

प्रत्यग्ज्योतिर्जयति यमिनः स्पष्टलालाटनेत्र-
व्याजव्यक्तीकृतमिव जगद्व्यापि चन्द्रार्धमौलेः ॥ २ ॥

---

यथोक्तं भरते संगीतरत्नाकरे च—'गुदलिङ्गान्तरे चक्रमाधाराख्यं चतुर्दलम् । अस्ति कुण्डलिनी ब्रह्मशक्तिराधारपङ्कजे ॥ आ ब्रह्मरन्ध्रमृजुतां गतेयममृत-प्रदा । स्वाधिष्ठानं लिङ्गमूले षड्दलं चक्रमस्य च ॥ नाभौ दशदलं चक्रं मणिपूर-कसंज्ञकम् । हृदयेऽनाहतं चक्रं शिवस्य प्रणवाकृतेः ॥ पूजास्थानं तदिच्छन्ति दलैर्द्वादशभिर्युतम् । कण्ठेऽस्ति भारतीस्थानं विशुद्धिः षोडशच्छदम् ॥ भ्रूमध्ये द्विदलं चक्रमाज्ञासंज्ञं प्रचक्षते । चक्रं सहस्रपत्रं तु ब्रह्मरन्ध्रे सुधाधरम् ॥ द्वाद-शारे स्थितो जीवो गीतादेः सिद्धिमृच्छति । आधाराद्द्व्यङ्गुलादूर्ध्वं मेहनाद्द्व्यङ्गु-लादधः ॥ एकाङ्गुलं देहमध्यं तप्तजाम्बूनदप्रभम् । तत्रास्तेऽग्निशिखा तन्वी चक्रात्तस्मान्नवाङ्गुले ॥ देहस्य कन्दोऽस्त्युत्सेधायामाभ्यां चतुरङ्गुलः । तन्मध्ये नाभिचक्रं तु द्वादशारमवस्थितम् ॥ लूतेव तन्तुजालस्था तत्र जीवो भ्रमत्य-यम् । सुषुम्नया ब्रह्मरन्ध्रमारोहत्यवरोहति ॥ जीवः प्राणसमारूढो ब्रह्मरन्ध्रं विशत्यसौ । नाडीषु वध्यमानासु मध्यनाडीं विशत्यसौ ॥ सुषुम्ना तिसृषु श्रेष्ठा वैष्णवी मुक्तिमार्गदा ॥' इति । तदेतज्ज्योतिस्तृतीयाक्षव्याजेन जगतां प्रत्यक्षी-कृतमित्युत्प्रेक्षा । तादृशं ज्योतिः केन प्रमाणेनावगम्यत इत्याशङ्क्य मनसैवाव-गम्यत इत्याह । स्वान्ते शान्तिप्रणयिनि समुन्मीलत्प्रकाशमानम् । 'मनसैवानु-द्रष्टव्यम्' । 'न संदृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चनैनम् । हृदा म-नीषी मनसाभिक्लृप्तो य एतद्विदुरमृतास्ते भवन्ति ॥' इति श्रुतिभ्यश्च । तत्की-दृशमित्याह—आनन्दसान्द्रमिति । प्रत्यग्ज्योतिः प्रत्यगात्मस्वरूपं ज्योतिस्तेजो-रूपं जयति सर्वोत्कर्षेण वर्तते । यमिनः परमेश्वरस्य प्रत्यग्ज्योतिर्ललाटनेत्रव्या-जेन सर्वलोकप्रत्यक्षं भवतीति जयतेरर्थः । तेन तज्ज्योतिरुपास्महे इति वा-क्यार्थः संपन्न इत्यनुसंधेयम् । यमिनः स्वभावतो यमादिगुणसंपन्नस्य । नित्य-योगे मत्वर्थीय इनिः । स्पष्टलालाटनेत्रव्याजव्यक्तीकृतमिव । स्पष्टं सदिति विधेय-विशेषणं वा । स्पष्टं यथा भवति तथा ललाटस्थितं लालाटं तच्च नेत्रं तस्य

---

व्रति प्रकाशते । तत्प्रत्यक् तच्च ज्योतिश्च प्रकाशरूपं जयति । जयः सर्वोत्कर्षः । अन्यनिरपेक्षतेत्यर्थः । कीदृशं प्रत्यग्ज्योतिः । अन्तर्नाड्यां सुषुम्नायां नियमितः संनिरुद्धश्चासौ मरुच्च तेन लङ्घितमुल्लङ्घितं ब्रह्मरन्ध्रं येन तत् । कस्मिन्सति । स्वान्ते अन्तःकरणे शान्तिप्रणयिनि उपशमं गते सति । पुनः कीदृशं ज्योतिः । समुन्मीलत्प्रकटीभवन्नानन्दः सुखं तेन सान्द्रमभिन्नम् स्वप्रकाशसुखाभिन्नमित्यर्थः । कीदृशस्य चन्द्रार्धमौलेः । यमिनः यमोऽस्यास्तीति यमी तस्य । योगासक्तस्येत्यर्थः ।

(नान्द्यन्ते सूत्रधारः ।)

---

व्याजस्तेन व्यक्तीकृतमिव । स्वभावतोऽचाक्षुषं चाक्षुषीकृतमिति च्विप्रत्ययार्थः । तत्कीदृशं तदाह—जगद्व्यापीति । जगत्पिण्डाण्डब्रह्माण्डरूपं तद्व्याप्नोतीति । चन्द्रार्धमौलेः चन्द्रस्यार्धश्चन्द्रार्धः चन्द्रार्धयुक्तो मौलिर्यस्येति मध्यमपदलोपी समासः । न तु सप्तम्या समासः । तस्य मौलेः प्रहरणादिपुंनियमात् चन्द्रार्धमौलेरन्तर्ज्योतिरिति भेदोपचाराद्ब्रह्मण आनन्दमितिवत् । चन्द्रार्धमौलिरूपं ज्योतिरित्यर्थः । काव्यार्थसूचकत्वं नान्दीश्लोकस्याङ्गीकुर्वन्ति केचित् । 'काव्यार्थसूचकैर्वर्णैर्नान्दीश्लोकः प्रशस्यते' इति । प्रतापरुद्रीयेऽप्युक्तम्—'अर्थतः शब्दतो वापि मनाक्काव्यार्थसूचनम्' इति । अत्र नान्दीद्वये शब्दतः षष्ठाङ्कार्थः सूचितः । अर्थतोऽपि मध्याह्नार्केत्यादिप्रथमार्धेन महामोहस्तत्सेना च सूचिता । तृतीयपादेन विवेकस्तत्सेना च सूचिता । चतुर्थपादेनोभयोः सेनाविलयानन्तरं स्वरूपावस्थानं निर्वहणसंधिप्रतिपाद्यं सूचितम् ॥ २ ॥ नान्द्यन्ते इति । सूत्रं नामासूचितं नाटकवस्तुजातं कृत्स्नमुच्यते । तस्या पञ्चमादा सप्तमात्प्रतीक्षां धारयतीति सूत्रधारः । नान्दी नाम नाट्यादौ विघ्ननिबर्हणार्थं पठ्यमाना पदनिबन्धनियता तदनियता वा । तदन्ते सूत्रधारः । प्रविशतीति शेषः । सा च नान्दी पूर्वरङ्गस्याङ्गम् । पूर्वरङ्गो नाम नाट्यवस्तुनः पूर्वमादावुपक्षेपको रङ्गो रञ्जकः । नाट्यवस्तूपोद्घात इति यावत् । यथोक्तमभिनवगुप्तपादैः—'यदुपक्षेपकं वस्तु नाट्यादौ रङ्ग उच्यते । स एव पूर्वरङ्गः स्यादुपोद्घातं प्रचक्षते ॥' इति । अयमर्थः—शास्त्रेषु यद्वस्तूपोद्घात इत्युच्यते तदेव नाट्येषु पूर्वरङ्गशब्देनोच्यत इति । तदुक्तं सरस्वतीविलासे—'यन्नाट्यवस्तुनः पूर्वं रङ्गविघ्नोपशान्तये । कुशीलवाः प्रकुर्वन्ति पूर्वरङ्गः स कीर्तितः ॥' इति । तस्याङ्गानि द्वाविंशतिसंख्याकानि तेषां मध्येमध्ये प्रत्याहारमार्जनादीनि तौर्यत्रिकाश्रितत्वात्काव्यादावप्रसक्तानि । नान्दी तु पद्यरूपतया काव्यादौ निबन्धनीया । यथोक्तमभिनवगुप्तपादैः—'प्रत्याहारादेकविंशतेरङ्गकलापस्यात्रानुपयुक्तिः' इति । अनेनैवाभिप्रायेणोक्तं वसन्तराजीये—'यद्यप्यङ्गानि भूयांसि पूर्वरङ्गस्य नाटके । तेषामवश्यकर्तव्या नान्दी नन्दीश्वर-

---

उत्प्रेक्षते । कीदृशमिव ज्योतिः । स्पष्टं प्रकटं ललाटसंबन्धि लालाटं नेत्रं तृतीयचक्षुस्तद्व्याजेन तन्मिषेणाव्यक्तं व्यक्तं संपन्नं तथाभूतं व्यक्तीकृतं प्रकटीकृतमिव । पुनः कीदृशम् । जगद्व्यापि जगद्व्याप्नोति विषयीकरोति तत् । श्रीमद्भगवच्चक्षुष्युत्प्रेक्षातीव समीचीनेति हृदयम् । अनेनाद्यपद्यद्वयेन वेदान्तसिद्धान्तरहस्यं प्रकटयता कृष्णमिश्रेणाभिनेयं निरणायि ॥ २ ॥—नान्द्यभिनयेन कथां प्रस्तावयति—नान्द्यन्ते सूत्रधार इति । नान्दी नाम नाटकादौ पद्यादिरूपा । सूत्रधारो नाटकाचार्यः ।

प्रिया ॥' अत्र नान्द्यां कैश्चित्पदनियमोऽङ्गीकृतः—यथानर्घराघवादौ । कैश्चिन्नाङ्गीकृतः—यथा शाकुन्तलादौ । अत उक्तं सरस्वतीविलासे—'पदादिनियमोऽपि वा' इति । अत्र वाशब्दो विकल्पार्थः । अत्रापरो विशेषः । यदा पदसंख्यानियमस्तदा शङ्खचक्रादि शब्दचिह्ननियमः । यथोक्तमभिनवगुप्तपादैः—'नान्दी पदैर्द्वादशभिरष्टाभिर्वाप्यलंकृता । षड्भिः षोडशभिर्वापि चतुर्भिस्त्रिभिरेव वा ॥ अष्टादशपदा नान्दी द्वाविंशतिपदापि वा । शङ्खचक्राब्जचन्द्रेन्द्रचकोरैरवतंसिनी ॥ त्र्यस्रा वा चतुरस्रा वा तालमार्गानुसारिणी ॥' इति । अयमाशयः—त्र्यस्रतालानुसारेण त्रिपदा षट्पदा । चतुरस्रतालानुसारेण चतुष्पदा अष्टपदा षोडशपदा चेति । द्वादशपदाया नान्द्यास्त्र्यस्रतालानुसारित्वम् । अत ऊर्ध्वं षट्पदानां चतुरस्रतालानुसारित्वमिति विवेकः । अत्राद्याया नान्द्याः द्वाविंशतिपदात्मकत्वात्षोडशपदपर्यन्तं चतुरस्रतालानुसारित्वम् । अत ऊर्ध्वं षण्णां पदानां त्र्यस्रतालानुसारित्वमिति ज्ञेयम् । द्वितीयाया नान्द्याः द्वादशपदात्मकत्वाच्चतुरस्रतालानुसारित्वं त्रिचतुष्कात्मकत्वात्त्र्यस्रतालानुसारित्वं संभवतीति ज्ञेयम् । यथोक्तं सरस्वतीविलासे—'उभयतालानुसारित्वे श्रेयो भवति' इति । अनेनैवाभिप्रायेण ग्रन्थकारोऽपि नान्दीद्वयं तालद्वयानुसारित्वेन रचितवानिति ध्येयम् । पदनियमपक्ष एव चन्द्रादिपदनिबन्धनं नियमितमित्युक्तम् । अत एव ग्रन्थकारेण प्रथमनान्द्यां महःशब्देन प्रकाशवाचिना प्रकाशवाचि चन्द्रपदं स्मारितम् । तेन चन्द्रपदाङ्कनं सिद्धम् । द्वितीयनान्द्यां चन्द्रनामाङ्कनं स्पष्टम् । यथोक्तं भारतीविलासे—'चन्द्रनामाङ्किता नान्दी रसानां संयतो निधिः । स्फीते चन्द्रमसि स्फीता श्रीधृतिप्रीतिकीर्तिदा ॥' इति । अत्र संगिताचार्यैर्विशेष उक्तः—'नाट्यस्य क्रतुरूपत्वात्क्रत्यादौ विहिता च या । नान्दी सैवात्र विज्ञेया चाक्षुषी श्रवणप्रिया ॥' त्र्यस्रतालानुसारिणी 'आङ्गिकेनाभिनयेन सात्त्विकेन च चाक्षुषी' । 'गीतानुसारिणा पद्यरूपेण श्रवणप्रिया' इत्याह लिङ्गभूपालः। यद्यपि श्लोकद्वयमेकीकृत्य पादानां पदत्वस्वीकारेणाष्टापदा नान्दी कर्तुं शक्यते नान्यदेवाभिमतानुसारिणा । तत्तु न संमतमस्माकम् । भरताचार्यैरभिनवगुप्तपादाचार्यैश्चालिखितत्वात्। यथोक्तं भरते—'नमोऽस्तु सर्वदेवेभ्यो द्विजातिभ्यो नमोनमः । जितं सोमेन वै राज्ञा शिवं गोब्राह्मणाय च ॥ ब्राह्मोत्तरं तथैवास्तु हताः स्युर्ब्रह्मविद्विषः । प्रशान्तिरस्त्वां महाराज पृथिवी समुपासतात् ॥ राज्यं प्रवर्धतां रङ्गे स्योना सम्यक्प्रवर्धताम्' । स्योना समृद्धिः । प्रेक्षाकर्तुर्महान्धर्मो भवतु ब्रह्म भावितुम् ॥ काव्यस्य कर्तुः श्रोतुश्च धर्मोऽस्यापि प्रवर्धताम् । पृथिवी सस्यसंपन्ना दोषा यान्तु

---

क्त्वीति शेषः । तल्लक्षणं तु—'चतुरो नाट्यनिष्णातोऽनेकभूषासमावृतः । नानाभाषणतत्त्वज्ञो नाट्यशास्त्रार्थतत्त्ववित् ॥ नानागतिप्रचारज्ञो रसभावविशारदः ।

शमं सदा ॥ काले वर्षतु पर्जन्यः पृथ्वी राजन्वती तथा । देशोऽयं क्षोभरहितो ब्राह्मणाः सन्तु निर्भयाः ॥ नित्यं नैमित्तिकं कर्म ब्राह्मणानां प्रवर्धताम् । इष्ट्या च नित्यं चाक्षुष्या प्रीयतां देवता इति ॥' नचेदं शुभशंसनात्मकं भरतवाक्यमिति शङ्कनीयम् । भरताचार्यैः पञ्चमेऽध्याये नान्दीत्वेन निरूपितत्वादियं नान्दी बहुपादा च । अतो भरताचार्यैः पादानां पदत्वस्वीकारपक्षः पदनियमपक्षश्च नाङ्गीकृत इति विज्ञेयम् । अभिनवगुप्तपादैः पदनियमपक्ष एवाङ्गीकृत इत्युक्तं प्राक् । अतोऽस्माभिरपि तन्मतानुसारिभिः पादानां वाक्यानामपि नियमपक्षस्वीकारोऽतिकष्टतरः । पदशब्दस्य सुप्तिङन्तेनैव वृद्धव्यवहारात् न वाक्यं पदं नापि पादः । पदमिति नान्यदेवादिमतं हेयमिति । पदनियमपक्षे फलश्रुतिरपि—'नान्दी तु त्रिपदा ज्ञेया त्रिवर्गफलदायिनी । द्वाविंशतिपदा नान्दी भुक्तिमुक्तिप्रदायिनी ॥' अतश्च द्वादशपदायाः सर्वसौभाग्यदायित्वं भुक्तिप्रदत्वम् । द्वाविंशतिपदाया नान्द्याः भुक्तिमुक्तिप्रदत्वम् । ननु नान्द्यन्ते सूत्रधारः प्रविशतीति यदुक्तं तन्न संगच्छते । भरतवचनविरोधात् । यथोक्तं भरताचार्यैः—'त्र्यस्रं वा चतुरस्रं वा शुद्धं वा मिश्रमेव वा । प्रयुज्य रङ्गान्निष्क्रामेत्सूत्रधारः सहानुगः ॥ प्रविशेत्स्थापकस्त्वन्यः सूत्रधारगुणाकृतिः ॥' इति । अभिनवगुप्तपादैरप्यङ्गमुक्तम्—'प्रयुज्य विधिनैवं हि पूर्वरङ्गं प्रयोगतः । स्थापकः प्रविशेत्तत्र सूत्रधारस्य वेषभाक् ॥' इति । प्रयोगत इति चतुर्थ्यर्थे तसिः । प्रयोगार्थमित्यर्थः । यद्वा ल्यब्लोपे पञ्चमी । प्रयोगमवलम्ब्येत्यर्थः । दशरूपके—'पूर्वरङ्गं विधायादौ सूत्रधारे विनिर्गते । प्रविशेत्तद्वदपरः कार्यमास्थापयेन्नटः ॥' इति चेत्सत्यम् । श्रूयतां तर्हि दर्शनरहस्यम् । यदा तु सूत्रधार एव नान्दीं प्रयुङ्क्ते तदा स्थापकनामा सूत्रधारवेषधारी कश्चन प्रविशेत् । यदा नान्दीं कुशीलवाः प्रयुञ्जते तदा सूत्रधार एव प्रविशत इति । अनेनैवाभिप्रायेणोक्तं सरस्वतीविलासे—'यन्नाट्यवस्तुनः पूर्वरङ्गं विघ्नोपशान्तये । कुशीलवाः प्रकुर्वन्ति पूर्वरङ्गः स कीर्तितः ॥' इति । 'नान्द्यन्ते सूत्रधारस्तु नान्द्यर्थस्थापनापरः । भारतीं वृत्तिमाश्रित्य कुर्यात्प्रस्तावनाविधिम् ॥ प्रथमं पूर्वरङ्गश्च ततः प्रस्तावनेति च । आरम्भे सर्वनाट्यानामेतत्सामान्यमिष्यते ॥' अनेन ज्ञायते 'ऋतुं कंचिदुपाश्रित्य भारतीं वृत्तिमाश्रयेत्' इति । ऋतूपादानविधानमनियतं, भारतीवृत्त्युपादानं नियतमिति । भारतीवृत्तिर्नाम—'प्रयुक्तत्वेन भरतैर्भारतीति निगद्यते । सा वृत्तिः संस्कृतप्रायवाग्व्यापारो नयाश्रयः ॥ अङ्गान्यस्याश्च भरताश्चत्वारीति बभाषिरे ॥' इति । 'प्ररोचना मुखं चेति वीथीप्रहसने अपि ॥ प्रस्तावनोपयोगित्वान्नान्द्यन्ते सा प्रयु-

---

चेष्टोपचारचतुरो नानाशिल्पकलान्वितः ॥ छन्दोविधानतत्त्वज्ञः सर्वशास्त्रविचक्षणः । तत्तद्गीताद्यभिनयकलातालावधारणः ॥ अवधाय प्रयोक्ता च योक्तॄणामुपदेशकः । एवं

**सूत्रधारः**—अलमतिविस्तरेण । आदिष्टोऽस्मि सकलसामन्तचक्रचूडामणिमरीचिमञ्जरीनीराजितचरणकमलेन बलवदरिनि-

---

ज्यते ॥' अथ प्रस्तावनां विवक्षुस्तदङ्गभूतयोः प्ररोचनामुखयोः प्रथमं प्ररोचनाङ्गं तावदाह—**आदिष्टोऽस्मीत्यादि** । 'निवेदनं प्रयोज्यस्य निर्देशं देशकालयोः । काव्यार्थसूचकैर्वर्णैः सभायाश्चानुरञ्जनम् ॥ कविकाव्यनटादीनां प्रशंसा च प्ररोचना ॥' इति । आदिशब्देन वस्तुनायकयोर्ग्रहणम् । यद्यपि 'स्थापकस्तु सभां गत्वा नेपथ्याभिमुखो भवेत् । स्थापयेन्नाट्यवस्तूनि पात्राणां सूचयेदपि ॥' तथाप्यत्र नेपथ्याभिमुखं न विधीयते । परंतु पात्राणां प्रवेशार्थं कथावाक्यश्रवणं विधीयते । श्रवणं त्वाभिमुख्येनानाभिमुख्येन वा सिध्यतीत्याशयेन तदुपेक्षितम् । अभिमुख एव आभिमुख्यं विधीयते । ते आभिमुख्यमित्यन्वर्थसंज्ञाकरणसामर्थ्यात्तदुत्तरत्र स्मार्यते पात्रप्रवेशनार्थं 'सूत्रधारो नटीं ब्रूते' इति वचनादत्रैवाभिमुख्यकथनं न्याय्यमिति । पात्रप्रवेशसमय एव वक्ष्यते । नेपथ्याभिमुखमवलोक्येत्यादिष्ट आज्ञापितोऽस्मि गोपालेनेत्यन्वयः । आदिष्ट इत्यनेन प्रयोज्यनिवेदनं नाम प्ररोचनाङ्गं निरूपितम् । एतन्नाटकं त्वयाभिनेतव्यमित्यादेशाख्यापनं प्रयोज्यनिवेदनम् । **सकलेत्यादि** । सकलाः समस्ताः सामन्ताः प्रत्यन्तभूपालास्तेषां चक्राणि समूहास्तेषां चूडासु मुकुटेषु मणीनां पद्मरागादीनां मरीचिमञ्जरीभिः किरणसमूहैर्नीराजितं नीराजनवत्कृतं चरणकमलं यस्य तेन । नीराजितमित्यत्र घञन्तनीराजशब्दान्मतुवन्तात् 'तत्करोति—' इति णिचि कृते 'विन्मतोर्लुक्' इति लुकि कृते 'णाविष्ठवत्प्रातिपदिकस्य' इतीष्ठवद्भावे 'तुरिष्ठेमेयःसु' इति टिलोपे निष्ठान्तं रूपम् । यद्वा नितरां राजनं नीराजः । 'उपसर्गस्य घञ्यमनुष्ये बहुलम्' इति दीर्घः । सोऽस्य संजातः । तारकादेराकृतिगणत्वादितच् । यद्वा नीराजतेः कर्मणि क्तः । अत्रातिशयोक्तिरलंकारः । चरणकमले मरीचिमञ्जरीणां नीराजनत्वासंबन्धेऽपि संबन्धकथनादसंबन्धेऽपि संबन्धनिबन्धनातिशयोक्तिः । चरणकमलेनेत्यत्रोपमालंकारो रूपकसाधनप्रमाणाभावात् । अनयोः संसृष्टिस्तिलतन्दुलवदमिश्रणात् । मरीचिमञ्जरीणां नीराजनत्वेन परिणमनाद्वैयधिकरण्येन परिणामालंकारः । अनयोः संदेहसंकरः । **बलवदरीत्यादि** । बलवन्तो येऽरयः शत्रवस्तेषां निवहस्तस्य वक्षस्थलकपाटस्य पाटनेन

---

गुणगणोपेतः सूत्रधारोऽभिधीयते ॥' इति ॥—**अलमिति** । नान्दीपाठेनैव समयो न नेतव्य इति भावः ॥—**आदिष्टोऽस्मीति** । आदिष्टोऽस्म्याज्ञप्तोऽस्मि गोपालेनेत्यन्वयः । कीदृशेन गोपालेन । श्रीमता लक्ष्मीवता । लक्ष्मीवत आज्ञावश्यं विधे-

---

१ 'अरिपुञ्जवक्ष' इति पाठः ।

वहद्वक्षस्तटकपाटपाटनप्रकटितनृसिंहरूपेण प्रवलतरनरपतिकुलप्रलयमहार्णवनिमग्नमेदिनीसमुद्धरणमहावराहरूपेण सकलदिग्विलासिनीकर्णपूरीकृतकीर्तिलतापल्लवेन समस्ताशास्तम्बेरमकर्णतालास्फालन-

---

विदारणेन प्रकटितं प्रकाशितं नृसिंहरूपं यस्य तेन । अत्र नरः सिंह इवेत्युपमितसमासः । हरिपक्षे नरश्चासौ सिंहश्चेति कर्मधारयः । वलवदरिनिवहशब्देन हिरण्यकशिपुर्लक्ष्यते । वक्षस्तटं कपाटमिवेत्युपमितसमासः । अस्मिन्वाक्ये परंपरितरूपकम् । वलवदरिनिवहवक्षस्तटकपाटपाटनमेव वलवदरिनिवहवक्षस्तटकपाटपाटनमिति रूपकस्य नरासिंह इव नरसिंह इति रूपकं प्रति हेतुत्वेनोपादानात् । अत्रोपमारूपकयोरेकवाचकानुप्रवेशलक्षणः संकरः ॥ **प्रवलतरनरपतीत्यादि** । प्रवलतरा अतिप्रवलाः । 'द्विवचनविभज्य-' इत्यादिना तरप्प्रत्ययः । प्रवलतरा अनिवार्यास्ते च ते नरपतयश्च तेषां कुलं समूहः स एव प्रलयमहार्णवस्तत्र निमग्ना मेदिनी तस्याः समुद्धरणमुद्धारस्तत्र वराहरूपेण । अत्रापि परम्परितरूपकालंकारः । राज्ञो वराहरूपणं प्रति मेदिनीसमुद्धरणरूपस्य हेतुत्वेनोपादानाद्रूपकहेतुरूपकं परम्परितमिति लक्षणात् । कुलप्रलयमहार्णव इत्यत्र रूपकालंकारः । **सकलदिग्विलासिनीत्यादि** । सकलाः समस्ता दिश एव विलासिन्यो वनितास्तासां कर्णपूरीकृतः कर्णावतंसीकृतः । कर्णपूर आभरणविशेषः । अभूततद्भावे च्विः । कीर्तिपल्लवो येन सः । कीर्तिपल्लव इत्यत्र रूपकम् । कर्णपूरीकृतेत्यत्र परिणामालंकारः । अनयोरङ्गाङ्गिभावेन संकरः । परिणामरूपसंकरेणातिशयोक्तिरूपकसंकरः संकीर्यते । **समस्ताशास्तम्बेरमेत्यादि** । सम-

---

येति भावः । पुनः कीदृशेन । सकलाः सर्वे ये सामन्ता मण्डलेश्वरास्तेषां चक्रं समूहस्तस्य चूडामणयो मुकुटमणयस्तेषां मरीचिमञ्जर्यः किरणपरम्परास्ताभिर्नीराजितं चरणकमलं यस्य तादृशेन । पुनः कीदृशेन । बलवन्तो येऽरिपुञ्जाः शत्रुसमाजास्तेषां वक्षस्तटमेव कपाटं तस्य पाटने विदारणे प्रकटितं नरसिंहरूपं येन । पुनः कीदृशेन । प्रवलतराणि यानि नरपतिकुलानि तेषां प्रलयो विनाशः स एव महार्णवस्तस्मिन्मग्ना या मेदिनी तस्याः समुद्धरणे वराह इव वराहस्तेन । पुनः कीदृशेन । निखिलाः समस्ता दिग्रूपा विलासिन्यो वाराङ्गनास्तासां कर्णपूरः अकर्णपूरः कर्णपूरः संपन्नस्तथा कृतः कर्णपूरीकृतः श्रवणालंकारीकृतः कीर्तिलतापल्लवो येन । एतेन दिगन्तविश्रान्तकीर्तित्वं ध्वनितम् । पुनः कीदृशेन । समस्ता ये आशास्तम्बेरमा दिग्गजास्तेषां कर्णतालास्फालनेन वहलतरो यः पवनसंपातस्तेन नर्तितः प्रवर्तितः

---

१ 'नरसिंह' इति पाठः । २ 'वराहेण' इति पाठः । ३ 'निखिलवारिविलास' इति पाठः ।

बहलपवनसंपातनर्तितप्रतापानलेन श्रीमता गोपालेन। यथा खल्वस्य सहजसुहृदो राज्ञः कीर्तिवर्मदेवस्य दिग्विजयव्यापारान्तरितपरब्रह्मानन्दरसैरस्माभिः समुन्मीलितविविधविषयरसास्वाददूषिता इवातिवाहिता दिवसाः। इदानीं तु कृतकृत्या वयम्।

यतः

नीताः क्षयं क्षितिभुजो नृपतेर्विपक्षा
रक्षावती क्षितिरभूत्प्रथितैरमात्यैः।

---

स्ताः सर्वे आशास्तम्बेरमा दिग्गजास्तेषां कर्णतालाः कर्णा एव तालास्तेषामास्फालनं संघट्टनं तेन साधनेन वहलस्याधिकस्य पवनस्य वायोः संपातेनाघातेन। तदुत्थशब्देनेति यावत्। प्रनर्तितो नृत्तं कारितः। प्रज्वलित इति यावत्। प्रतापानलो यस्य सः। अत्राप्यतिशयोक्तिरलंकारः। प्रतापानलस्य दिग्गजकर्णजनितपवनसंवलनप्रज्वलनासंवन्धेऽपि संबन्धकथनात्प्रतापानलेति रूपकम्। अनयोः संसृष्टिः। श्रीमता महानुभावेन गोपालेन राज्ञा। अनेन नायकप्रशंसानाम प्ररोचनाङ्गं सूचितम्। किमादिष्टमिति तदाह—**यथा खल्वित्यादि**। गोपालवाक्यमेतत्। समुन्मीलितः समुद्रिक्तो नानाविधानां विषयाणां शब्दादीनां रसास्वादः प्रीतियुक्तोऽनुभवस्तेन दिवसा दूषिता इवातिवाहिता गमिताः। इदानीमस्मिन्काले विमर्शदशायां दूषिता इव प्रतिभान्तीत्यर्थः। अतः कृतकृत्या वयमिति। कीर्तिवर्मणि राज्यस्थापनात्स्वस्थचित्ता वयमित्यर्थः। वयमित्यत्र 'अस्मदो द्वयोश्च' इत्येकत्वे वहुवचनम्॥ **यत इत्यादि। नीता इति।** नृपतेः कीर्तिवर्मणो विपक्षाः क्षितिभुजो राजानः क्षयं विनाशं नीताः प्रापिताः।

---

प्रतापरूपोऽनलो यस्य तादृशेन। अनेन दिगन्तविश्रान्तप्रताप इति ध्वनितम्। आज्ञप्तोऽसीत्युक्तं तामाज्ञामेव दर्शयति—**यथेति**। खलु प्रसिद्धौ। अस्य सहजसुहृदः स्वभावकोमलस्य श्रीकीर्तिवर्मदेवनाम्नो राज्ञः, कीर्तिरेव कवचं यस्येति वा। तस्य यो दिग्विजयस्तद्व्यापारेणान्तरितो विलम्बितः परब्रह्मानन्दरसो येषां तादृशैरस्माभिः सम्यगुन्मीलिताः सम्यगनुभूता विविधा अनेकप्रकारा विषयाः स्रगादयस्तेषां रसस्पर्शेनानन्दानुभवेन दूषिता इव विषयसुखस्य हेयत्वाद्दिवसा अतिवाहिता अतिक्रान्ताः। कृतकृत्यतां दर्शयति—**यत इति। नीता इति।** नृपतेर्विपक्षा वैरिणः क्षितिभुजो भूमिपालाः क्षयं नीताः प्रापिताः। प्रथितैः ख्यातैरमात्यैर्मन्त्रिभिः क्षिती रक्षावत्यभूत्। अस्य नृपतेर्भुवि साम्राज्यं विहितं कृतम्। कीदृशम्। क्षिति-

---

१ 'बहलतर' इति पाठः। २ 'रसस्पर्शदूषिता' इति पाठः।

साम्राज्यमस्य विहितं क्षितिपालमौलि-
मालार्चितं भुवि पयोनिधिमेखलायाम् ॥ ३ ॥

तद्वयं शान्तरसप्रयोगाभिनयेनात्मानं विनोदयितुमिच्छामः। ततो यत्पूर्वमस्मद्गुरुभिस्तत्रभवद्भिः श्रीकृष्णमिश्रैः प्रबोधचन्द्रोदयं नाम नाटकं निर्माय भवतः समर्पितमासीत् तदद्य राज्ञः श्रीकीर्तिवर्मणः पुरस्तादभिनेतव्यं भवता। अस्ति चास्य भूपतेः सपरिषदे-

क्षितिरपि रक्षावत्यभूत्। प्रथितैः प्रसिद्धैरमात्यैः पयोधिमेखलायां भुव्यस्य कीर्तिवर्मणो राज्ञः क्षितिपालमौलिमालार्चितं साम्राज्यं सम्राजो भावः साम्राज्यं विहितं कृतम्। अस्माभिरिति शेषः। यत इत्यारभ्य इच्छाम इत्यन्तेन ग्रन्थेन काव्यार्थसूचकैर्वचनैः सभारञ्जनात्मकं प्ररोचनाङ्गमुक्तम्। तथा हि 'नीताः क्षयं क्षितिभुजो नृपतेर्विपक्षा' इत्यनेन विवेकमहाराजस्य महामोहादिजयः सूचितः। 'रक्षावती क्षितिरभूत्प्रथितैरमात्यैः' इत्यनेन यमाद्यष्टाङ्गयोगैरन्तःकरणशुद्धिः सूचिता। 'साम्राज्यमस्य विहितम्' इत्यनेन पुरुषस्य स्वरूपलाभरूपं सायुज्यं सूचितम्। अर्थात्साध्यभूतसायुज्यकथनेन साधनभूतः प्रबोधचन्द्रोदयोऽपि सूचितः ॥ ३ ॥ कृतकृत्यप्रयोजनमाह—**तद्वयमित्यादिना**। शान्तरसप्रधानो यः प्रयोगाभिनयो नाट्यानुकारस्तेनेत्यर्थः। आत्मविनोदोपायमाह—**तत इत्यादिना**। तत् अद्येति पृथग्वाक्यम्। यत् कृष्णमिश्रैस्तत्रभवद्भिर्महानुभावैः। अन्वर्थसंज्ञेयम्। नाम प्रसिद्धौ। वक्ष्यमाणनाटकलक्षणलक्षितं नाटकं निर्माय भवतः समर्पितमासीत्। अत्र कृष्णमिश्रैस्तत्रभवद्भिरिति कविप्रशंसा प्रबोधचन्द्रोदयं नाम नाटकमिति काव्यप्रशंसा च भवत इति। अनेनाभिमुख्यवाचिना नटप्रशंसा। तदद्येत्यनेनैतावन्तं कालं तूष्णीं स्थितस्य नाटकस्येदानीमुपयोगकालः संवृत्त इति सूचितम्। **तदद्येत्यादि**। तत्तस्मात्कारणात्। अद्यास्मिन्दिने। अद्येति कालनिर्देशाख्यमङ्गम्, शान्तरसप्रधाननाटकाभिनयस्य शमोदयकाल एव कालः। पुरस्तादिति निर्देशाख्यमङ्गम्। **अस्ति चेत्यादि**। सपरिषद इति सभा-

पालानां मौलिमाला मुकुटश्रेणयस्ताभिरर्चितं पूजितम्। कीदृश्यां भुवि। पयोनिधयः सागरा एव मेखलाः परिखा यस्यां सा तस्याम् ॥ ३ ॥ कृतकृत्यताप्रयोजनमाह—तद्वयमित्यादिना। शान्तरसप्रायः शान्तरसप्रधानो यः प्रयोगाभिनयो नाट्यानुकारस्तेनेत्यर्थः। आत्मविनोदोपायमाह—तद्यदिति। तत्रभवद्भिः पूज्यैः।

१ 'रसप्रायप्रयोगा' इति पाठः। २ 'तद्यत्पूर्वं तत्रभवद्भिः' इति पाठः। ३ 'परिषदोऽवलोकने' इति पाठः।

स्तदवलोकने कुतूहलमिति। तद्भवतु। गृहं गत्वा गृहिणीमाहूय[1] संगीतकमनुतिष्ठामि[2]। (परिक्रम्य नेपथ्याभिमुखमवलोक्य।) आर्ये, इतस्तावत्।

(प्रविश्य नटी।)

---

प्रशंसा। तद्भवत्वित्यात्मगतम्। **गृहं गत्वेति।** गृहं नेपथ्यम्। गृहिणीं नटीमाहूय संगीतकमनुतिष्ठामि रचयामि। संगीतकशब्देन स्थानकभूमिकयोः परिग्रहः। यथोक्तं भरते—'रङ्गसंचारिपात्राणां स्थानकं भूमिकां विदुः। स्त्रीणां रङ्गोपविष्टानां गानं संगीतकं विदुः॥ मषीवर्णादिरचनां स्थानकं तद्विदो विदुः॥ आदिशब्देन पुस्तकभूषाङ्गरचनासंजीवरूपं चतुर्विधमाहार्यं संगृहीतम्—'पुस्तं प्रदर्शितं नाट्ये विमानाद्रिवनादिकम्। कुण्डलादिस्तु भूषाङ्गं रचना त्वङ्गलेपनम्॥ सजीवपशुपक्ष्यादिप्राणिनां रूपधारणम्॥' इति। **परिक्रम्येति।** परिक्रमणमभिनयविशेषः। **नेपथ्याभिमुखमवलोक्येति।** नेपथ्यं नाम सूत्रधारकुटुम्बगृहम्। तदुक्तं भरते—'सूत्रधारकुटुम्बस्य गृहं नेपथ्यमुच्यते' इति। तन्निर्माणप्रकारोऽपि तत्रैव कथितः—'चतुःषष्टिकरां भूमिं द्विधाभूतां ततः पुनः। पृष्ठतो भूमिभागो यो द्विधाभूतस्य तस्य तु॥ तस्याप्यधो विभागेन रङ्गशीर्षं प्रकल्पयेत्। पश्चिमेन विभागेन नेपथ्यगृहकल्पना॥' इति। नेपथ्यस्याभिमुखं यथा भवति तथावलोक्य। तां दिशमिति शेषः। इति प्ररोचना॥ यथामुखं निरूप्यते—**आर्ये, इतस्तावदिति।** यथोक्तम्—'सूत्रधारो नटीं ब्रूते मारिषं वा विदूषकम्। स्वकार्यं प्रस्तुताक्षेपी विचित्रैर्वचनैस्तथा॥ विचित्रैरुचितैर्वापि यत्रेदं प्राहुरामुखम्॥' इति। प्रस्तुताक्षेपी प्रस्तुतस्य वस्तुनो नाट्यस्याक्षेपो यथा भवति तथा ब्रूते व्यक्तवाचा कथयति। अत एव सूचनां विनैव पात्रस्य प्रवेशः॥—**प्रविश्य नटीत्यादि।** छाया नाम प्राकृतादिभाषाणां संस्कृतभाषैव। तदुक्तं वृत्तिकारेण—'प्राकृतं तद्भवं देश्यं तत्समं चेत्यतस्त्रिधा। तत्समं संस्कृतसमं ज्ञेयं संस्कृतलक्षणात्॥ देश्यमार्षसदक्षत्वात्स्वतन्त्रत्वाच्च भूयसा। लक्ष्म नापेक्षते तस्य संप्रदायो हि लौकिकः॥ प्रकृतेः संस्कृतात्साध्यमानात्सिद्धाच्च यद्भवेत्। प्रकृतस्यास्य लक्ष्मानुरोधि लक्ष्म प्रचक्ष्महे॥ छाया गीर्वाणवाण्या षड्‍ सर्वलोकसमान्विताः। प्रतिभान्ति सतां श्रीदा गायत्र्या इव कुक्षयः॥' इति। अतश्च छायाधारत्वाच्छायात्वव्यपदेशो गीर्वाणवाण्या

---

अत्रभवत्तत्रभवच्छब्दौ पूजार्थौ। परिक्रम्येत्यन्तं सुगमम्। नेपथ्यं नान्द्याः पाठाय पटीबन्धः॥—प्रविश्य नटीति। वदतीति शेषः। किं वदति। एषास्मि। आज्ञा-

---

१ 'गृहिणीं समाहूय' इति पाठः। २ 'संगीतकर्मानुतिष्ठामि' इति पाठः।

नटी—*एसह्मि । आणवेदु अय्यउत्तो[1] को णिओओ अणुचिट्ठियदु त्ति ।

सूत्रधारः—आर्ये, विदितमेव भवत्याः[2] ।

अस्ति प्रत्यर्थिपृथ्वीपतिविपुलबलारण्यमूर्च्छत्प्रताप-
ज्योतिर्ज्वालावलीढत्रिभुवनविवरो विश्वविश्रान्तकीर्तिः ।
गोपालो भूमिपालान्प्रसभमसिलतामात्रमित्रेण[3] जित्वा
साम्राज्ये कीर्तिवर्मा नरपतितिलको येन भूयोऽभ्यषेचि ॥४॥

---

* एषास्मि । आज्ञापयत्वार्यपुत्रः को नियोगोऽनुष्ठीयतामिति ।

---

इति वृद्धव्यवहारोपपत्तिरिति विज्ञेयम् ॥—अय्यउत्त इति । 'स्त्रीविदूषकबालानां शूद्राणां प्राकृतं वचः' इति नव्याः प्राकृतभाषायां प्राप्तायां 'यर्यां जः' इति सरेफस्य यकारस्य जकारे प्राप्ते कथं द्वित्तयकारः । उच्यते । 'प्रायेण प्राकृतस्थाने शौरसेनी विधीयते' इति वचनाच्छौरसेनी भाषा विहिता । तत्र 'र्यो य्यः' इति सूत्रेण सरेफस्य यकारस्य द्वित्तयकारः । अत अय्यउत्त इति रूपसिद्धिः ॥—आहेति शेषः । एवं सर्वत्रोह्यम् । आर्ये, विदितमेव भवत्याः । 'मतिबुद्धि-' इत्यादिना षष्ठी ॥—अस्तीत्यादि । अस्ति गोपालो नाम राजा । कीदृशः । प्रत्यर्थिपृथ्वीपतीनां शात्रवमहीभुजां विपुलबलान्येवारण्यानि तत्र मूर्च्छद्व्याप्नुवानं यत्प्रतापज्योतिः प्रतापाग्निस्तस्य ज्वालाभिः कीलाभिरवलीढान्याच्छादितानि त्रिभुवनस्य त्रैलोक्यस्य विवराण्यवकाशा यस्य स तथोक्तः । विश्वस्मिन्विश्रान्ता चरन्ती कीर्तिर्यस्य सः । स च पुनः कीदृशः । भूमिपालान्कर्णादीनसिलतामात्रमित्रेण खड्गैकसहायेन गोपालेन प्रसभं जित्वा कीर्तिवर्मा नरपतितिलकः साम्राज्ये भूपः पुनरभ्यषेच्यभिषिक्तः । अत्रावलगितं नामामुखाङ्गं निरूपितम् । तल्लक्षणं तु—'अप्रस्तुतार्थकथनात्क्रियते सूचितं तु यत् । पात्रस्य

---

पयत्वार्यपुत्रः को नियोगोऽनुष्ठीयतामिति ॥—कथं विदितमित्याह—अस्तीति । गोपालोऽस्तीति योजना । कीदृशो गोपालः । प्रत्यर्थिनो रिपवो ये पृथिवीपतयस्तेषां विपुलं बहलं बलं सैन्यं तदेवारण्यं तस्मिन्मूर्च्छन्वृद्धिं प्राप्नुवन्यः प्रतापः स एव ज्योतिस्तस्य ज्वालयावलीढमाक्रमितं त्रिभुवनविवरं येन सः । पुनः कीदृशः । विश्वस्मिन्विश्रान्ता विख्याता कीर्तिर्यस्य । स कः । येन कीर्तिवर्मा नरपतितिलको

---

१ 'अज्जउत्तो' इति पाठः । २ 'भवत्या' इति तृतीयान्तः पाठः । ३ 'मित्रमात्रेण' इति पाठः ।

अपि च

अद्याप्युन्मदयातुधानतरुणीचञ्चत्करास्फालन-
व्यावल्गन्नृकपालतालरणितैर्नृत्यत्पिशाचाङ्गनाः ।
उद्गायन्ति यशांसि यस्य विततैर्नादैः प्रचण्डानिल-
प्रक्षुभ्यत्करिकुम्भकूटकुहरव्यक्तै रणक्षोणयः ॥ ५ ॥

---

वस्तुनो वापि नाम्नावलगितं हि तत् ॥' अत्र वस्तुसूचनम् । तथाहि । गोपालो भूमिपालान्कर्णादीञ्जित्वा कीर्तिवर्माणं नरपतिं साम्राज्ये स्थापितवान् इत्यनेनाप्रस्तुतकथनेन विवेको महाराजो महामोहमुख्यान्रिपूञ्जित्वा पुरुषाख्यं स्वामिनं स्वाराज्ये प्रबोधरूपे स्थापितवानिति प्रस्तुतार्थसूचनात् ॥४॥—अद्यापीत्यादि ।
उन्मदानां मत्तानां यातुधानतरुणीनां चञ्चच्छोभमानं कराणां हस्तानामास्फालनमन्योन्यसंघट्टनं तेन व्यावल्गन्ति प्रेङ्खन्ति च तानि नृकपालानि च तान्येव तालाः कांस्यनिर्मिततालविशेषा घट्टनसंज्ञकास्तेषां रणितैर्ध्वनिभिर्नृत्यन्त्यः पिशाचाङ्गना यासु रणक्षोणिषु ताः, प्रचण्डानिलेन क्षुभ्यन्ति करिकुम्भा एव कूटानि पर्वतशिखराणि तेषां कुहराणि गह्वराणि तेषु व्यक्तैरभिव्यक्तैर्विततैर्मुखरैर्नादैर्यस्य यशांस्यद्याप्युद्गायन्ति इत्येतत्सर्वं विदितं भवत्या इत्यन्वयः । उद्गानं नाम नृत्यतालानुकारि गानम् । यथोक्तमभिनवगुप्तेन—'नृत्यतालानुकारि स्याद्गानमुद्गानमुच्यते' इति । अत्र समासोक्तिरलंकारः । रणक्षोणिषु गायकस्त्रीत्वारोपणेन लौकिके वस्तुनि नाटकीयवस्तुसमारोपात् । 'विशेषणानां तौल्येन यत्र प्रस्तुतवर्णनात् । अप्रस्तुतस्य गम्यत्वं सा समासोक्तिरिष्यते ॥' इति । अतिशयोक्तिरप्यत्रालंकारः । क्षोणीनामुद्गानासंबन्धेऽपि संबन्धोक्त्या असंबन्धे

---

भूयः साम्राज्येऽभ्यपेच्यभिषिक्तः । किं कृत्वा । असिलतैव खड्गवल्लयेव मित्रं सहायस्तन्मात्रेण भूमिपालान्प्रसभं हठेन जित्वा । खड्ग एव तस्य सहायो नान्य इत्यर्थः ॥ ४ ॥—तस्य कीर्त्यन्तरमप्याह—अपि चेति । अद्यापीति । रणक्षोणयः संग्रामभूमयः । विततैर्विस्तृतैर्नादैः शब्दैरद्यापीदानीमपि यस्य यशांस्युद्गायन्ति । कीदृशैर्नादैः । प्रचण्डानिलेन महावायुना प्रक्षुभ्यन्तो ये करिणस्तेषां कुम्भा गण्डस्थलानि तेषां कूटं समूहस्तस्य कुहराणि विलानि तेषु व्यक्तैः प्रकटैः वायुपूर्णानि हस्तिकुम्भस्थलानि शुष्काणि ध्वनन्तीति भावः । पुनः कीदृशैः । उन्मदा उत्कृष्टमदयुक्ता या यातुधानतरुण्यो राक्षसस्त्रियस्तासां चञ्चन्तो दीप्तिमन्तो ये करास्तेषामास्फालनं परस्पराघातः करतालिकारूपस्तेन व्यावल्गन्ति चञ्चलानि यानि नृकपालानि तान्येव ताला वाद्यविशेषास्तेषां रणितानि शब्दितानि

तेन च शान्तपथप्रस्थितेनात्मनो विनोदार्थं प्रवोधचन्द्रोदयाभिधानं नाटकमभिनेतुमादिष्टोऽस्मि । तदादिश्यन्तां भरता वर्णिकापरिग्रहाय ।

**नटी**—(सविस्मयम् ।)*अज्जउत्त, अच्चरिअं[1] अच्चरिअं । जेण तधाविहणिअभुअवलविक्कमैक्कणिब्भच्छिदसअलराअमण्डलेण आयण्णाकिट्ठकठिणकोअण्डदण्डवहलवरिसन्तसरणिअरजेज्जरिदतुरंअतरंअमालं[2] णिरन्तरणिवडन्ततिक्खविसिखनिक्खित्तमहस्सपज्जत्थतु-[3]

* आर्यपुत्र, आश्चर्यमाश्चर्यं । येन तथाविधनिजभुजबलविक्रमैकनिर्भर्त्सितसकलराजमण्डलेन आकर्णाकृष्टकठिनकोदण्डदण्डबहुलवर्षच्छरनिकरजर्जरिततुरङ्गतरङ्गमालम्, निरन्तरनिपतत्तीक्ष्णविशिखनिक्षिप्तमहास्त्रपर्यस्तो-

संवन्धनिवन्धना वैयधिकरण्यनिबन्धना । परिणामालंकारो वा । नादानां यशोविषयोद्गानरूपेण परिणमनात् ॥ ५ ॥—तेनेत्यादि सविस्मयमित्यन्तं सुगमम् । एतावता किं स्यात्तत्राह—**तेन चेति** । अभिनेतुमभिनयेन प्रसादयितुम् । अभिनयप्रदर्शने किमपेक्ष्यते तदाह—तदादिश्यन्तामिति । भरता नटाः । वर्णिकापरिग्रहाय नटवेशपरिग्रहाय ॥—'आयण्णायट्टः' इत्यत्र 'टस्य ठः' इति सूत्रेण टकारस्य ठकारः । योगविभागान्नित्यं ठकार इति वृत्तिकारः । अतोऽठत्वं चिन्त्यम् । आयण्णायट्टेत्यादि विशेषणत्रयेण रूपकात्मकेन सेनायाः समुद्रसाम्यमुक्तम् । मधुमथनेत्युपमालंकारः । मन्दराहिहादेति शौरसेनी भाषा । तस्यां शौरसेन्यां 'अधावतोस्तोः' इति तकारस्य दकारः । प्राकृते तु प्रायो लुक् ।

येषु कीदृश्यो रणक्षोणयः । नृत्यन्त्यः पिशाचाङ्गना यासु ताः । इति गानविशेषो ध्वनितः । 'ततं वीणादिकं वाद्यमानद्धं मुरजादिकम् । वंशादिकं तु सुषिरं कांस्यतालादिकं घनम् ॥' इत्यमरः ॥ ५ ॥—एतावता किं स्यात्तत्राह—तेन चेति । अभिनेतुमभिनयेन प्रसादयितुम् । अभिनयप्रदर्शने किमपेक्ष्यते तदाह—तदादिश्यन्तामति । भरता नटाः । वर्णिकापरिग्रहणाय नटवेषपरिग्रहाय । नटी प्राकृतं—अज्जेति छाया । [ नटी—आर्यपुत्र, आश्चर्यमाश्चर्यम् । येन तथा निजभुजबलविक्रमैकनिर्भर्त्सितसकलराजमण्डलेनाकर्णाकृष्टकठिनकोदण्डदण्डवहलवर्षच्छरनिकरजर्जरीकृततुरङ्गतरङ्गमालं निरन्तरनिपतत्तीक्ष्णविक्षिप्तशस्त्रसहस्रपर्यस्तोत्तुङ्गमातङ्गमहामहीधर-

१ 'अच्चरिअं अच्चरिअम्' इति पाठः । २ 'जज्जरीकिततुरअ' इति पाठः । ३ 'तिक्खविक्खित्तशस्त्र' इति पाठः ।

ङ्गमाअङ्गमहामहीहरसहस्सं भमन्तभुअदण्डमन्दराहिहादघुमन्तस-
अलपत्तिसलिलसंघादं कण्णसेणासाअरं णिम्महिअ महुमहणेणेव
खीरसमुद्दं आसादिदा समरविजअलच्छी। तस्स संपदं सअलमुणि-
अणसलाणिज्जओ कहं एरिसो उवसमो संवुत्तो।

सूत्रधारः—आर्ये, निसर्गसौम्यमेव ब्राह्मं ज्योतिः कुतोऽपि

---

तुङ्गमातङ्गमहामहीधरसहस्रम्, भ्रमद्भुजदण्डमन्दराभिघातघूर्णमानसकलप-
त्तिसलिलसंघातम्, कर्णसेनासागरं निर्मथ्य मधुमथनेनेव क्षीरसमुद्रमासादिता
समरविजयलक्ष्मीः। तस्य सांप्रतं सकलमुनिजनश्लाघनीयः कथमीदृश
उपशमः संवृत्तः।

---

'कगचजतदपयवाम्' इति सूत्रेण तकारस्य लोपः। तकारलोपे शिष्टस्याकारस्य
'यश्रुतिरः' इति सूत्रेण यकारश्रुतिर्भवति। एवमुत्तरत्र भाषाद्वयमूह्यम्। विशे-
षोऽस्ति चेदुच्यत एव॥—सूत्रधारः। **आर्ये इत्यादि**। आर्ये, ब्राह्मं ब्रह्म-
संबन्धि। 'ब्राह्मो जातौ' इति निपातः। ज्योतिस्तेजः स्वभावसौम्यं कुतोऽपि
कारणादित्यादिना मृदवं नामामुखाङ्गं सूचितम्। कुतोऽपि कारणात्प्राप्तविकारमि-

---

सहस्रं भ्रमद्भुजदण्डचण्डमन्दरभिघातघूर्णत्सकलपत्तिसलिलसंघातं कर्णसैन्यसागरं निर्म-
थ्य मधुमथनेनेव क्षीरसमुद्रमासादिता समरविजयलक्ष्मीः। तस्य सांप्रतं सकलमुनि-
जनश्लाघनीयवीरचरितस्य कथमीदृश उपशमः संवृत्तः।] आर्यपुत्र, आश्चर्यमाश्चर्यम्।
येन समरविजयलक्ष्मीरासादिता प्राप्तेति प्राकृतप्रान्ते प्राकृतान्वयः। किं कृत्वा।
कर्णसैन्यसागरं निर्मथ्य। केन कमिव। मधुमथनेन श्रीकृष्णेन क्षीरसमुद्रमिव। यथा
क्षीरसागरं निर्मथ्य श्रीकृष्णेन लक्ष्मीर्लब्धा एवं तेन राज्ञेत्यर्थः। किंभूतेन। येन
मधुमथनेन च। कथा तेनोक्तप्रकारेण निजभुजबलविक्रमेणैकेन निर्भर्त्सितं सकलं
राजमण्डलं येन। कीदृशं कर्णसैन्यसागरम्। आकर्णाकृष्टः कठिनो यः कोदण्डदण्ड-
स्तस्माद्वर्षन्यः शरनिकरो बाणसमूहस्तेन जर्जरीकृतास्तुरंगास्त एव तरङ्गमाला
यस्मिन्। पुनः कीदृशम्। निरन्तरं निपतन्ति तीक्ष्णानि विक्षिप्तानि इतस्ततः पति-
तानि शस्त्राणां सहस्राणि अपरिमितानि शस्त्राणि तैः पर्यस्ता विध्वस्ता उत्तुङ्गा ये
मातङ्गाः करिणस्त एव महामहीधराः पर्वतास्तेषां सहस्रं यस्मिन्। पुनः कीदृशम्।
भ्रमन् यो भुजदण्डः स एव चण्डो मन्दरस्तदभिघातेन घूर्णन्तः सकला ये पत्तयस्त
एव सलिलसंघातो जलसमूहो यस्मिन्। तस्य सांप्रतं सकलमुनिजनश्लाघनीयवी-
रचरितस्य कथमीदृश उपशमः संवृत्तः॥ आर्ये इति। निसर्गसौम्यं स्वभावसौम्यम्।

कारणात्प्राप्तविकारमपि पुनः स्वभावमेवावतिष्ठते । यतः सकलभूपालकुलप्रलयकालाग्निरुद्रेण चेदिपतिना समुन्मूलितं चन्द्रान्वयपार्थिवानां पृथिव्यामाधिपत्यं स्थिरीकर्तुमयमस्य संरम्भः । पश्य तदा

कल्पान्तवातसंक्षोभलङ्घिताशेषभूभृतः ।
स्थैर्यप्रसादमर्यादास्ता एव हि महोदधेः ॥ ६ ॥

---

त्यनेन स्वभावसिद्धगुणानामगुणताप्रतीतेः 'दोषा गुणा गुणा दोषा यत्र स्युर्मृदवं हि तत्' इति तल्लक्षणात् ॥—यत इति । चेदिपतिना कर्णभूपेन चन्द्रान्वयपार्थिवानां श्रीकीर्तिवर्मप्रभृतीनाम् । अन्यत्स्पष्टम् । तदेव सदृष्टान्तमाह—पश्येत्यादि । आलोचयेत्यर्थः । 'पश्यार्थैश्चानालोचने' इति सूत्रेण पश्यतिधातोरालोचनमप्यर्थ इति गम्यते । एवमुत्तरत्रापि द्रष्टव्यम् ॥ तदेति । यदा पूर्वातिक्रमस्तदेत्यर्थः ॥ कल्पान्तेति । कल्पान्तसमयेऽपि समुद्रस्य स्वरूपमात्रस्य क्षोभो न तु स्थैर्यादीनां क्षोभः । अत उक्तं ता एवेति । स्वभावसिद्धा इत्यर्थः । एवकारेणागन्तुकगुणनिरासः । हि प्रसिद्धौ । अनेन गोपालस्यापि शत्रुसंहरणसमयेऽपि स्थैर्यादिगुणास्त एवेति गम्यते । अनेन त्रिगतं नामामुखाङ्गमुक्तम् । 'श्रुतिसाम्यादनेकार्थयोजनं त्रिगतं मतम्' इति लक्षणात् । श्रुतिसाम्यं द्वेधा । वर्णपदादिश्रुतिर्ध्वनिश्रुतिश्चेति । वर्णपदादिश्रुतावुल्लेखनं ध्वनिश्रुतावर्थान्तरख्यापनमिति विवेकः ॥ अत्र स्थैर्यप्रसादमर्यादाश्रुतिसाम्यादनेकार्थयोजनात्त्रिगतम् । तदेव दृष्टान्तान्तरेण द्रढयति—[कल्पान्तेति ।] यथा तथापि कल्पान्तसमये प्रलयसमये संक्षोभः क्षोभस्तेन लङ्घिता अशेषभूभृतः समस्तपर्वता येन स तथोक्तः । तस्य महोदधेः समुद्रस्य स्थैर्यप्रसादमर्यादास्ता एव पूर्वसिद्धा एव । अयमर्थः । यदा समुद्रस्य प्रलयसमये संक्षोभवशात्सर्वपर्वतानाक्रान्तवतः तस्मिन्समये न स्थैर्यप्रसादमर्यादादयः प्रलयसमयापाये पुनस्त एव स्थैर्यमर्यादादयो गुणाः प्रादुर्भवन्ति, तथा गोपालस्यापि स्वभावतः शान्तस्य कार्यस्य कार्यवशाच्छौर्यादिविकारसंभवेऽपि समस्तान्समाक्रान्तवतोऽपि राज्ञः कार्यनिर्वाहानन्तरं पुनः स्व-

---

एतेन ब्रह्मणि स्वभावनैर्मल्यं प्रदर्श्याविद्याकृतं विकारं दर्शयति—सकलेति । सकला ये भूपालास्तेषां कुलं तत्र प्रलयकालाग्निरिव रुद्रः क्रूरस्तेन चेदिदेशाधिपतिना राज्ञा शिशुपालेन समुन्मूलितं समुत्पाटितं सोमवंशानां राज्ञां कीर्तिवर्मप्रभृतीनां रक्षितॄणामाधिपत्यं स्थिरीकर्तुमयमस्य संरम्भः क्रोधो नैमित्तिको न स्वाभाविकः ॥—अमुमर्थं प्रकारान्तरेणाह—कल्पान्तेति । कल्पान्ते यो वातस्तेन संक्षोभ उच्छलनं तेनोल्लङ्घिता अशेषभूभृतः पर्वता येन तस्य महोदधेः समुद्रस्य ता एव प्रकृतिभूता एव स्थैर्यप्रसादमर्यादाः स्थैर्यं निश्चलता, प्रसादः स्वच्छता, मर्यादा वेलानुल्लङ्घनम्

अपिच । भगवन्नारायणांशसंभूता भूतहिताय तथाविधाः पौरुषभूषणाः पुरुषाः क्षितिमवतीर्य निष्पादितकृत्याः पुनः शान्तिमेव प्रपद्यन्ते । यथा परशुराममेवाकलयतु भवती तावत् ।

येन त्रिःसप्तकृत्वो नृपबहुलवसामांसमस्तिष्कपङ्क-
प्राग्भारेऽकारि भूरिच्युतरुधिरसरिद्वारिपूरेऽभिषेकः ।
यस्य स्त्रीबालवृद्धावधिनिधनविधौ निर्दयो विश्रुतोऽसौ
राजन्योच्चांसकूटक्रथनपटुरटद्धोरधारः कुठारः ॥ ७ ॥

---

भावकोपशमनादिगुणप्राप्तिर्भवत्येवेति ॥ ६ ॥—अपिचेत्यादिना जामदग्न्य इत्यन्तेन । [ येनेति । ] त्रिःसप्तकृत्वः तिस्रः क्रियाया अभ्यावृत्तयस्त्रिः । 'द्वि-त्रिचतुर्भ्यः सुच्' इति सुच्प्रत्यये सप्तक्रियाभ्यावृत्तयः सप्तकृत्वः । 'संख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच्' इति कृत्वसुच्प्रत्ययः । ततो विशेषणसमासः । त्रिश्च सप्तकृत्वश्च त्रिःसप्तकृत्व इति । एकविंशतिवारानित्यर्थः । नृपाणां क्षत्रि-याणां बहुलवसाभिरस्थिगताभिर्वपाभिः मांसैर्मस्तिष्कैर्मेदोभिरेव पङ्कैः प्राग्भारे उत्कृष्टे भूरि यथा तथा च्युतानि । नृपगलेभ्य इति गम्यते । रुधिराणि तेषां सरितो नद्यस्तासां वारिपूरे जलपूरे । रक्तप्रवाह इत्यर्थः । अभिषेकोऽकारि कृतः । महानुभावानां प्रतिज्ञानतुल्लङ्घनमेव धर्मशास्त्रानुसारीति रक्तनद्यवगाहनं धर्मशास्त्रविरुद्धमिति न मन्तव्यम् । यस्य स्त्रीबालेत्यादि । यस्य परशुरामस्य कुठार इत्यन्वयः । कुठारः परशुः । स्त्रीबालवृद्धावधि स्त्रियो योषितः, बालाः, शिशवः, वृद्धा अशीत्यूर्ध्ववयस्कास्तेऽवधिरवसानं यस्य सः । तान्विहायेत्यर्थः । अत एव त्रिःसप्तकृत्वो हननं सेत्स्यति । स चासौ निधनविधिस्तस्मिन्निर्दयः । 'नि-रादयः क्रान्ताद्यर्थे पञ्चम्या' इति समासः । निधनकर्तुः परशुरामस्य निर्दयत्व-

---

॥ ६ ॥—तथाविधास्तादृशाः पुरुषाः पुनः शान्तिमेव प्रपद्यन्ते प्राप्नुवन्ति । किं कृत्वा । क्षितिं प्रति अवतीर्य । किमर्थम् । भूतहिताय पौरुषमेव पुरुषार्थ एव भूषणं येषां ते । तथा निष्पादितान्युरूणि महान्ति कृत्यानि यैः ॥—येनेति । सोऽपि स्ववीर्यादित्यनेन युग्मम् । सोऽपि श्रीमाञ्जामदग्न्यो मुनिस्तपोभिः प्रशा-न्तकोपज्वलनः सन् शाम्यति शान्तिं गच्छति । किं कृत्वा । नृपाणां कुलं समुत्खाय समुत्पाट्य, भूमेर्भारं स्ववीर्यात्स्वसामर्थ्यादवतार्य चेति योजना द्वितीय-श्लोकस्य । अनेन कृतकृत्यता दर्शिता । स कः—येन त्रिःसप्तकृत्व इति । त्रिःसप्तकृत्व एकविंशतिवारं भूरि च्युतं यद्रुधिरं तस्य या सरित्तस्या वारिपूरेऽभिषेकः स्नानं तर्पणं-

---

१ 'निष्पादितोरुकृत्याः' इति पाठः । २ 'बहलवसा' इति पाठः । ३ 'त्रुटन' इतिपाठः ।

सोऽपि स्ववीर्यादवतार्य भारं भूमेः समुत्खाय कुलं नृपाणाम् ।
प्रशान्तकोपज्वलनस्तपोभिः श्रीमान्मुनिः शाम्यति जामदग्न्यः॥८॥

तथायमपि कृतकर्तव्यः संप्रति परमामुपशमनिष्ठां प्राप्तः ।

येन च

विवेकेनेव निर्जित्य कर्णं मोहमिवोर्जितम् ।

---

मचेतने कुठार उपचर्यते । निधनसाधनभूतो विश्रुतो जगत्प्रसिद्धः । भवत्यापि श्रुत इति यावत् । भूतस्यापि प्रत्यक्षायमानतयासाविति निर्देशः । राजन्यानां क्षत्रियाणामुच्चा अंसाः कूटाः पर्वतशिखराणीव । उपमितसमासः । तेषां त्रुटने छेदने पटु समर्थं यथा भवति तथा रटन्ती शब्दायमाना घोरा भयंकरी रक्तकर्दमितत्वाद्धारा यस्य सः ॥ ७ ॥—एवं कार्यवशाद्वीररसायनेकरसाक्रान्तस्य परशुरामस्य पुनः स्वभावसिद्धां शान्तिरसप्रत्यासत्तिं दर्शयति—**सोऽपीत्यादिना** । वीराद्यनेकरसाक्रान्तोऽपि श्रीमान्पूज्यो मुनिर्जामदग्न्यः परशुरामः स्ववीर्यात्स्वपराक्रमान्नृपाणां राज्ञां कुलं समुत्खायोन्मूल्य । संहृत्येत्यर्थः । भूमेर्भारमवतार्य प्रशमय्य । अत्र पाठक्रमो न विवक्षितः । 'अग्निहोत्रं जुहोति' 'यवागूं पचति' इत्यादिवत्पाठक्रमादर्थक्रमस्य बलीयस्त्वात् । प्रशान्तकोपज्वलनः सन् तपोभिः प्रशाम्यति प्रशान्तो भवति । अत्र क्रोधस्यौपाधिकत्वादुपाधिप्रशमनेन तत्र प्रशमनं युक्तमिति भावः ॥ ८ ॥ दृष्टान्तसिद्धमर्थं दार्ष्टान्तिके योजयति—**तथायमपीत्यादि** । अयं गोपालः कृतं कर्तव्यं कीर्तिवर्मप्रतिष्ठापनात्मकं स्वकीयं च येन सः संप्रतीदानीं परामुत्कृष्टामुपशमनिष्ठामुपशमैकतानत्वं प्राप्तः प्रयातः ॥ पात्रप्रवेशसूचनं कथोद्घातमामुखाङ्गं प्रस्तौति—**येन च । विवेकेनेत्यादि** । अस्यायमर्थः । यदा विवेकेन महाराजेन महामोहाख्यं रिपुं निर्जित्य प्रबोधोदयः कृतः । तथा गोपालेन कर्णाख्यं राजानं निर्जित्य कीर्तिधर्मनृपतेरुदयः कृत इति । इवशब्दत्रितयप्रयोगस्तूपमानोपमेयावयवानामपि सादृश्य-

---

चाकारि कृतम् । कीदृशे वारिपूरे । नृपाणां राज्ञां बहलो भूयान्वसा शुद्धमांसस्नेहश्च मांसं च मस्तिष्कपङ्कः ललाटान्तर्गतो धातुश्च एतानि प्राग्भारे तीरे यस्य तादृशे । पुनः स कः । यस्यासौ कुठारः परशुः । स्त्रियश्च बालाश्च वृद्धाश्च तान्येवावधिस्तदवधि यन्निधनं मारणं तद्विधौ तस्मिन्कर्तव्ये निर्दयोऽतिकठिनः विश्रुतः ख्यातः । कीदृशः कुठारः । राजन्यानामुच्चा येंऽसाः स्कन्धास्तेषां कूटं समुदायस्तस्य क्रथने विनाशे पटुः कुशला रटन्ती शब्दायमाना घोरा भयानका धारा यस्य ॥ ७ ॥ ८ ॥ दार्ष्टान्तिकमाह—तथायमिति । विवेकमोहयोर्जयपराजयाभिनयनेन नाट्यं रचयितुं संगतिमारचयति—येनेति । विवेकेनेति । येनोर्जितं बलवन्तं कर्णं निर्जित्य श्री-

श्रीकीर्तिवर्मनृपतेर्बोधस्येवोदयः कृतः ॥ ९ ॥

(नेपथ्ये ।)

आः पाप शैलूषाधम, कथमस्मासु जीवत्सु स्वामिनो[1] महामोहस्य विवेकसकाशात्पराजयमुदाहरसि ।

सूत्रधारः—(ससंभ्रमं विलोक्य ।) आर्ये, इतस्तावत् ।

उत्तुङ्गपीवरकुचद्वयपीडिताङ्ग-
मालिङ्गितः पुलकितेन भुजेन रत्या ।
श्रीमाञ्जगन्ति मदयन्नयनाभिरामः
कामोऽयमेति मदघूर्णितनेत्रपद्मः ॥ १० ॥

---

प्रतीत्यर्थः । अत एवापातप्रतिपत्त्यारोपोत्पत्तिः प्रयोजनम् । अत्र कथोद्धाताख्यमामुखाङ्गं निरूपितम् । तथाचोक्तम्—'त्रीण्यङ्गान्यामुखस्यास्य कथोद्धातः प्रवृत्तकः । प्रयोगातिशयश्चेति पात्रक्षेपस्य हेतवः ॥ स्वेतिवृत्तसमं वाक्यमर्थं वा यत्र सूत्रिणः । गृहीत्वा प्रविशेत्पात्रं कथोद्धातो द्विधैव सः ॥' अत्रार्थं गृहीत्वा प्रवेशः । 'विवेकेन विनिर्जित्य कर्णं मोहमिवोर्जितम् । श्रीकीर्तिवर्मनृपतेर्बोधस्येवोदयः कृतः ॥' इति सूत्रधारेणोक्ते सति ॥९॥—उत्तुङ्गेत्यादि । उत्तुङ्गावुन्नतौ पीवरौ पीनौ पयोधरौ स्तनौ ताभ्यां पीडितमङ्गं यस्मिन्कर्मणि तत् । मदनस्येति शेषः । क्रियाविशेषणमेतत् । गाढमालिङ्गित इत्यर्थः । पुलकितेन भुजेनेति सात्त्विकभावो निर्दिष्टः । रतिरत्र कर्त्री । श्रीमान्माहात्म्यवान् जगन्ति लोकान्मदयन् । पञ्चभिर्बाणैरिति शेषः । नयनाभिरामो नेत्रोत्सवदः । अतिसुन्दर इत्यर्थः । कामो मन्मथः अयं परिदृश्यमान एति समीपमागच्छति । मदेन मद्यपानजनितेन विकारेण घूर्णिते कलुषीकृते विकृतिं गते नेत्रपद्मे यस्य सः । युक्तायुक्तविवेकशून्य-

---

कीर्तिवर्मनृपतेरुदय उत्कर्षः कृतः । तत्र दृष्टान्तः । यथा विवेकेनेवात्मयाथात्म्यज्ञानेनेव संसारमूलकारणमिव निर्जित्य बोधस्येवात्मसाक्षात्कारस्येवोदयः कृतः ॥ ९ ॥ मोहं जित्वेति, बोधस्येवोदयः इति च श्रुत्वा मोहपक्षीयो नटाध्यक्षमधिक्षिपति । नेपथ्ये । आः पापेति । शैलूषाधम नटाधम ॥—उत्तुङ्गेति । अयं काम एति समायाति । कीदृशः कामः । पुलकितेन रोमाञ्चितेन भुजेन रत्योत्तुङ्गमत्युच्चं पीवरं मांसलं यत्कुचद्वयं तेन पीडितमङ्गं यथा भवति तथा आलिङ्गितः । पुनः कीदृशः कामः । श्रीमाञ्शोभावान् जगन्ति सचेतनानि मदयन्मत्तानि कुर्वन् । तथा नयनयोरभिरामः । तथा मदेन घूर्णिते नेत्रकमले यस्य सः भ्रान्तनेत्रः ॥ १० ॥

---

१ 'असत्स्वामिनो' इति पाठः ।

मद्वचनाचायमुपजातक्रोध ईव लक्ष्यते । तदपसरणमेवास्माकमितः श्रेयः । (इति निष्क्रान्तौ ।) प्रस्तावना ।

(ततः प्रविशति यथानिर्दिष्टः कामो रतिश्च ।)

कामः—(सक्रोधम्। आः पापेति पुनः पुनः पठित्वा ।)ननु रे भरताधम,

प्रभवति मनसि विवेको विदुषामपि शास्त्रसंभवस्तावत् ।
निपतन्ति दृष्टिविशिखा यावन्नेन्दीवराक्षीणाम् ॥ ११ ॥

इति यावत् ॥ १० ॥—मद्वचनादित्यादि । वस्तुतो विवेकशून्यः मद्वचनमपि श्रुतवानिति चकारार्थः । अयमित्यत्यन्तसंनिहितोऽभूदिति शीघ्रमेव पलायनं कर्तव्यमित्ययंशब्दं प्रयुञ्जानस्य भावः । उपसंजातक्रोध इव लक्ष्यते । अस्माखिति शेषः । मद्विषयकक्रोध इव लक्ष्यत इतीवशब्दार्थः । तदपसरणमित्यादि । तत्तस्माद्धेतोरस्माकमितः प्रदेशादपसरणं पलायनमेव श्रेयः प्रशस्यतरम् । 'द्विवचनविभज्योपपदे तरबीयसुनौ' इतीयसुन्प्रत्ययः 'प्रशस्यस्य श्रः' इति श्रादेशः । सकारान्तं नपुंसकलिङ्गं श्रेयः । नान्यः प्रकारः संभाव्यत इत्येवकारार्थः । अस्माकमिति बहुवचनेन सर्वेषामस्मदीयानामयमर्थो द्योत्यत इत्येवमभिसंधायेत्यर्थः । निष्क्रान्तौ निर्गतौ । नटीसूत्रधाराविल्यर्थः । प्रस्तावना साङ्गा निरूपितेत्यर्थः । 'अङ्गेनान्यतमेनैषां पात्रमाक्षिप्य सूत्रधृक् । अनन्तरं तु निष्क्रामेदेषां प्रस्तावना मता ॥' एषामामुखाङ्गानां कथोद्घातप्रवर्तकप्रयोगातिशयानां मध्य इत्यर्थः । कथामुपक्षिपति—तत इति । ततः सूत्रधारविनिर्गमनानन्तरं कामः प्रविशति । यद्यपि महामोहामात्यानां मध्ये यस्यकस्यापि विष्कम्भपात्रता संभवत्येव तथापि कामस्य सर्वामात्यत्वं मुख्यं सृष्टिप्रवर्तकत्वरूपं श्रुतिसिद्धम् । तथाच श्रुतिः—'कामस्तदग्रे समवर्तताधि मनसो रेतः प्रथमं यदासीत्' इति । मनसो रेतः मनसः पुत्र इत्यर्थः । अत्र विष्कम्भेण कथोपक्षेप उक्तः ॥—प्रभवति मनसीत्यादि । शास्त्रसंभवो विदुषामपि मनसि विवेकस्तावत्प्रभवति । यावदिन्दीवराक्षीणां दृष्टिविशिखा न निपतन्तीत्यन्वयः । शास्त्रादुपनिषदः संभवो यस्येति पञ्चमीव्यधिकरणबहुव्रीहिः । यद्वा शास्त्रमुपनिषत्संभव उत्पत्तिस्थानं यस्य विवेक-

---

प्रस्तावना कथासंगतिः । तल्लक्षणम्—'अर्थस्य प्रतिपाद्यस्य कथा प्रस्तावना मता' इति । यथानिर्दिष्ट इति । पूर्वश्लोक इति शेषः । आः पाप शैलूषाधमेति । पूर्वफक्किकामिति शेषः । भरताधम नटाधमेत्यर्थः ॥—प्रभवतीति । विदुषामपि पण्डितानामपि मनसि शास्त्रसंभवो विवेकः तावत्पर्यन्तं प्रभवति समुत्पद्यते । तावत्कथम् । यावत्पर्यन्तमिन्दीवराक्षीणां कमललोचनानां दृष्टिविशिखाः कटाक्षरूपा बाणा न पतन्ति

---

१ 'क्रोधो लक्ष्यते' इति पाठः । २ 'पापेति पठित्वा' इति पाठः ।

अपिच

रम्यं हर्म्यतलं नवाः सुनयना गुञ्जद्विरेफा लताः
प्रोन्मीलन्नवमल्लिकाः सुरभयो वाताः सचन्द्राः क्षपाः ।
यद्येतानि जयन्ति हन्त परितः शस्त्राण्यमोघानि मे
तद्भोः कीदृगसौ विवेकविभवः कीदृक्प्रबोधोदयः ॥ १२ ॥

रतिः—*अज्जउत्त, गुरुओ क्खु महाराअमहामोहस्स पडिवक्खो विवेओ त्ति तक्केमि ।

कामः—प्रिये, कुतस्तवेदं स्त्रीस्वभावसुलभं विवेकाद्भयमुत्पन्नम् । पश्य ।

---

* आर्यपुत्र, गुरुः खलु महाराजमहामोहस्य प्रतिपक्षो विवेक इति तर्कयामि ।

---

स्येति । दृष्टिविशिखाः दृष्टयो विशिखा इव निशिताः । मोहकारका इति यावत् । यद्वा दृष्टय एव विशिखा इति रूपकम् । अनयोरुपमारूपकयोः साधकबाधकप्रमाणाप्रतीतेः संदेहे संकरः ॥११॥—आत्मतुष्ट्यवधिकत्वादहंकारकथनस्य पुनः प्रागल्भ्यं प्रकटयति—अपिचेत्यादिना । रम्यमिति । नवा आरूढयौवनाः । द्विरेफशब्दो लाक्षणिकः भ्रमरशब्दलक्षकत्वात् । भ्रमरशब्दो रेफद्वयवान् तेन लक्षितलक्षणया भ्रमरार्थबोधको द्विरेफशब्दः । तथा वामनसूत्रम् 'लक्षणशब्दश्च' इति । अत्राह वृत्तिकारः 'द्विरेफरोदनशब्दौ भ्रमरचक्रवाकार्थौ' इति । यद्येतानि जयन्तीत्यसंशये संशयोक्तिः 'यदि वेदाः प्रमाणम्' इतिवत् । जयन्त्येवेत्यर्थः । कीदृगिति किंशब्द आक्षेपे । विवेकविभवः प्रबोधोदयश्च निरूपयितुं दुःशक्य इत्यर्थः॥१२॥—प्रिये इत्यादि । कुत इत्यादिक्षेपे । स्त्रीस्वभावो भीरुत्वं तेन

---

तासां कटाक्षप्रक्षेपैरन्धीभूतमिव सचेतनं भवतीति भावः ॥ ११ ॥—रम्यं हर्म्यतलमिति । एतानि मे ममामोघानि सफलानि शस्त्राणि परितो जयन्ति यदि सर्वोत्कृष्टानि यदि वर्तन्ते । भोः शैलूषाधम, तत्तदा असौ वर्णितो यो विवेकस्तस्य विभवः सामर्थ्यं कीदृक्, अथ प्रबोधोदयश्च कीदृक् । द्वयमपि न संभवतीति भावः । एतानि कानि तान्याह—रम्यमिति । हर्म्यस्य धनिनां गृहस्य तलं भूमिः, नवा नूतनाः, सुनयनाः सुलोचनाः, गुञ्जन्तः शब्दं कुर्वन्तो द्विरेफा भ्रमरा यासु तादृश्यो लताः, प्रोन्मीलन्त्यो विकसनशीला नवा मल्लिका मालत्यः, सुरभयो वाताः सुगन्धा वायवः, सचन्द्राः क्षपा निशाः एतानि मम शस्त्राणि ॥ १२ ॥—रतिरिति । वदतीति शेषः । [ आर्यपुत्र, गुरुः खलु महाराजमहामोहस्य प्रतिपक्षो विवेक इति तर्कयामि ।

अपि यदि विशिखाः शरासनं वा कुसुममयं ससुरासुरं तथापि ।
मम जगदखिलं वरोरु नाज्ञामिदमतिलङ्घ्य धृतिं मुहूर्तमेति ॥१३॥

तथाहि—

अहल्यायै जारः सुरपतिरभूदात्मतनयां
प्रजानाथोऽयासीदभजत गुरोरिन्दुरबलाम् ।
इति प्रायः को वा न पदमपथेऽकार्यत मया
श्रमो मद्बाणानां क इव भुवनोन्माथविधिषु ॥ १४ ॥

---

सुलभं भयहेतुमाशङ्क्य परिहरति । पश्यालोचय । अवधेहीति यावत् ॥—**अपि-यदीति** । अपि यदि यद्यपि विशिखा बाणाः, शरासनं कोदण्डः कुसुममयं कुसुमैर्निर्मितम् । विकारार्थे मयट् । विशिखा अपि कुसुममयाः । लिङ्गवचनविपरिणामः । वाशब्दः समुच्चये मधुकरमौर्व्याद्यनुक्तं समुच्चिनोति । तथापि ससुरासुरमखिलमिदं जगत् हे वरोरु, ममाज्ञामतिलङ्घ्य धृतिं मुहूर्तं क्षणमात्रमपि नैति न प्राप्नोति ॥१३॥ तदेवाह—**तथाहि । अहल्यायै जार इति** । अहल्याया जार इत्यर्थः । अहल्यायै जार इति पाठः श्रुत्यनुकरणत्वात्संगतः । संभोगं कृतवानित्यर्थः । गुरोर्बृहस्पतेरबलाम् । पत्नीमित्यर्थः । अपथेऽमार्गे । 'पथो विभाषा' इति समासान्तः । पदं स्थानं पादप्रक्षेपं वा नाकार्यत । 'हृक्रोरन्यतरस्याम्' इत्यणिकर्तुः कर्मत्वम् । सर्वोऽपि कारित एवेत्यर्थः । तदेव स्फोरयति । श्रमो मद्बाणानामिति । क इव । इवेति वाक्यालंकारे । उन्माथविधिषु उन्माथो मथनं मर्दनम् ॥१४॥

---

त्वं स्त्रीस्वभावसुलभं भयं मा कुरु । अहमपि समर्थोऽस्मीत्याह—**अपि यदि विशिखा इति** । अपि यदि यद्यपि विशिखाः शराः, शरासनं धनुः एतद्द्वयं कुसुममयं वर्तते, तथापि ससुरासुरं सुरासुरैर्देवदैत्यैः सह वर्तते तत्ससुरासुरमखिलं सर्वमिदं जगत् भो वरोरु ममाज्ञामतिलङ्घ्योल्लङ्घ्य धृतिं धैर्यं मुहूर्तं क्षणमपि नैति न प्राप्नोतीति ॥ १३ ॥—उक्तमर्थं प्रकटयति—**तथाहि अहल्याया जार इति** । सुरपतिरिन्द्रोऽहल्याया गौतमपत्न्या जार उपपतिरभूत् । प्रजानां नाथो ब्रह्मा आत्मतनयां शतरूपामयासीत्स्वपुत्रीं प्रति गतः । मिथुनीभावं प्राप्त इत्यर्थः । इन्दुः शशाङ्को गुरोर्बृहस्पतेरबलां स्त्रियमभजत सिषेवे । इत्येवंप्रकारेण प्रायोऽतिशयेन मया को वा पुमान्पुरुषार्थी अपथेऽमार्गे पदं स्थानं नाकार्यत । किंतु सर्वोऽपि कारित एवेत्यर्थः । किमधिकं वाच्यम् । भुवनानामुन्माथ उन्मादस्तद्विधिषु तत्कर्तव्यतासु

---

१ 'अहल्याया जारः' इति पाठः ।

रतिः—*अज्जउत्त, एव्वं[1] णेदं । तहवि महासहाअसंपण्णो संकिदव्वो अरादी । जदो अस्स जमणिअमप्पमुहा अमच्चा महाबलाः सुणी अन्दि ।

कामः—प्रिये, यानेतान्राज्ञो विवेकस्य बलवतो यमादीनष्टा[2]वमात्यान्पश्यसि त एते नियतमस्माभिरभियुक्तमात्रात्[3]प्रागेव विघटिष्यन्ते । तथाहि—

अहिंसा कैव कोपस्य ब्रह्मचर्यादयो मम ।
लोभस्य पुरतः केऽमी सत्याऽस्तेयापरिग्रहाः ॥ १ ॥

यमनियमासनप्राणायामप्रत्याहारध्यानधारणासमाधयस्तु निर्वि-

---

* आर्यपुत्र, एवं नैतत् । तथापि महासहायसंपन्नः शङ्कितव्योऽरातिः । यतोऽस्य यमनियमप्रमुखा अमात्या महाबलाः श्रूयन्ते ।

---

रतिरित्यादि । आर्यपुत्र, एवं नैतत् । एव्वं णेदमित्यत्र शौरसेनी भाषा । तथापि महासहायसंपन्नः शङ्कितव्योऽरातिः । यतोऽस्य यमनियमप्रमुखा अमात्या महाबलाः श्रूयन्ते । एतावत्स्पष्टम् ॥—यानेतानित्यादि । विवेकस्य बलसंपन्नस्य यमादीनमात्यान्पश्यसि जानासि । यमादिभिरमात्यैर्बलवत्त्वं विवेकस्यालोचयसि । यद्वा बलवत इत्यमात्यविशेषणम् । अभियुक्तमात्रादेव । अभियोगो वैरप्रतियोगित्वम् । आग्रह इति यावत् ॥—अहिंसेत्यादि । कोपस्य पुरतः कैवाहिंसा । अहिंसायाः स्वरूपमेव नास्तीत्यर्थः । हिंसा नाम परप्राणवियोजनं, तदभावोऽहिंसा । मम । कामस्येत्यर्थः । लोभो नाम परद्रव्यापहारेच्छा । सत्यं यथार्थवादित्वम् । अस्तेयं चौर्याभावः । अपरिग्रहो दुष्प्रतिग्रहाभावः॥१५॥—यम इत्यादि । यमः कायचेष्टानिरोधः । नियमो मनश्चेष्टानिरोधः । आसनं धर्माधर्मक्षेपणम् ।

---

मदीया ये बाणास्तेषां श्रमः क इव । न कोऽपीत्यर्थः ॥ १४ ॥ [ रतिः—आर्यपुत्र, एवं नन्वेतत् तथापि महासहायसंपन्नः शङ्कितव्योऽरातिः । यतोऽस्य यमनियमप्रमुखा अमात्या महाबलाः श्रूयन्ते । ]—अभियुक्तमात्राः (मात्रात्प्रातिकूल्याद्रागेव ) कृताभियोगा द्रागेव झटित्येव विघटिष्यन्ते विवेकाद्भेदं प्राप्स्यन्ति ॥ अहिंसेति । कोपस्याहिंसा कैव । न कापीत्यर्थः । मम कामस्य ब्रह्मचर्यादयः के । न केऽपीत्यर्थः । अमी सत्यास्तेयापरिग्रहा लोभस्य पुरतः के । न केऽपीत्यर्थः । एतावता एते सुखेन जेतुं शक्या इति भावः ॥ १५ ॥—यमादेः किं कार्यमत आह—यमेति । ईषत्करं सुकरं समुन्मूलनं नाशो येषां ते । एतेषां विजये उपायान्त-

---

१ 'ण्णेदं । तथावि' इति पाठः । २ 'यमादीनमात्यान्' इति पाठः । ३ 'मात्राद्रागेव' इति पाठः ।

कारचित्तैकसाध्यत्वादीषत्करसमुन्मूलना एव । अपि च स्त्रिय एवामीषां कृत्यास्तेनैतेऽसद्गोचरा एव वर्तन्ते । यतः—

सन्तु विलोकनभाषणविलासपरिहासकेलिपरिरम्भाः ।
स्मरणमपि कामिनीनामलमिह मनसो विकाराय ॥ १६ ॥

विशेषतश्चैते मदमात्सर्यदम्भलोभादिभिरसत्स्वामिवल्लभैरभियुज्यमाना नरपतिमन्त्रिणोऽधर्ममेवाश्रयिष्यन्ते ।

---

तत्परित्याग इत्यर्थः । यद्वा 'आस उपवेशने' इत्यस्माद्धातोर्वेदान्तवाक्येषूपवेशनम् । वेदान्तवाक्यविचारोद्योग इत्यर्थः । यद्वा आसनं सिद्धासनपद्मासनादिकं प्राणान्तरवायूनां प्राणादीनामासमन्तात्सर्वनाडीषु निरोधः । सुषुम्नायां प्रवेशनमिति यावत् । प्राणादीनां मनसः सह संयमनं प्राणायामः । प्रत्याहारो मनसो विषयादिभ्यो निवृत्तिः । ध्यानमात्मचिन्तनम् । धारणं तस्यैव चिन्तनस्य कंचित्कालमनुवृत्तिः । समाधिः सम्यगाध्यानम् । ध्येयवस्तुनि मनसश्चिरकालानुवृत्तिः । सजातीयविजातीयप्रत्ययतिरस्कारेण निर्विकारचित्तैकसाध्यत्वात् । यमादीनां चित्तविकारस्यासदधीनत्वात्तत्समुन्मूलनं सुकरमेवेति भावः । ईषत्करं सुकरं समुन्मूलनं येषां ते तथोक्ताः । 'ईषदुःसुषु—' इत्यादिना खल् प्रत्ययः । **अपिच स्त्रिय एवेत्यादि** । अमीषां यमादीनां स्त्रियः कान्ता एव कृत्या डाकिन्यः । संहर्त्र्य इत्यर्थः । तेन कारणेनैते यमादयोऽसद्गोचरा एव । साधितप्राया एवेत्यर्थः । अत्र हेतुमाह—**यत इति ।—सन्त्विति** । सन्तु । तिष्ठन्तु नामेत्यर्थः । विलोकनं नायिकानायकयोरन्योन्यदृष्टिमेलनम् । भाषणमन्योन्यसंलापः । विलासो नायकस्य पुरस्ताल्लीलाप्रदर्शनम् । परिहासश्चतुरनर्मोक्तिः । केलिर्जलक्रीडादिः । परिरम्भ आलिङ्गनम् । इह नायके पुरुषे शान्तरसप्रधाने मनसो विकाराय स्मरणमेवालं समर्थम् । अस्मिन्नाटके प्रधानभूतः शान्तरसो विष्कम्भे सूचित इति ध्येयम् ॥१६॥—विशेषतः । किंचेत्यर्थः । एते यमनियमादयः । मदः परानभिज्ञत्वेन मनोगर्वः । मात्सर्यं परगुणेर्ष्या । लोभः परद्रव्यस्पृहा । आदिशब्देन प्रमादालस्यविप्रलिप्सादयो गृह्यन्ते ।

---

रमाह—स्त्रिय एवेति । असद्गोचरा असदधीनाः ॥ अधीनत्वे हेतुमाह—यत इति । सन्त्विति । विलोकनमवलोकनम्, भाषणं मधुरालापः, विलासो विभ्रमः, परिहासकेलिर्नर्मकथाक्रीडा, परिरम्भ आलिङ्गनम्, इमानि सन्तु तिष्ठन्तु । कामिनीनां स्मरणमपि मनसो विकाराय विकारं कर्तुमलं समर्थम् ॥ १६ ॥ किं बहुना । तेऽसदृशे स्थास्यन्त्येवेत्याह—विशेषतश्चेति । अभियुज्यमाना

---

१ 'दम्भादिभिः' इति पाठः । २ 'मन्त्रिणमधर्ममेवाश्रयिष्यन्ति' इति पाठः ।

रतिः—* अज्जउत्त, सुदं मए तुह्माणं विवेअसमदमप्पहुदीणं[1] च एक्कं उप्पत्तित्थाणं ति ।

कामः—आः प्रिये, किमुच्यत एकमुत्पत्तिस्थानमिति । ननु जनक एवास्माकमभिन्नः । तथाहि—

संभूतः प्रथममहेश्वरस्य[2] सङ्गान्मायायां मन इति विश्रुतस्तनूजः ।
त्रैलोक्यं सकलमिदं विसृज्य भूयस्तेनाथो जनितमिदं कुलद्वयं नः १७

तस्य च प्रवृत्तिनिवृत्ती द्वे धर्मपत्न्यौ । तयोः प्रवृत्त्यां समुत्पन्नं महामोहप्रधानमेकं कुलम् । निवृत्त्यां च द्वितीयं विवेकप्रधानमिति ।

---

* आर्यपुत्र, श्रुतं मया युष्माकं विवेकशमदमप्रभृतीनां चैकमुत्पत्तिस्थानमिति ।

---

अस्मत्स्वामिवल्लभैर्महामोहस्य प्रियैराप्तैरभियुज्यमानाः प्रतियोधत्वेन निरूप्यमाणा नरपतेर्विवेकस्य राज्ञो मन्त्रिणोऽमात्या अधर्ममेव महामोहाभिमतमेवाश्रयिष्यन्ते ॥—**रतीत्यादि**।—**काम इत्यादि**। किमुच्यत इति । किमित्याक्षेपे । उत्पत्तिस्थानमेकं न भवतीत्यर्थः। तदेवाह—**नन्विति**। नन्वित्यामन्त्रणे।एवकारेण जननीव्यावृत्तिः ॥—**संभूत इति**। महेश्वरस्य ब्रह्मणः प्रथमं सङ्गान्मायाया स्तनूजो मन इति विश्रुतः तेन मनसा इदं त्रैलोक्यं सकलं स्थावरजङ्गमात्मकं विरच्य निर्माय भूयो बहुतरम्। विचित्रमित्यर्थः। अदो नः कुलद्वयं जनितम्। तथाच श्रुतिः—'तुच्छयेनाभ्वपिहितं यदासीन्मनसस्तन्महिना जायतैकम् । कामस्तदग्रे समवर्तताधि मनसो रेतः प्रथमं यदासीत्' इति। 'नैवेह किंचनाग्र आसीत्। मृत्युनैवेदमावृतमासीत् । अशनायया अशनाया हि मृत्युस्ततो कुरुतात्मन्विद्धम्' इति च ॥१७॥ **तस्येत्यादि**। तस्य मनसः प्रवृत्तिर्नाम औदासीन्यस्य प्रच्युतिरात्मधर्मो मनोधर्मो वा। निवृत्तिरौदासीन्य औपचारिको धर्मः। अविद्याशबलित-

---

आज्ञाप्यमानाः नरपतिर्महामोहस्तन्मन्त्रिणमधर्मम्। अधर्ममूला मोहादयः। [रतिः—श्रुतं मया युष्माकं शमदमविवेकप्रभृतीनां चैकमुत्पत्तिस्थानमिति ।]—आः आर्ये, एकमपि कर्तृत्वादाश्चर्यम्। तदेवाह—**तथाहीति**। **संभूत इति**। ईश्वरस्य परमात्मनः सङ्गात्संबन्धान्मायायामविद्यायां मन इति तनूजः पुत्रो विश्रुतो लोकप्रसिद्धः प्रथममादौ संभूत उत्पन्नः। तेन मनसेदं सकलं त्रैलोक्यं विसृज्य विशेषतः सृष्ट्वा अथोऽनन्तरं भूयोभूयो वारंवारमिदं प्रसिद्धं नोऽस्माकं कुलद्वयं जनितं महामोहप्रधानं

---

१ 'समदमविवेअपहुदीणं' इति पाठः । २ 'प्रथममिहेश्वरस्य' इति पाठः ।

रतिः—*अज्जउत्त, जइ एव्वं ता किंणिमित्तं तुह्माणं सोअराणंवि परोप्परं एआरिसं वैरम् ।

कामः—प्रिये,

एकामिषप्रभवमेव सहोदराणा-
मुज्जृम्भते जगति वैरमिति प्रसिद्धम् ।
पृथ्वीनिमित्तमभवत्कुरुपाण्डवानां
तीव्रस्तथा हि भुवनक्षयकृद्विरोधः ॥ १८ ॥

सर्वमेवैतज्जगदस्माकं[1] पित्रोपार्जितं तच्चास्माभिस्तातवल्लभतया[2]

* आर्यपुत्र, यद्येवं तत्किंनिमित्तं युष्माकं सोदराणामपि परस्परमेतादृशं वैरम् ।

ब्रह्मस्वरूपात्प्रवृत्तिनिवृत्त्योर्मनसः सहचरत्वात् । भोगसाधनत्वाद्धर्मपत्नीत्वव्यपदेशः । शेषमतिरोहितार्थम् ॥—रतिः । एवमित्यर्धाङ्गीकारे ॥—एकामिषेति । एकामिषमेकभोग्यम् । आमिषशब्दो लक्षणया भोग्यवस्तुपरः । तत्प्रभवं वैरं सोदराणामेव । सामान्यमुक्त्वा विशेषत एकामिषप्रभवत्वं विरोधस्य सदृष्टान्तमाह—कुरुपाण्डवानामपि पृथ्वीनिमित्तम् । पृथ्वीरूपं निमित्तमवलम्ब्येत्यर्थः । यद्वा क्रियाविशेषणमेतत् । तथाहि सोदराणामेव न भवति अपि तु भुवनस्य राजलोकस्यापि क्षयकृदभूदित्यर्थः ॥ १८ ॥ प्रकृते योजयति—सर्वमेवेत्यादि । अस्माकमिति । प्रवृत्तिसन्तानस्येत्यर्थः । पित्रा मनसा । अस्माभिः कामप्रभृतिभिः । तातवल्लभतया मनोवल्लभतया । तेषां निवृत्तिसन्तानरूपाणां । विरलः क्वाचित्कः । योगिजनैकनियतत्वादित्यर्थः । कथंपुनर्भवद्भिरेव सर्वस्वमाक्रान्तमिति चेत्तत्राह—

विवेकप्रधानं च ॥ १७ ॥ तदेवाह—तयोरिति । [ रतिः—आर्यपुत्र, यद्येवं तत्किंनिमित्तं युष्माकं सहोदराणामपि परस्परमेतादृशं वैरम् । ]—सहोदराणामपि दृष्टमस्ति वैरमित्याह—एकामिषेति । सहोदराणां गोत्रजानामेकामिषप्रभवमेव वैरं समुज्जृम्भते प्रकटीभवतीति जगति प्रसिद्धम् । अत्र दृष्टान्तमाह । हि निश्चितं कुरुपाण्डवानां पृथ्वीनिमित्तं यथा स्यात्तथा तीव्रो दारुणः तथा प्रसिद्धौ भुवनक्षयकृद्भुवननाशको विरोधोऽभवत् ॥ १८ ॥—एकामिषप्रभवत्वं दर्शयति—सर्वमेवेति ।

१ 'दस्मत्पित्रा' इति पाठः । २ 'स्तावद्वल्लभ' इति पाठः ।

सर्वमेवाक्रान्तम् । तेषां तु विरलः प्रचारः । तेनैते पापाः सांप्रतं पितरमस्मांश्चोन्मूलयितुमुद्यताः ।

रतिः—*सान्तं पावं । अज्जउत्त, किं एरिसं पावं विद्देसनमत्तेण तेहिं आरद्धं । होदु । अस्स उवाओ कोवि मन्तिदो ! ।

कामः—प्रिये, अस्त्यत्र किंचिन्निगूढं वीजम् ।

रतिः—†अज्जउत्त, ता किं ण उग्घाडीअदि ? ।

कामः—प्रिये, भवती स्त्रीस्वभावाद्भीरुरिति न दारुणकर्म पापीयसामुदाह्रियते ।

रतिः—‡(सभयम् ।) अज्जउत्त, केरिसं तम् ? ।

---

* शान्तं पापम् । आर्यपुत्र, किं तादृशं पापं विद्वेषणमात्रेण तैरारब्धम् । भवतु । अस्योपायः को वा मन्त्रितः ? ।

† आर्यपुत्र, तत्किं नोद्घाट्यते ? ।

‡ आर्यपुत्र, कीदृशं तत् ? ।

---

तच्चेति । तेनेत्यादि । तेन तातवल्लभतयास्माभिः सर्वस्यावृतत्वेन ते निवृत्तिसन्तानभूताः सोदराः पापाः पितरं मनोरूपमस्मान्कामादींश्चोन्मूलयितुं मूलोच्छेदं कर्तुमुद्यता उद्युक्ताः ॥—शान्तं पापमित्यादि । भवतु भवतुनाम । कामप्रवेदने लोट् । अस्योपायः को वा मन्त्रितः । को वा मन्त्रितस्तैरित्यन्वयः । उत्तरमाह कामः । अस्त्यत्र किंचिन्निगूढं बीजमिति । निगूढं गोप्यबीजमनर्थस्य निदानभूतम् । किंचिद्वस्तु वक्तुमयोग्यं रहस्यमित्यर्थः ॥—रतिरित्यादि । अवश्यमुद्घाटनीयमित्यर्थः ॥—काम इत्यादि । स्त्रीचापलाद्भवती । 'भातेर्डवतुः' इति डवतुप्रत्ययः । 'उगितश्च' इति ङीप् । पापीयसां दारुणं कर्म नोदाह्रियते ॥ रतिरित्यादि । सभयमिति । भयेन सह वर्तनं यस्मिन्कर्मणि तत्सभयम् । आर्यपुत्र, कीदृशं तत् । दारुणं भयंकरं कर्म कीदृगित्यर्थः ॥—

---

सर्वस्य मनोविकारत्वात्पित्रुपार्जितमिति भावः । [ रतिः—शान्तं पापं शान्तं पापम् । आर्यपुत्र, किमिदं पापं विद्वेषमात्रेणैव तैरारब्धम्, अथवास्त्युपायः कोऽप्यत्र मन्त्रितः । ] निगूढं गुप्तं बीजं कारणम् । [ रतिः—आर्यपुत्र, तत्किं नोद्घाट्यते । ] [रतिः—आर्यपुत्र, कीदृशं तत् ।]हताशानां नष्टाशानां किंवदन्ती जनश्रुतिः लोकप्रसिद्धिः

---

१ 'एदं पावं विद्देसमेत्तकेण आरद्धं । अहवा अत्थि उवावो कोवि एत्थ मन्तिदो' इति पाठः । २ 'अप्यस्त्यत्र' इति पाठः ।

**कामः**—प्रिये, न भेतव्यं न भेतव्यम् । हताशानामाशामात्रमेवैतत् । अस्ति किलैषा किंवदन्ती । अत्रास्माकं कुले कालरात्रिकल्पा विद्यानाम राक्षसी समुत्पत्स्यत इति ।

**रतिः**—(सभयम् ।)*हद्धी हद्धी । कधं अह्माणं कुले रक्खसीति वेवदि मे हिअअम् ।

**कामः**—प्रिये, न भेतव्यं न भेतव्यम् । किंवदन्तीमात्रमेवैतत् ।

**रतिः**—†अध ताए रक्खसीए किं कादव्वम् ।

---

* हा धिक् हा धिक् । कथमस्माकं कुले राक्षसीति वेपते मे हृदयम् ।

† अथ तया राक्षस्या किं कर्तव्यम् ।

---

प्रियामाश्वासयति—**काम इत्यादि** । हताशानां हता नष्टा आशा आशास्यं येषाम् । दुष्टानामित्यर्थः । आशैवाशामात्रम् । एतत्पदार्थमाह—**अस्ति किलेत्यादि** । किलेत्यपरमार्थे । एषा वक्ष्यमाणा किंवदन्ती वार्तास्तीत्यन्वयः । कालरात्रिकल्पा कालरात्रितुल्या । कालरात्रिर्डाकिनी । विद्यानाम विद्याशब्दव्यपदेश्या । उत्पत्स्यत इति निगूढं बीजमस्तीत्यन्वयः ।—**रतिरिति** । प्राकृतभाषायां हद्धीति विषादे पश्चात्तापे वा निपातः । तथा च सूत्रम्—'हद्धी विकल्प-विषाद-सत्य-निश्चय-पश्चात्तापेषु च' इति । तस्योत्तरमाह—**अस्तीत्यादि** । किलेति वार्तामात्रे । प्राजापत्या सरस्वत्यस्ति किल । सर्वानर्थबीजमनेन प्रकाशितम् । प्राजापत्या प्रजापतिप्रोक्ता सरस्वती मुण्डकोपनिषत् । तथा च श्रूयते—'शौनको ह महाशालोऽङ्गिरसं प्रजापतिं विधिवदुपसन्नः पप्रच्छ कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवतीति । तस्मै स होवाच द्वे विद्ये वेदितव्ये इति ह स्म ब्रह्मविदो वदन्ति परा चैवापरा च तत्रापरा ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदः शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमितिहासपुराणधर्मशास्त्राणीति । अथ परा यया तदक्षरमवगम्यते । यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रं तदपाणिपादं नित्यं विभुं सर्वगतं सुसूक्ष्मम् । तदव्ययं तद्भूत-

---

ननु निश्चयः । विद्या आत्मतत्त्वसाक्षात्कारः । क्रूरकर्मकरणाद्राक्षसीत्युक्तिः । [ रतिः—हा धिक् हा धिक् कथमस्माकं कुले राक्षसीति वेपते मे हृदयम् ] । किंवदन्तीमात्रमेतदिति पुनराश्वासनम् । [ रतिः—अथ तया राक्षस्या किं कर्तव्यम् । ]

**कामः**—प्रिये, अस्ति किलैषा[1] प्राजापत्या सरस्वती ।

पुंसः सङ्गसमुज्झितस्य गृहिणी मायेति तेनाप्यसा-
वस्पृष्टापि मनः प्रसूय तनयं लोकानसूत क्रमात् ।
तस्मादेव जनिष्यते पुनरसौ विद्येति कन्या यया
तातस्ते च सहोदराश्च जननी सर्वं च भक्ष्यं कुलम् १९

**रतिः**—(सत्रासोत्कम्पम् ।)* अज्जउत्त, परित्ताहि परित्ताहि ।

(इति भर्तारमालिङ्गति ।)

* आर्यपुत्र, परित्राहि परित्राहि ।

योनिं परिपश्यन्ति धीराः' इति । एतदुक्तं भवति । विद्या द्विविधा परा चापरा चेति । अपरोपनिषद्रूपा । परा त्वन्तःकरणवृत्तिरूपा । तदयमर्थः । तस्मात्किं कर्तव्यमित्यत्र प्रश्नद्वयमुपलभ्यते, कीदृशी विद्या कुत उत्पन्नेति । एतदुत्तररूपा प्राजापत्या श्रुतिः । एतदुपनिषदर्थानुवादकं श्लोकं पठति—**पुंसः सङ्गसमुज्झितस्येत्यादि** । अस्यामुपनिषदि 'कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति' इति सर्वविषयज्ञानात्मकमूलविद्याप्रतीतेः । 'यया तदक्षरमवगम्यते' इति उत्तररूपवाक्ये औपनिषदन्तःकरणपरिणामरूपवृत्तिप्रतीतेः, अद्वेष्यमित्यादिना सर्वभक्षकत्वप्रतीतेश्च, मूलाविद्यातो मनोजन्म, मनसो वृत्तिरूपं विद्याजन्म, विद्यातो जगद्भक्षणं चेत्युपनिषच्छ्लोकयोरैकार्थ्यमवगन्तव्यम् ॥ १९ ॥—**रतिरित्यादि** । सत्रासोत्कम्पं त्रासेन व्यभिचारिभावेनोत्पन्ना या विक्रिया स एवोत्कम्पस्तेन सह वर्तते यथा तथेति सत्रासोत्कम्पम् । यथोक्तं रसार्णवसुधाकरे—'त्रासस्तु चित्तचापल्यं विद्युत्क्रव्यादगर्जितैः । तथाभूत-

प्राजापत्या हिरण्यगर्भसंबन्धिनी सरस्वती वाणी ॥—**पुंस इति** । पुंसः परमेश्वरस्य गृहिणी स्त्री मनोरूपं तनयं पुत्रं प्रसूयोत्पाद्य लोकान्भूर्भुवरादीन्क्रमादनुक्रमेण श्रुतीरिताच्छ्रुत्युक्तमार्गेणासूत जनयामास । कीदृशस्य पुंसः । सङ्गेन संबन्धेन समुज्झितस्य रहितस्य । 'असङ्गो ह्ययं पुरुषः' इति श्रुतेः । कीदृशी माया तेन पुंसाऽस्पृष्टाप्यसंबद्धास्य असंबद्धापि जनयतीत्युक्तमिति शङ्कनीयम् । चुम्बकपाषाणेनासंबद्धा लोहशलाका चुम्बकं यान्तमनुयातीति दृष्टं लोके । तद्वदियमसंबद्धापीक्षणमात्रेण जनयतीत्यर्थः । अघटितघटनापटीयस्यामिदं सर्वमपि संभाव्यत इत्याह मायेत्यनेन विशेषणेन । पुनःशब्द आनन्तर्यार्थः । पुनरनन्तरमसौ विद्येति प्रसिद्धकन्या तस्मादेव मनस एव सकाशाज्जनिष्यत उत्पत्स्यते । असौ का । यया तातः पिता, ते सहोदरा बन्धवश्च

१ 'किल तत्र प्राजापत्या' इति पाठः ।

**कामः**—(स्पर्शसुखमभिनीय । स्वगतम् ।)

स्फुरद्रोमोद्भेदस्तरलतरताराकुलदृशो
भयोत्कम्पोत्तुङ्गस्तनयुगभरासङ्गसुभगः ।
अधीराक्ष्या गुञ्जन्मणिवलयदोर्वल्लिरचितः
परीरम्भो मोदं जनयति च संमोहयति च ॥ २० ॥

(प्रकाशम् । दृढं परिष्वज्य ।) प्रिये, न भेतव्यं न भेतव्यम् । अस्मासु जीवत्सु कुतो विद्योत्पत्तिः ।

---

भुजङ्गाद्यैर्विज्ञेयास्तत्र विक्रियाः ॥ उत्कम्पगात्रसङ्कोचरोमाञ्चस्तम्भगद्गदाः । मुहुर्निमेषसंभ्रान्तिपार्श्वस्थालम्बनादयः ॥' इति ॥—**स्पर्शसुखमभिनीयेति ।** स्पर्शेनालिङ्गनेन यत्सुखं हर्षो जायते तदभिनीय । सुखशब्देन सुखानुभावाः पुलकाङ्कुरप्ररोहणप्रियोक्तिस्वेदादयो लक्ष्यन्ते । स्वगतमात्मगतम् ॥—**स्फुरदित्यादि ।** स्फुरन्प्रकाशमानो रोमोद्भेदो यस्मात्सः । परिरम्भणविशेषणमेतत् । अतिशयेन तरले तरलतरे ते च ते तारे ताभ्यां चञ्चलकनीनिकाभ्यामाकुले दृशौ यस्याः सा । अत एवाधीराक्ष्या इति साभिप्रायं विशेषणम् । 'अधीराक्ष्यादिशब्दानां विशेषणमात्रपरत्वेऽपि विशेष्यावगाहित्वेनैव वृद्धव्यवहारः । अत उक्तं वामनेन—'विशेषणमात्रप्रयोगो विशेष्यप्रतिपत्तौ' इति । अतएव रघुवंशादौ—'निधानगर्भामिव सागराम्बरां', 'जम्भारातीभकुम्भ–' इत्यादि द्रष्टव्यम् । परिरम्भ आलिङ्गनम् । 'उपसर्गस्य घञ्यमनुष्ये बहुलम्' इति दीर्घः । मोदमानन्दं जनयति संमोहयति च । तदेकतानतां संपादयतीत्यर्थः ॥ २० ॥—**दृढं परिष्वज्येति ।** रतेर्भयनिवृत्त्यर्थं दृढपरिष्वङ्गः । प्रकाशमिति क्रियाविशेषणम् । सर्वैराकर्णनीयमित्यर्थः । तत्र नाटकपरिभाषा विज्ञातव्या—'अ-

---

ननी माता, सर्वं कुलं, कुलान्तःपातित्वादात्मापि भक्षणीय इति सर्वं तथैव भक्ष्यम् ॥ १९ ॥—[ रतिः—आर्यपुत्र, परित्राहि परित्राहि । ] स्पर्शसुखमभिनीय प्राप्य । स्वगतं मनस्येव ॥—स्फुरदिति । अधीराक्ष्याश्चपलाक्ष्याः परीरम्भ आलिङ्गनं मोदमानन्दं जनयत्युत्पादयति संमोहयति च । संमोहो विषयान्तरविस्मरणं तत्करोतीत्यर्थः । कीदृशः परीरम्भः । स्फुरन्रोमोद्भेदो रोमाञ्चोद्गमो येन सः । पुनः कीदृशः । भयेनोत्कटः कम्पो ययोस्तौ च तावुत्तुङ्गावुच्चौ स्तनौ च तयोर्युगं युग्मं तस्य भरस्तदासङ्गेन संबन्धविशेषेण सुभगो मनोहरः । पुनः कीदृशः । गुञ्जच्छब्दायमानं मणिवलयं यस्यां तादृशी दोर्वल्लिर्बाहुवल्ली तया रचितः संपादितः । कीदृश्या अधीराक्ष्याः । तरलतरातिचपला ताराक्ष्णः कनीनिका

रतिः—*अध किं ता एव रक्खस्सीए उप्पत्ती तुह्माणं पडिवक्खाणं संमदा ।

कामः—बाढम्, सा खलु विवेकेनोपनिषद्देव्यां प्रबोधचन्द्रेण भ्रात्रा समं जनयितव्या । तत्र सर्वे एते शमदमादयः प्रतिपन्नोद्योगाः ।

---

* अथ किं तस्या एव राक्षस्या उत्पत्तिर्युष्माकं प्रतिपक्षाणां संमता ? ।

---

श्राव्यो नियतश्राव्यः श्राव्यो योऽर्थस्तु वस्तुनि । अश्राव्यमन्यैरज्ञानमात्मन्येव स्थितं विदुः ॥ तमात्मगतमित्युक्त्वा काव्यबन्धे निवेशयेत् । अथ स्विकेन विज्ञेयो नियतश्राव्य इष्यते ॥ विविधः स परिज्ञेयो जनान्तश्चापवारितः । गुह्यो गुह्यतरश्चेति जनान्तोऽपि द्विधा मतः ॥ स्याज्जनान्तिकमित्युक्त्वा वाच्यपूर्वस्तथापरः । कर्ण एवमिवेत्युक्त्वा ज्ञाप्यः पश्चात्प्रसङ्गतः ॥ परैरलक्ष्यव्यापारं कथितोऽर्थोऽपवारितः ॥' अन्येषामदृष्टिगोचरत्वरताल्वोष्ठपुटादिक्रियं यथा भवति तथा कथित इत्यर्थः । 'उक्त्वा प्रागपवार्येति पश्चादेनं प्रयोजयेत् । सर्वैराकर्णनीयोऽर्थः श्राव्य इत्यभिधीयते ॥ एवं प्रकाशमित्युक्त्वा तयोरन्ते प्रयोजयेत्' ॥ अश्राव्यनियतश्राव्ययोः स्वगतमित्युक्त्वा प्रकाशमिति वक्तव्यम् । अपरार्थेत्युक्त्वापि प्रकाशमिति वक्तव्यमित्याद्या षष्ठाङ्कपरिसमाप्तेर्विज्ञातव्यम् । असास्विति बहुवचनं मदमानमात्सर्यापेक्षया जीवत्स्विति शतृप्रत्ययेन वर्तमानकालेनेयमेव प्रबला इति कुतोऽपि विद्योत्पत्तिरिति विद्या समुत्पत्स्यत इति मया किंवदन्तीमात्रं कथितम् । विद्योत्पत्तिः शशविषाणप्रायेत्यर्थः । अथ किमिति सवितर्कप्रश्ने । अत्यर्थमिति अस्मिन्नर्थे निपातः । अथ मुखसंपत्तिं प्रस्तौति—**सा खल्वित्यादि** । सा विद्या । खलु प्रसिद्धौ । विवेकेन राज्ञा उपनिषद्देव्यां प्रबोधचन्द्रेण भ्रात्रा समं जनयितव्या । तत्र च तस्मिन्नर्थे । चकारो वाक्यालंकारे । प्रतिपन्नोद्योगा दृढतरप्रयत्नाः । इदमिदानीं विज्ञातव्यम् । नाट्यवस्तुप्रयोजनहेतुभूता अर्थप्रकृतयो बीजबिन्दुपताकाप्रकरीकार्यरूपाः पञ्चैव । पुरुषाश्रिता वर्णा अवस्थाविशेषा आरम्भयत्नप्राप्त्याशानियताप्तिफलागमरूपाः पञ्चैव । एवं पञ्चकद्वयस्य परस्परसंबन्धे मुखप्रतिमुखगर्भविमर्शनिवर्हणाख्याः पञ्च सन्धयः

---

तयाकुला व्याकुला दृक् यस्याः ॥२०॥—रतिः—[अथ किं तस्या एव राक्षस्या उत्पत्तिर्युष्माकं प्रतिपक्षाणां संमता । ] बाढमवश्यम् । संमतेति शेषः ॥—सा खल्विति । सा विद्यानावृतब्रह्माकारान्तःकरणवृत्तिः । अनावृतब्रह्माकारान्तःकरणवृत्त्युपहितं

रतिः—*अज्जउत्त, कहं एदेहिं अप्पणो विनासकारिणीए विज्जाए उप्पत्ती तेहिं दुव्विणीदेहिं सलाहिज्जदि ।

---

*आर्यपुत्र, कथमेतैरात्मनो विनाशकारिण्या विद्याया उत्पत्तिरेतैर्दुर्विनीतैः श्लाघ्यते ? ।

---

प्रवृत्ताः । बीजारम्भसंधाने मुखसन्धिः, कार्यफलागमयोः सन्धानं निर्वहणसन्धिरिति । सन्धिर्नामैकेन प्रयोजनेनान्वितानां कथांशानामवान्तरप्रयोजनेन संबन्धः । 'नानार्थहेतुरुद्भेदो यत्र बीजस्य तन्मुखम्' इति । यत्र बीजारम्भसमन्वयरूपे संबन्धे नानार्थानां धर्मार्थकाममोक्षाणामनेकेषां प्रयोजनानां हेतुः कारणं बीजस्योद्भेदः प्रकाशनं भवति स मुखसन्धिः स्तोकोद्दिष्टः सन्ननेकधा विस्तारिकार्यहेतुतत्तद्बीजमधिकफलप्राप्तये यदौत्सुक्यमात्रं पुरुषे भवति स आरम्भो नाम । यथोक्तं दशरूपके—'औत्सुक्यमात्रप्रारम्भः फललाभाय भूयसे' इति । इदमहं संपादयामीत्यध्यवसायमात्रमारम्भः इत्यौत्सुक्यशब्देनोच्यत इति विज्ञेयम् । यथा रत्नावल्याम्—'प्रारम्भेऽस्मिन्स्वामिनो वृद्धिहेतौ दैवे चेत्थं दत्तहस्तावलम्बे' इत्यादिना सचिवायत्तसिद्धेर्वत्सराजस्य कार्यारम्भो यौगन्धरायणमुखेन दर्शित इति । एवं प्रकृत्यवस्थासन्धानात्मकः सन्धिरिति । स च सन्धिर्द्वादशधा सध्रीचीनः । अङ्गानि तु—'उपक्षेपः परिकरः परिन्यासो विलोभनम् । युक्तिः प्राप्तिः समाधानं विधानं परिभावना ॥ उद्भेदभेदकरणान्यन्वर्थानि यथाक्रमम् ॥' इति । एतेषामन्वयप्रकारं लक्षणं तत्तदवसरे निरूपयिष्यामः । सा खलु विवेकेनोपनिषद्देव्यां प्रबोधचन्द्रेण भ्रात्रा समं जनयितव्येत्यनेन कथाबीजमुपलक्षितम् । अयं च बीजन्यास उपक्षेपो नाम मुखसन्धेः प्रथममङ्गम् । नच वाच्यं विष्कम्भे विरसे बीजन्यास उचित इति । विष्कम्भान्ते तु तस्य प्राशस्त्याद्बीजन्यासात्पूर्वमेव विरसत्वं विष्कम्भस्य । अत उपरि सरसत्वमिति विज्ञेयम् । यथाच रत्नावल्यां वत्सराजस्य रत्नावलीप्राप्तेरनुकूलदैवयोगेन यौगन्धरायणव्यापारो विष्कम्भान्ते न्यस्त इति । अतः प्रथमाङ्के तद्भवतु । प्रस्तुतविधानाय शमदमादीन्नियोजयाम इति प्रस्तुतविधानाध्यवसायमात्रमारम्भे नायकगतावस्थाविशेषो निर्दिष्टः, सा खल्वित्यत्र निर्दिष्टेन कथाबीजेन तद्भवतु प्रस्तुतविधानायेत्यत्र निर्दिष्टस्यारम्भस्य संधानान्मुखसन्धिरुत्पद्यते ॥—**रतिरिति** । अत्र परिकरारम्भे 'द्वितीयमङ्गं विद्यायाः श्लाघ्यत्वोक्तिस्तद्बाहुल्यं परि-

---

चैतन्यं प्रबोधचन्द्रः । रतिः—[आर्यपुत्र, कथमेतैरात्मनो विनाशकारिण्या विद्याया उत्पत्तिस्तैर्दुर्विनीतैः श्लाघ्यते ।] विद्याया उत्पत्तिः कथं श्लाघ्यते इति प्राकृतयो-

**कामः**—प्रिये, कुलक्षयप्रवृत्तानां पापकारिणां कुतः[1] स्वपरप्रत्यवायगणना। पश्य पश्य—

सहजमलिनवक्रभावभाजां
भवति भवः प्रभवात्मनाशहेतुः।
जलधरपदवीमवाप्य धूमो
ज्वलनविनाशमनु प्रयाति नाशम्॥ २१॥

(नेपथ्ये।) आः पाप दुरात्मन्, कथमस्मानेव पापकारिण इत्याक्षिपसि। ननु रे।

---

क्रिया' इति लक्षणम्। काम इत्यादि। गणनेत्यादि स्पष्टम्॥—**सहजेत्यादि।** सहजमलिनवक्रभावभाजां मलिनाश्च वक्राश्च मलिनवक्राः तेषां भावः, सहजश्चासौ मलिनवक्रभावश्च तं भजन्ति तेषाम्। युक्तायुक्तविवेकशून्यानामित्यर्थः। धूमपक्षे मलिनभावो नैल्यं कुटिलभावो वेल्लनं भव उत्पत्तिः प्रभवात्मनाशहेतुः प्रभवत्यस्मादिति प्रभव उत्पत्तिस्थानं तस्यात्मनश्च विनाशहेतुः। तदवसरे दृष्टान्तमाह—**जलधरेत्यादि।** जलधरपदवीं मेघात्मतां प्राप्य। वृष्टिमुत्पाद्येति शेषः। ज्वलनविनाशमनु ज्वलनविनाशमनुसृत्य। ज्वलनविनाशं कृत्वा तदनन्तरमित्यर्थः। धूमः स्वयमपि नाशं प्रयाति। स्वयमपि नश्यतीत्यर्थः। अत्र दृष्टान्तालंकारः। यमादेर्धूमस्य च परस्परं बिम्बप्रतिबिम्बभावेनौपम्याक्षेपाद्यथा धूमो वृष्टिमुत्पाद्याश्रयं नाशयित्वा स्वयमपि नश्यति तथा यमादयोऽपि विद्यामुत्पाद्य स्वकारणं नाशयित्वा स्वयमपि नश्यन्तीति भावः। अत्र परिन्यासो नाम तृतीयमङ्गम्। 'तस्य दार्ढ्यं परिन्यासः' इति लक्षणम्। मलिनानामयं स्वभाव इत्यर्थान्तरन्यासेन बीजारम्भस्य दृढीकरणात्॥ २१॥—**नेपथ्य इति।** नेपथ्यस्वरूपं कथितं प्राक्। अत्र विष्कम्भेनाङ्गपात्रप्रवेशमाक्षिपति—**आः पाप दुरात्मन्नित्यादि।** यद्वा सहजमलिनेत्यादिना तुल्यविशेषणेन पात्रप्रवेशमाक्षिपति—'सहजमलिनवक्रभावभाजां भवति भवः प्रभवात्मनाशहेतुः'।

---

जना॥ सहजेति। मलिनं दुष्टमत एव वक्रं भावं चित्ताभिप्रायं भजन्ति सेवन्ते ये तेषां भव उत्पत्तिः। प्रभवस्योत्पत्तिस्थानस्यात्मनश्च नाशहेतुर्भवति। उक्तोऽर्थान्तरन्यासः। धूमो जलधरपदवीमवाप्य मेघमार्गपर्यन्तं गत्वा स्वोत्पत्तिस्थानं वह्निस्तन्नाशमनु नाशं प्रयाति। धूमोऽपि मलिनो वक्रभावश्चेति भावः॥ २१॥

---

१ 'कुतः प्रत्यवायः' इति पाठः।

गुरोरप्यवलिप्तस्य कार्याकार्यमजानतः ।
उत्पथप्रतिपन्नस्य परित्यागो विधीयते ॥ २२ ॥

इति पौराणिकीं गाथां पुराणविद उदाहरन्ति । अनेन चास्माकं जनकेनाहंकारानुवर्तिना जगत्पतिः पितैव तावद्बद्धः । मोहादिभिश्च स एव बन्धः सुदृढतां नीतः ।

**कामः**—(विलोक्य ।) प्रिये, अयमस्माकं कुले ज्यायान् मत्या देव्या सह विवेक इत एवाभिवर्तते । य एषः—

रागादिभिः सरसचारिभिरात्तकान्ति-
निर्भर्त्स्यमान इव मानधनः कृशाङ्गः ।
मत्या नितान्तकलुषीकृतया शशाङ्कः
कान्त्येव सान्द्रतुहिनान्तरितो विभाति ॥ २३ ॥

---

इति श्लोकपठनानन्तरं विशेषणानां दूषणात्मना तुल्यविशेषणतयात्मोपालम्भं मन्यमानः प्रविशतीति । आः पाप दुरात्मन्, कथमस्मानेव पापकारिण इत्याक्षिपसीति । अनेनास्माकं जनकेनाहंकारसन्तानानुवर्तिना जगत्पतिः परमेश्वरः पितैव बद्धः । अतो युक्तम् ॥—**गुरोरप्यवलिप्तस्येत्यादि** । उत्पथमसन्मार्गमाचरमाणस्य ॥ २२ ॥—**रागादिभिरिति** । रागद्वेषलोभादिभिः सरसचारिभिः सरसेषु रसिकजनेषु चरन्ति तैः । 'स्वरसचारिभिः' इति वा पाठः । स्वच्छन्दचारिभिरित्यर्थः । निर्भर्त्स्यमान इवात्तकान्तिर्निस्तेजस्को मानधनः मान एव धनं यस्य सः । यस्तु शत्रुतिरस्कारे सति धैर्यं न त्यजति स मानधनः । कृशाङ्गः । विवेकस्य परिपूर्णकार्यजननासमर्थत्वात्कृशाङ्गताव्यपदेशः । नितान्तमत्यर्थम् । रागादिभिः कलुषीकृतया मत्या सान्द्रतुहिनान्तरितो नीहार-

---

—नेपथ्ये जवनिकायाम् ॥—**गुरोरिति** । अवलिप्तस्य सगर्वस्य । उत्पथप्रतिपन्नस्योन्मार्गगामिनः । शेषं सुगमम् ॥ २२ ॥ गाथां पदसंदर्भरूपाम् ॥—**अनेनेति** । जनकेन मनसाहंकारानुवर्तिनाहमाकाराध्यासयुक्तेन जगत्पतिः पितैव परमेश्वर एव ।—य एषः । **रागादिभिरिति** । य एष पूर्वोक्तो विवेको मत्या बुद्ध्या विभाति । कथंभूतया मत्या । रागादिभिर्नितान्तमतिशयेन कलुषीकृतया । कीदृशै रागादिभिः । स्वरसचारिभिरविविच्य स्वेच्छाप्रवृत्तैः । आदिशब्देन मोहादयः । तैरात्ता कान्तिर्यस्य । उत्प्रेक्ष्यते । निर्भर्त्स्यमान इव प्रति [ निःप्रभी ] क्रियमाण

---

१. 'स्वरसचारिभिः' इति पाठः ।

तन्न युक्तमिहास्माकमवस्थातुम् ।

(इति निष्क्रान्तौ ।)

विष्कम्भः ।

(ततः प्रविशति राजा विवेको मतिश्च ।)

राजा—(विचिन्त्य ।) प्रिये, श्रुतं त्वयास्य दुर्विनीतस्य काम-

---

प्रावृतः शशाङ्क इव भाति । तुहिनं नामाविद्या । 'नीहारेण प्रावृता' इत्यादिश्रुतेः ॥२३॥ इतः परमासूचितपात्रप्रवेशावसरदानं करोति॥—तन्न युक्तमित्यादिना। निष्क्रान्तौ रतिमन्मथौ ॥—विष्कम्भ इति । विष्कम्भोऽयं मिश्रविष्कम्भः । तल्लक्षणम्—'अङ्कशेषकथांशानां भूतानां भाविनामपि । संक्षेपेण समस्तानां विष्कम्भः सूचनात्मकः ॥ विरसोऽनुचितस्तत्र सूच्यः स्याद्वस्तुविस्तरः । शुद्धो मिश्रस्तु स द्वेधा मध्यपात्रप्रयोजितः ॥ शुद्धो भवति मिश्रस्तु मध्यनीचप्रयोजितः । प्रधानादपरं मध्यं नायकादेरुदात्तवाक् ॥ नीचं स्यादनुदात्तोक्तिर्विना परिजनादिकम् ॥' उदात्तवाक्संस्कृतवाक् । अनुदात्तवाक्प्राकृतवाक् ॥—ततः प्रविशतीत्यादि । ततः पात्रनिर्गमानन्तरं विष्कम्भान्ते सूचितं पात्रद्वयं प्रविशतीत्यादि । राजा विवेको मतिश्चेति । विवेचनशीलो विवेकी । बुद्धिमानिति यावत् । वाग्ग्मीत्यादिमहागुणसंपन्नः अन्वर्थसंज्ञोऽयं विवेक इति । मतिरितिआगामिविषया बुद्धिर्वृत्तिविशेषः । मतिर्नाम बुद्धिमती काचन कान्ता राज्ञी राजकार्यालोचनार्हा । अन्वर्थसंज्ञेयम् । एवमूह्यं सर्वत्र पात्रप्रवेशे । वेदान्तपक्षे तु विवेको विवेचनम् । तद्वदनिच्छमिति परिच्छेदः ? । वेदान्तानां ब्रह्मणि शक्तितात्पर्यावधारणम् । विवेको नाम श्रवणम् । मतिश्च तत्सहायकारिणी काचन बुद्धिवृत्तिः । असंभावनाविपरीतभावनयोर्निवर्तिका मननात्मिका । 'मन ज्ञाने' इत्यस्माद्धातोः क्तिन् । 'अनुनासिकस्य क्विझलोः क्ङिति' इत्यनुनासिकलोपः । स्त्रीप्रत्ययान्तत्वात्, श्रवणं प्रति मननस्याङ्गत्वाच्च पत्नीत्वव्यपदेशो मतेः । वेदान्तेभ्योऽपरोक्षज्ञानात्मिकान्तःकरणवृत्तिरूपा विद्या प्रबोधश्चोत्पद्येत इति षष्ठाङ्के वक्ष्यते । अत उपनिषदर्थनिर्णायकत्वेन प्राधान्याद्राजत्वं विवेकस्य । तदुक्तं विवरणाचार्यैः—'द्रष्टव्य इति दर्शनमनूद्य फलापकार्यङ्गाभ्यां मनननिदिध्यासनाभ्यां सह श्रवणं नामाङ्गी विधीयते' इति । एतस्य राज्ञो विवेकस्य महामोहभूपतेः परिपन्थित्वं तत्पात्रप्रवेशसमये निरूपयिष्यामः ।—राजा विचिन्त्येति । आत्म-

---

इव । मान एव धनं यस्य । कृशान्यङ्गानि यस्य । कया क इव । कान्त्या शशाङ्क इव । कीदृशः शशाङ्कः । सान्द्रेण निबिडेन तुहिनेन हिमेनान्तरित आच्छादितः ॥ २३ ॥—तन्न युक्तमित्यनेन कामरत्योर्निःप्रभावत्वं विवेकोदयमात्रेण प्रदर्शितम् ॥

वटोर्मदविस्फूर्जितं वचो यदस्मानेव पापकारिण इत्याक्षिपति ।

मतिः—*अज्जउत्त, किं अप्पनो दोसं लोगो विआणादि ।

राजा—पश्य ।

असावहंकारपरैर्दुरात्मभि-
　निबध्य तैः पापशठैर्मदादिभिः ।
चिरं चिदानन्दमयो निरञ्जनो
　जगत्प्रभुर्दीनदशामनीयत ॥ २४ ॥

त एते पुण्यकारिणो वयं तु तन्मुक्तये प्रवृत्ताः पापकारिण इत्यहो जितं दुरात्मभिः ।

---

* आर्यपुत्र, किमात्मनो दोषं लोको विजानाति ।

---

गतां चिन्तां नाटयित्वेत्यर्थः ।—**मतिरिति** । किमित्याक्षेपे । न विजानातीत्यर्थः । **असावित्यादि** । अहंकारपरैरहंकारानुवर्तिभिर्दुरात्मभिर्दुष्टचित्तैर्दुष्टान्तःकरणोत्पन्नैश्च पापशठैः पापाश्च ते शठाश्च पापशठास्तैः । विशेषणसमासः । **मदादिभिरिति** । आदिशब्देन मात्सर्यादयो गृह्यन्ते । चिदानन्दमयश्चित्स्वरूपः । आनन्दमय आनन्दस्वरूपः । स्वार्थे मयट् । ननु आनन्दादयो ब्रह्मणो धर्माः, नेत्याह—**निरञ्जन इति** । ननु निरञ्जनस्य निर्विशेषस्य जगत्प्रभुत्वं 'यतो वा' इत्यादिश्रुतिचोदितं कुत इत्याशङ्क्य तदविद्यानिबन्धनमित्याह—**जगत्प्रभुरिति** । एतादृशः परमेश्वरो दीनदशां दुरात्मभिरनीयतेत्यर्थः ॥ २४ ॥ एतदुक्तं भवति । चिदानन्दघनो निरञ्जनो जगत्प्रभुरहंकारादिभिरवलीढः सन् अज्ञानीव दुःखीव साञ्जन इव अनीश्वर इव प्रतिभाति । दीनमिति भावे निष्ठा । अत्र विलोभनं नाम मुखसन्धेश्चतुर्थमङ्गम् । बीजस्य गुणाख्यानात् । 'गुणाख्यानं विलोभनम्'

---

विष्कम्भक इति प्राक्तननटसंक्षेपः । उत्कृष्टपात्रप्रवेशः । राजा विवेकः । [ मतिः—आर्यपुत्र, किमात्मनो दोषं लोको विजानाति ? ] ॥—असाविति । तैः प्रसिद्धैर्मदादिभिरसौ जगत्प्रभुः परमात्मा चिरं चिरकालं दीना या दशा आनन्दशून्या दशा तामनीयत प्रापितः । कीदृशैर्मदादिभिः । अहंकारः परः प्रथमो येषां तैः । पुनः कीदृशैः । दुरात्मभिर्दुष्टस्वभावैः । किं कृत्वा । पाशशतैः पाशा वासनासंस्कारास्तद्रूपैर्निबध्य नियम्य । कीदृशो जगत्प्रभुः । चिदानन्दमयो ज्ञानस्वरूपः । पुनः कीदृशः ।

मतिः—*अज्जउत्त, जदो सो सहजआणन्दसुन्दलसहाओ णिच्चप्पआसो पप्फुरन्तसअलतिहुअणप्पआरो परमेस्सरो सुणीअदि। ता कहं एदेहिं दुव्विणीदेहिं वधिअ महामोहसाअरे णिक्खित्तो।

राजा—प्रिये,

सततधृतिरप्युच्चैः शान्तोऽप्यवाप्तमहोदयो-
ऽप्यधिगतनयोऽप्यन्तः[1]स्वच्छोऽप्युदीरितधीरपि।
त्यजति सहजं धैर्यं स्त्रीभिः प्रतारितमानसः
[2]स्वयमपि यतो मायासङ्गात्पुमानिति विश्रुतः॥ २५॥

---

* आर्यपुत्र, यतोऽसौ सहजानन्दसुन्दरस्वभावो नित्यप्रकाशः प्रस्फुरत्सकलत्रिभुवनप्रचारः परमेश्वरः श्रूयते। तत्कथमेतैर्दुर्विदग्धैर्बद्धा महामोहसागरे निक्षिप्तः।

---

इति लक्षणम्॥—**सततधृतिरित्यादि**। सतता नित्या धृतिर्धैर्यं यस्य सः। अपिशब्दो गर्हायाम्। उच्चैरुन्नतः शान्तः स्वभावेन शान्तिमान्। अवाप्तमहोदयोऽवाप्तकामः। अधिगतनयः अधिगतो नयो नीतिर्यस्य सः। नयैर्न्यायैरधिगत इत्यर्थः। अन्तःस्वच्छः स्वच्छान्तःकरणः। स्वच्छघन इत्यर्थः। उदीरितधीः उदीरिता उच्चैः स्तुता धीर्यस्य। धीरूपश्चाधीरूपत्वेनोदीरित इत्यर्थः। अपि। तथापीत्यर्थः। धैर्यं सततधृत्यादिकं स्त्रीभिः प्रतारितमानसः प्रतारितं वञ्चितं मोहितं मनो यस्य। विधेयविशेषणमेतत्। प्राकृतो जन इति शेषः। धैर्यादिकं त्यजतीत्यन्वयः। स्वयमपि परमात्मापि मायासङ्गादविद्यासंपर्कात्पुमानिति

---

निरञ्जनः निर्गतमञ्जनं मोहावरणं यस्मात्॥ २४॥ [ मतिः—आर्यपुत्र, यतोऽसौ सहजानन्दसुन्दरस्वभावो नित्यप्रकाशः स्फुरत्सकलत्रिभुवनप्रचारः परमेश्वरः श्रूयते। तत्कथमेतैर्दुर्विनीतैर्बद्धा महामोहसागरे निक्षिप्तः ]—**सततेति**। पुमान्सहजं स्वाभाविकमपि धैर्यं त्यजति। औपाधिकं त्यजतीत्यत्र किं चित्रम्। धैर्यत्यागे हेतुमाह—**स्त्रीभिरिति**। स्त्रीभिः प्रतारितं वञ्चितं मानसं यस्य सः। उच्चैरिति सर्वत्र संबन्धनीयम्। कीदृशोऽपि। सततं निरन्तरं धृतिर्धैर्यं यस्य तादृशोऽपि, शान्तोऽपि जितेन्द्रियोऽपि, अवाप्तो महोदय ऐश्वर्यं येन तादृशोऽपि, अधिगतो ज्ञातो नयो नीतिर्येन तादृशोऽपि, अन्तःस्वस्थोऽप्यव्यग्रान्तःकरणोऽपि, उदीरिता समयोचिता बुद्धिर्यस्य तादृशोऽपि। स्वस्मिन्नेवेदं सर्वमवलोक्यतामित्याह—**स्वमपीति**। यद्यस्माद्धेतो-

---

१ 'स्वस्थ' इति पाठः। २ 'स्वमपि यदयं मायासङ्गात्पुमनिह विस्मृतः' इति पाठः।

**मतिः**—*अज्जउत्त, [1]णं खु अन्धकारलेहाए सहस्सरस्सिणो तिरक्कारो। जधा माआए तधा स्फुरन्तमहाप्पआससाअरस्स देवस्स विअहिहवो।

**राजा**—प्रिये, अविचारसिद्धेयं वेश्या[2]विलासिनीव माया असतोऽपि भावानुपदर्शयन्ती परपुरुषं वञ्चयति। पश्य[3]—

* आर्यपुत्र, नूनमन्धकारलेखया सहस्ररश्मेस्तिरस्कारः। यथा मायया तथा स्फुरन्महाप्रकाशसागरस्य देवस्याप्यभिभवः।

यतः कारणाद्विश्रुतः प्रसिद्धः तत्किं वक्तव्यमित्यभिप्रायः। लौकिकजनस्य स्त्रीसङ्गाद्धैर्यच्युतिर्भवति। अस्य परमेश्वरस्य मायारूपस्त्रीसङ्गादेव पुंस्त्वसिद्धिरिति किं वक्तव्यम्। धैर्यच्युतिरिति युक्तिर्नाम मुखसन्धेः पञ्चममङ्गम्। मत्या संशयितार्थस्य निर्णयात्। तल्लक्षणम्—'युक्तिः संशयितार्थस्य निर्णयः परिकीर्तितः' इति ॥ २५ ॥ **मतिरिति**। आर्यपुत्र, नूनं अन्धकारलेखया सहस्ररश्मेस्तिरस्कारः। तिरस्कारसदृश इत्यर्थः। यथा मायया तथा स्फुरन्महाप्रकाशसागरस्य देवस्याप्यभिभवः। ननु सूर्यस्य स्वभावत एव तमःसङ्गो नास्ति। ब्रह्मणस्त्वविद्यासङ्गोऽस्ति। बुद्धिगुहायामहमिति प्रतिभासात्। वस्तुतस्तु नास्तीत्यर्थः। अत्र प्राप्तिर्नाम मुखसन्धेः षष्ठमङ्गम्। ब्रह्मस्वरूपेऽविद्यासङ्गस्यापि कल्पितत्वात्स्वरूपतः सुखावाप्तिरूपत्वात्। तल्लक्षणम्—'अर्थानामानुकूल्येन सुखाप्तिः प्राप्तिरिष्यते' इति ॥—**अविचारसिद्धेयमित्यादि**। विचारदशायां ब्रह्मणो मायासङ्गः सूर्यस्य तमःसङ्ग इव नास्ति। 'असङ्गो ह्ययं पुरुषः' इति श्रुतेः। तदेव दृष्टान्तेन द्रढयति—**वेश्येत्यादि**। विलासिनी कृत्रिमविलासवती। निन्दायां मतुप्। अतएव अविद्यमानानपि भावांस्तम्भप्रलयादीनुपदर्शयन्ती उप समीपे प्रकाशयन्ती। अयस्कान्तमणिवत्संनिधिमात्रेणेत्यर्थः। परपुरुषं विडम्बयति

मायासङ्गादविद्यासंबन्धात्पुमान्परमात्मा स्वमात्मानमपीहेदानीं विस्मृतः। अपिस्तत्तदर्थव्यतिरेकसमुच्चयार्थः ॥ २५ ॥—अजानती मायाकार्यं पृच्छति—**अज्जेत्यादिना**। [ **मतिः**—आर्यपुत्र, न खल्वन्धकारलेखया सहस्ररश्मेस्तिरस्कारः। यन्मायया तथा विस्फुरन्महाप्रकाशसागरस्य देवस्याभिभवः। ] मायाकार्यं प्रकटयति—**अविचारेति**। अविचारसिद्धानिर्वचनीया सत्त्वेनासत्त्वेन वा विचारयितुमशक्या वारविलासिनीव वेश्येवासतो भावानविद्यमानकर्तृत्वभोक्तृत्वादीनुपदर्शयन्ती सती वञ्च-

१ 'ण खलु—तिरक्कारो। जं माआए—देवस्स अहिहवो' इति पाठः। २ 'वारविलासिनीव' इति पाठः। ३ 'पश्य पश्य' इति पाठः।

स्फटिकमणिवद्भास्वान्देवः प्रगाढमनार्यया
विकृतिमनया नीतः कामप्यसंगतविक्रियः ।
न खलु तदुपश्लेषादस्य व्यपैति रुचिर्मनाक्
प्रभवति तथाऽप्येषा पुंसो विधातुमधीरताम् ॥ २६ ॥

मतिः—*अज्जउत्त, किं[2] पुणो कारणं । जेण सा तधा उदारचरिदं दुव्विदग्धा प्रतारेदि ।

* आर्यपुत्र, किं पुनः कारणम् । येन सा तथोदारचरितं दुर्विदग्धा प्रतारयति ।

वञ्चयति एवं मायापि परपुरुषं परमात्मानं कर्तृत्वादीन्प्रदर्शयन्ती तद्वत् । तथा वञ्चयतीत्यर्थः । पश्य आलोचय । वञ्चनाप्रकारमेवाह—**स्फटिकमणिवदित्यादि** । स्फटिकमणिवद्भास्वान्प्रकाशमानो देवः प्रपञ्चात्मना क्रीडनशीलः । 'तदैक्षत बहु स्यां प्रजायेय' इति श्रुतेः । प्रगाढं गाढतरमनार्यया तुच्छयाऽविद्यया स्वभावतोऽसंगतविक्रियोऽपि सन् कामपि विकृतिं नीतः प्रापितः । एवं च विक्रियावान्पुरुषो नेत्याह—**न खल्वित्यादि** । उपश्लेषः उप समीपे श्लेषः संबन्धः पद्मपत्रोदकवत् । तस्मादस्य पुरुषस्य रुचिः स्वभावकान्तिर्न खलु व्यपैति यद्यपि तथापि एषाऽविद्या पुंसोऽधीरतां स्वानुगुणस्वभावतां विधातुं संपादयितुं प्रभवति समर्था भवति । अचिन्त्यो हि मायायाः प्रभाव इति भावः । अत्र समाधानं नाम मुखसन्धेः सप्तममङ्गम् । 'स्फटिकमणिवद्भास्वान्देवः' इत्य-

यति । यदि न प्रत्ययसे तर्हि पश्येत्याह—**पश्य पश्येति** । किं पश्येत्याह—**स्फटिकेति** । अनया मायया अनार्ययाऽश्रेष्ठयाऽनर्थकारिण्या भास्वान्स्वयंप्रकाशो देवः परमात्मा प्रगाढमतिशयेन कामप्यनिर्वचनीयां विकृतिं विकारं नीतः प्रापितः । तर्हि सा कृतार्थैव जातेत्याह—**तदुपश्लेषादिति** । तदुपश्लेषात्तत्संसर्गादस्यात्मनो मनागपीषदपि रुचिः स्वस्वरूपप्रकाशो न खल्वपैति गच्छति । तत्र हेतुः । असंगतासंभाविता विक्रिया विकारो यत्र । तत्र दृष्टान्तः स्फटिकमणिवत् । यथा स्फटिको जपाकुसुमसंनिधानाद्रक्तोऽपि स्वाभाविकं श्वैत्यं न जहाति तथोपाधिसंनिधानाद्विकृतोऽपि स्वापान्न हीयत इत्यर्थः । यद्यप्येवं तथापि बाढमतिशयेनैषा माया अधीरतां विधातुं स्वरूपात्प्रच्यावयितुं प्रभवति प्रवर्तते ॥ २६ ॥—[ मतिः—किंपुनः कारणं येन सा तथोदारचरितं दुर्विदग्धा प्रतारयति ] । प्रयोजनं का-

१ 'प्येषा बाढं' इति पाठः । २ 'किं पुणो कालणं—पओरदि' इति पाठः ।

**राजा**—न खलु प्रयोजनं कारणं वा विलोक्य माया प्रवर्तते। स्वभावः खल्वसौ स्त्रीपिशाचीनाम्। पश्य—

संमोहयन्ति मदयन्ति विडम्बयन्ति
निर्भर्त्सयन्ति रमयन्ति विषादयन्ति।
एताः प्रविश्य सदयं हृदयं नराणां
किं नाम वामनयना न समाचरन्ति॥ २७॥

अस्ति चापरमपि कारणम्।

**मतिः**—*अज्जउत्त, किं णाम तक्कारणम्?।

**राजा**—एवमनया दुराचारया [2]विचिन्तितं यदहं तावद्गतयौ-

---

* आर्यपुत्र, किं नाम तत्कारणम्।

---

नेन बीजानुसंधानात्। तल्लक्षणं तु—'यद्बीजस्यानुसंधानं तत्समाधानमिष्यते' इति॥ २६॥—**न खल्वित्यादि**। मायायाः स्वभावात्स्वपर्यनुयोज्यः। तदेव सदृष्टान्तमाह—स्वभावः खल्वित्यादि—**संमोहयन्तीत्यादि**। संमोहयन्ति संमोहवन्तं कुर्वन्ति। मदयन्ति मादयन्ति। घटादित्वेन मित्त्वात्पाक्षिको ह्रस्वः। विडम्बयन्त्युपहसन्ति, निर्भर्त्सयन्ति ताडयन्ति, रमयन्ति क्रीडयन्ति, विषादयन्ति खेदयन्ति। एताः कान्ता नराणां हृदयं सदयं रसार्द्रं यथा भवति तथा प्रविश्य। पुरुषान्वशीकृत्येत्यर्थः। वामनयनाः किं नाम न समाचरन्ति। अपितु सर्वमपि समाचरन्ति। पुरुषं युक्तायुक्तविचारशून्यं कुर्वन्तीत्यर्थः। अत्र विधानं नाम मुखसन्धेरष्टममङ्गं प्रतिपादितम्। तथोदारचरितं दुर्विदग्धा प्रतारयतीत्यनेन दुःखाभावरूपं सुखं प्रतीयत इति। तल्लक्षणं तु—'सुखदुःखकरं यत्तद्विधानं परिकीर्तितम्' इति॥ २७॥—**एवमनयेत्यादि**। एवं वक्ष्यमाणप्रकारं विचिन्तितं विशेषेण चिन्तितं निश्चित यद्यस्मात्कारणादहम्। मायावचनमेतत्। गतयौवना पुरुषप्रेमानास्पदम्। वेदान्तपक्षे यौवनशब्दोऽवस्थामात्रपरः। सर्वावस्थाशून्याविद्याऽनादिरित्यर्थः। वर्षीयसी वृद्धतरा उपभोगायोग्या। वृद्धशब्दस्य 'प्रियस्थिर-' इत्यादिना वर्षादेशे ईयसुनि कृते 'उगितश्च' इति ङीप्।

---

र्यम्॥—संमोहयन्तीति। वामनयनाः कपटदृष्टयः सदयं यथा स्यात्तथा नराणां हृदयं प्रविश्य किं नाम न समाचरन्ति। विडम्बयन्ति। अनुकुर्वन्तीत्यर्थः। शेषं सुगमम् ॥२७॥ [मतिः—आर्यपुत्र, तत्किम्]—एवमनयेति। स्वतनयं मनोरूपं पारमे-

---

१ 'तं किम्' इति पाठः। २ 'चिन्तितं अहं' इति पाठः।

वना वर्षीयसी । अयं पुराणपुरुषः स्वभावादेव विषयरसविमुखः । ततः स्वतनयमेव पारमेश्वरे पदे निवेशयामीति तमेव मातुरभिप्रायमासाद्य नितान्ततत्प्रत्यासन्नतया तद्रूपतामिवापन्नेन मनसा नवद्वाराणि पुराणि रचयित्वा ।

> एकोऽपि बहुधा तेषु विच्छिद्येव निवेशितः ।
> स्वचेष्टितमथो तस्मिन्विदधाति मणाविव ॥ २८ ॥

---

मायापक्षे वर्षीयसी महेश्वरा । सावसानेत्यर्थः । अयं पुराण इति । अयं च पुरुषः पतिः पुराणो वृद्धः स्वभावादेव विषयरसविमुखः विषयेषु शब्दादिषु रसः प्रीतिस्तत्र विमुखः । निःस्पृह इति यावत् । दम्पत्योर्वार्धक्यं जातमिति । तत्तस्मात्कारणात्स्वतनयमेव मनोनामकं पारमेश्वरे पदे जगत्कर्तृकलनियन्तृत्वाद्यधिकारे निवेशयामीति चिन्तितमित्यन्वयः । तमेवैवं प्रकारं मातुरभिप्रायं सम्यगासाद्य । मातरं सेवया प्रसाद्येत्यर्थः । विदित्वा विज्ञाय नितान्तमत्यर्थं प्रत्यासन्नः संनिहितस्तस्य भावस्तत्ता तया । लोके प्रेमास्पदीभूतो राजकुमारोऽधिकारार्हस्तद्रूपतां मातृरूपताम् । तद्गुणाविष्टतामित्यर्थः । यद्वा तद्रूपतामीश्वररूपतां सर्वाद्वैतताम् । तस्यैव वियदादिसृष्टेरपि कर्तृत्वाङ्गीकारात् । आपन्नेन प्राप्तेन । मनसः पुराणोपादानत्वात्स्वोपादानभूतविद्यापेक्षया प्रत्यासन्नेनोपादेयभूतदेहात्मतां प्राप्तेन मनसोपादानभूतेन नव द्वाराणि पुराणि रचयित्वा ।—**एकोऽपीति** । नवद्वारपुरात्मनावस्थितेनेत्यर्थः । तेषु पुरेष्वेकोऽपि देवो बहुधा बहुप्रकारेण विच्छिद्य विच्छेदं कृत्वा निवेशितो निक्षिप्तः । अथो तदनन्तरं तस्मिन्देवे स्वचेष्टितं देहधर्मं स्थूलोऽहं कृशोऽहं काणोऽहं बधिरोऽहं कामवानहं संकल्पवानहमित्यादिकं विदधाति विशेषेण परिकल्पयति । कथम् । मणाविव । यथा मणिस्थितं द्रव्यं मणिधर्मकं भवति तद्वन्मनःस्थितो देहाश्रितश्च मनोधर्मको देहधर्मकः प्रतिभातीत्यर्थः । यद्वा मणिसमीपस्थितः स्वधर्मं मणौ दर्शयति त-

---

श्वरे पदे आत्मतत्त्वव्यवहारविषये स्थाने निवेशयामि । स्थापयामीत्यर्थः । नितान्तप्रत्यासन्नयाऽभेदसंबन्धेन । नवद्वाराणि पुराणि शरीराणि ॥—**एक इति** । तेषु शरीरेष्वेकोऽऽप्येक एव परमात्मा विच्छिद्येव पृथक्कृत्येव बहुधानेकप्रकारेण विनिवेशित इव प्रवेशित इव । बिम्बप्रतिबिम्बन्यायेन प्रवेश इत्यर्थः । अथोऽनन्तरं तस्मिन्स्वचेष्टितं कर्तृत्वभोक्तृत्वसुखित्वदुःखित्वादिधर्मं विदधाति प्रक्षिपति । तत्र दृष्टान्तः । मणाविव । यथा जपादिरुपाधिः स्वधर्मं रक्तत्वादिकं मणौ प्रक्षिपति तद्वदित्यर्थः॥२८॥

---

१ '०शयामि । तमेव—नितान्तप्रत्यासन्न—पुराणि निर्माय' इति पाठः ।

मतिः—*(विचिन्त्य)अज्जउत्त, जादिसी मादा पुत्तको वि तादिसो जेव्व जादो ।

राजा—ततोऽसावहंकारेण चित्तस्य ज्येष्ठपुत्रेण नप्त्वा परिष्वक्तः । ततश्चासावीश्वरः ।

जातोऽहं जनको ममैष जननी क्षेत्रं कलत्रं कुलं
पुत्रा मित्रमरातयो वसु बलं विद्याः सुहृद्बान्धवाः ।
चित्तस्पन्दितकल्पनामनुभवन्विद्वानविद्यामयीं
निद्रामेत्य विघूर्णितो बहुविधान्स्वप्नानिमान्पश्यति ॥ २९ ॥

* आर्यपुत्र, यादृशी माता पुत्रोऽपि तादृश एव जातः ।

थात्मसंबन्धं देहादिस्वधर्ममात्मनि परमात्मनि दर्शयतीत्यर्थः ॥ २८ ॥—तत इति । ततः पुरप्रवेशानन्तरं चित्तस्य बुद्धितत्त्वस्य ज्येष्ठपुत्रेण स्वस्य नप्त्रा पुत्रतनयेनाहंकारेणासौ पुरुषः परिष्वक्त आलिङ्गितः । यथा लोके पितामहादीन्पौत्रादयोऽङ्कमासाद्यालिङ्गनं कुर्वन्ति तद्वदित्यहंकाराविष्टः सन्नित्यर्थः ॥—जात इति । जातोऽहमित्यादीनहंकारविक्षेपाननुभवति । अविद्यामयी मतिः । स्वार्थे मयट् । निद्राम् । अविद्यापरपर्यायामित्यर्थः । विद्वाञ्ज्ञानवान् साक्षी । चित्तस्पन्दितकल्पनामनुभवंश्चित्तविक्षेपकल्पनां जानानः जाग्रदादीन्स्वप्नान्मनोमात्रैकशरीरान्स्वष्टिप्रकारान्पश्यति । अत्र जाग्रदवस्थां स्वप्नतया पश्यतीत्याश्चर्यैकथनात्परिभावनाख्यं मुखसन्धेर्नवममङ्गम् । तल्लक्षणम्—'परिभावनमित्याहुराश्चर्यार्थनिवेदनम्' इ-

[मतिः—आर्यपुत्र, यादृशी माता पुत्रोऽपि तादृश एव जातः] ॥ अवस्थान्तरमप्याह—ततोऽसाविति । असौ परमात्माहंकारेण नप्त्रा चित्तस्य ज्येष्ठपुत्रेण परिष्वक्तः अहमिति व्यवहारविषयः कृत इति योजना ॥—ततश्चासावीश्वर इत्यग्रिमश्लोकोपस्कारकम् ॥ ततः किं स्यादत आह—जातोऽहमिति । विद्वानीश्वरोऽविद्यामयीमविद्याप्रधानां निद्रामेत्य प्राप्य बहुविधाननेकाकारानिमान्स्वप्नान्पश्यति । कीदृशो विद्वान् । विघूर्णितो विस्मृतस्वरूपः । पुनः कीदृशः । चित्तस्य मनसः स्पन्दितं चेष्टितं तस्य कल्पनां रचनामनुपतन्ननुगच्छन् । इमान्कानित्याह—जातोऽहमिति ।

१ 'मनुपतन्' इति प्राठः ।

मतिः—*अज्जउत्त, एवं [1]दीहतरणिद्दाविद्दविअप्पओहे पर-मेस्सले कहं प्पवोहोप्पत्ती भविस्सदि ।

राजा—(सलज्जमधोमुखस्तिष्ठति ।)

मतिः—†अज्जउत्त, किंति गुरुअरलज्जाभरणमिदसेहरो तूण्हीं-भूदोसि न प्पतिभणसि ।

राजा—प्रिये, सेर्ष्यं प्रायेण योषितां भवति हृदयम् । तेन सापराधमिवात्मानं शङ्के ।

मतिः—‡अज्जउत्त, अण्णा ता [2]इत्थियाओ जाओ सरसप्पउ-त्तस्स वा धम्मात्थवावारप्पत्थिअस्स भत्तुणो हिअअत्थिदं विहणन्दि

---

* आर्यपुत्र, एवं दीर्घतरनिद्राविद्रावितप्रबोधे परमेश्वरे कथं प्रबोधो-त्पत्तिर्भविष्यति ।

† आर्यपुत्र किमिति गुरुतरलज्जाभरनमितशेखरस्तूर्ष्णींभूतोऽसि न प्रतिभणसि ।

‡ आर्यपुत्र, अन्यास्ताः स्त्रियो याः सरसप्रवृत्तस्य वा धर्मार्थव्यापारप्र-स्थितस्य वा भर्तुर्हृदयस्थितं विघटयन्ति ।

---

त्यादि ॥ २९ ॥—एवं दीहतरेत्यादि । निद्राया दीर्घतरत्वं जाग्रत्स्वप्नसुषुप्तीनां स्वप्नात्मकत्वाङ्गीकारात् । प्रश्नोत्तरमाकूतैव ज्ञापयति—सलज्जमिति ।—स-लज्जभयमित्यर्थः । क्रियाविशेषणमेतत् । अधोमुखस्तिष्ठतीति लज्जानुभावः सू-चितः ॥—राजेत्यादि । स्वाभिप्रायमावेदितुकाम आह—सेर्ष्यमित्यादि ।

---

जनको ममैष इति योजना । सुगममन्यत् ॥ २९ ॥—[मतिः—आर्यपुत्र, एवं दीर्घ-दीर्घतरनिद्राविद्रावितप्रबोधे परमेश्वरे कथं प्रबोधोत्पत्तिर्भविष्यति ।] [आर्यपुत्र, किमिति गुरुतरलज्जाभरनमितशेखरस्तूर्ष्णींभूतोऽसि । ] [ आर्यपुत्र, अन्यास्ताः स्त्रियः, या स्वर-सप्रवृत्तस्य धर्मार्थव्यापारप्रस्थितस्य वा भर्तुर्हृदयेप्सितं विघ्नन्ति । ] पूर्वं कामेनोद्भा-

---

१ 'दीहदीहतरणिद्दाविद्दाविअप्पवोहे परमेसरे कधं' इति पाठः । २ 'इत्थि-आओ आ—त्तस्स धम्माथ्यवावारपत्थिअस्स वा भत्तुणो हिअअछिअं' इति पाठः ।

राजा—प्रिये,

मानिन्याश्चिरविप्रयोगजनितासूयाकुलाया भवे-
च्छान्त्यादेरनुकूलनादुपनिषद्देव्या मया संगमः ।
तूष्णीं चेद्विषयानपास्य भवती तिष्ठेन्मुहूर्तं ततो
जाग्रत्स्वप्नसुषुप्तिधामविरहात्प्राप्तः प्रबोधोदयः ॥ ३० ॥

मतिः—अज्जउत्त, जदि[1] एवं कुलप्पहुणो दिढगंथिणिबद्धस्स वि बन्धमोक्खो भोदि तदो ताए णिच्चानुबन्धो जेव्व अज्जउत्तो भोदु त्ति सुट्ठु मे पिअम् ।

राजा—प्रिये, यद्येवं प्रसन्नासि सिद्धास्तर्ह्यस्माकं[2] मनोरथाः । तथा हि—

* आर्यपुत्र यद्येवं कुलप्रभोर्दृढग्रन्थिनिबद्धस्यापि बन्धमोक्षो भवति तदा तया नित्यानुबन्ध एवार्यपुत्रो भवत्विति सुष्ठु मे प्रियम् ।

सापराधं कान्तान्तरासङ्गवशादिति हृद्गतम् ॥—मानिन्या इति । मानिन्या मानवत्याः । मानो नाम स्त्रीणां प्रियेऽन्यासङ्गिनि सतीर्ष्याकृतः कोपः । शान्त्यादेरिति पञ्चम्यनुकूलनान्नायिकानायकयोरित्यर्थः । जाग्रत्स्वप्नेत्यादिव्याख्या । अत्रोद्भेदो नाम मुखसन्धेर्दशममङ्गं सूचितम् गूढार्थभेदसूचनात् । तल्लक्षणम्—'उद्भेदः

सितं मतेः कालुष्यं त्याजयति—मानिन्या इति । यदि उपनिषद्देव्याः मया सह संगमः स्यात्तदा प्रबोधोदयः प्राप्त इत्यन्वयः । कीदृश्या उपनिषद्देव्याः । मानिन्याः 'स्त्रीणामीर्ष्याकृतः कोपो मान इत्यभिधीयते' इति लक्षणादीर्ष्याकृतकोपवत्याश्चिरं विप्रयोगो वियोगस्तेन जनिता यासूयेर्ष्या तयाकुलाया व्याकुलायाः । संगमे हेतुः । शान्त्यादेरनुकूलनादिति । हेत्वन्तरमाह—भवतीति । भवती विषयानपास्य मुहूर्तं तूष्णीं तिष्ठेच्चेत्तदा जाग्रत्स्वप्नसुषुप्तिधामविरहादिति । धामशब्दोऽत्र स्थानवाचकः । 'धामानि त्रीणि भवन्ति स्थानानि जन्मानि नामानि' इति नैरुक्तम् । तथा चायमभिप्रायः । जाग्रदाद्यभिमानस्थानाभावाच्छान्त्यादिमतो विचारप्रवृत्तस्य बुद्धेर्व्यासङ्गाभावात्प्रबोधोत्पत्तिरिति ॥ ३० ॥ [ मतिः—आर्यपुत्र, यदि एवं कुलप्रभोर्दृढग्रन्थिनिबद्धस्यापि बन्धमोक्षो भवति, तदा तया नित्यानुबन्ध एवार्यपुत्रो भवत्विति सुष्ठु मे प्रियम् । आर्यपुत्र, दृढग्रन्थिरहंकारस्तन्निबद्धस्य तदभिमानिनोऽपि यदि बन्धमोक्षः

[1] 'जइ एव्वं' इति पाठः । [2] '०स्तर्हि चिरमस्माकं' इति पाठः ।

बद्धैको बहुधा विभज्य जगतामादिः प्रभुः शाश्वतः
क्षिप्त्वा यैः पुरुषैः पुरेषु परमो मृत्योः पदं प्रापितः ।
तेषां ब्रह्मभिदां विधाय विधिवत्प्राणान्तिकं विद्यया
प्रायश्चित्तमिदं मया पुनरसौ ब्रह्मैकतां नीयते ॥ ३१ ॥

---

स परिज्ञेयो यत्र गूढार्थसूचनम्' ॥ ३० ॥—बद्धैक इत्यादि । एकोऽद्वितीयो जगतामादिर्जगदुपादानम् । तत्त्वादिवदनित्यः किं नेत्याह—शाश्वत इति । 'शाश्वतं शिवमव्ययम्' इति श्रुतेः । परमो विभुः स्वामी यैः पुरुषैः पुत्रायितैर्मनोभिः पुरेषु लिङ्गदेहेषु क्षिप्त्वा निधाय मृत्योः पदं संसारितां प्रापितः, मरणं च प्रापित इत्यवगम्यते । परं नाम ज्ञानेन्द्रियपञ्चकम्, कर्मेन्द्रियपञ्चकम्, अहंकारादिचतुष्टयम्, प्राणादिपञ्चकम्, वियदादिपञ्चकम्, अविद्याकामकर्माणीत्यष्टपुराणि । यथोक्तं संक्षेपशारीरके—'कर्मेन्द्रियाणि खलु पञ्च तथा पराणि बुद्धीन्द्रियाणि च मनोऽक्षचतुष्टयं च । प्राणादिपञ्चकमथो वियदादि पञ्च कामश्च कर्म च मतः पुनरष्टमीषु ॥' पुनःपातित्वाल्लिङ्गदेहमपि पुनरपि व्यपदेष्टुं शक्यते । पुरान्तःपातित्वं लिङ्गदेहस्योक्तं संक्षेपशारीरके—'इह तावदक्षदशकं मनसा सह बुद्धितत्त्वमथ वायुगुणः । इति लिङ्गमेतदुदितं त्वमुना सह संगतो भवति जीवः ॥' इति । ब्रह्मभिदां ब्रह्मणो भेदसंपादकानां ब्रह्महन्तॄणामिति च गम्यते । तेषां विधिवद्यथाविधि । क्रियाविशेषणमेतत् । प्रायश्चित्तमिति । प्रायो विनशनं । चित्तं सन्धानं । यथोक्तं धूर्तस्वामिना नवमप्रश्ने श्रुतिलक्षणम् 'प्रायश्चित्तं विध्यपराधे विधीयते' इत्यत्र प्रायःशब्दो विनाशवचनः प्रसिद्धः । चित्तिः सन्धानम् । कस्कादित्वात्सुद् इति । विनष्टानां कर्मणां पुनःसंधानात्मकं कर्मेत्यर्थः । विद्यया प्राणान्तिकम् । निदिध्यासनपर्यन्तमित्यर्थः । विद्यया वेदान्तार्थश्रवणेन प्रायो बहु निश्चितं विधाय मनोविवेकेन पुनरसौ पुरुषो ब्रह्मैकतां नीयते प्राप्यते । यद्वा विद्यया वेदान्तार्थज्ञानेन प्राणान्तिकं प्राणावधिकमत्यन्तशरीरशोषणम् । यद्वा द्वादशवार्षिकं नतु भृगुपातादिकम् । ब्रह्मैकतां नीयत इत्यत्र पुनर्ब्राह्मणैः संव्यवहारः । प्रतीतेऽस्मिन्प्रतीतार्थे विद्याशब्दः कर्माङ्गभूतज्ञानपरः । 'ज्ञा-

---

संसारनिवृत्तिस्तदा तया(ऽनादिमायया) उपनिषद्देव्या नित्यानुबन्ध एवाहंकाराभिमान्येव नित्यसंगतिरेव भवत्विति प्राक्तनान्वयः । अहंकारस्य परमते नित्यत्वान्नाशाभावादिति भावः ॥—बद्धैक इति । मयासावात्मा ब्रह्मैकतां चिदानन्दब्रह्मैक्यभावं नीयते । किं कृत्वा । तेषां पूर्वोक्तानां ब्रह्मभिदां ब्रह्मभेदकानां विद्यया ब्रह्माद्वैतसाक्षात्कारेण प्राणान्तिकं देहान्तं प्रायश्चित्तमिदं प्रसिद्धं विधाय कृत्वा । तेषामित्यत्र ते के । यैर्जगतामादिः प्रभुः स्वतन्त्रः शाश्वतोऽविनाशी एवंभूतोऽपि पुरुषः

तद्भवतु । प्रस्तुतविधानाय[1] शमादीन्योजयामः ।

(इति निष्क्रान्तौ[2] मतिविवेकौ ।)

इति श्रीकृष्णमिश्रयतिविरचिते प्रबोधचन्द्रोदये प्रथमोऽङ्कः ॥ १ ॥

---

त्वातिष्ठत्' इति वचनात् ॥ ३१ ॥ अत्र भेदो नाम मुखसन्धेरेकादशमङ्गम् । नायिकया नायकस्य प्रोत्साहकरणात् । तल्लक्षणं तु—'भेदः प्रोत्साहकरणम्' । **तद्भवत्वित्यादि** । अत्र शमादियोजनेन प्रकृतारम्भकरणं नाम द्वादशमङ्गं निरूपितम् । तल्लक्षणम् 'करणं प्रकृतारम्भः' इति । अत्र सा खलु विवेकेनोपनिषद्देव्यां प्रबोधचन्द्रेण भ्रात्रा समं जनयितव्येत्यत्र कथाबीजमुट्टङ्कितम्—'स्वल्पोद्दिष्टः कार्यहेतुर्बीजं विस्तार्यनेकधा' ॥ प्रथमं स्वल्पत्वोद्दिष्टः पश्चादनेकधा विस्तारिहेतुर्वक्ष्यमाणस्य कार्यस्य हेतुतयाऽर्थकृतस्तद्बीजमुच्यते । '...औत्सुक्यमारम्भः फललाभाय भूयसे' इति । इदमहं संपादयामीत्यध्यवसायमात्रमारम्भ इत्युक्तम् । प्राक्करणं प्रकृतारम्भः । अनयोः साधने सन्धिः । एतदुक्तं भवति—'आद्यन्तमेवं निश्चित्य पञ्चधा तद्विभज्य तु । खण्डं सन्धिश्च संज्ञास्तान्भागानपि च खण्डयेत् ॥ चतुःषष्टिश्च तानि स्युरङ्गानीति विदुर्बुधाः । अङ्गहीनो नरो यद्वन्नैवारम्भक्षमो भवेत् ॥ अङ्गहीनं तथा नाट्यं न प्रयोगक्षमं भवेत् ॥' इति । अतोऽङ्गनिरूपणं नाटकादावावश्यकम् । निष्क्रान्तौ मतिविवेकौ । **प्रथमोऽङ्क इति** । अङ्कशब्दश्चिह्नवाची । अङ्क्यते नायकतादात्म्यं नटेनात्रेत्यङ्कः । अङ्कलक्षणम्—'प्रत्यक्षनेतृचरितो बीजबिन्दुसमन्वितः । अङ्को नानाप्रकारार्थसंविधानरसाश्रयः ॥ एकाहे वैकरात्रे वा चरित्रं यत्र वर्ण्यते । प्रयुक्तैः पञ्चषैः पात्रैस्तेषामन्ते विनिर्गमः ॥' अत्र नेतृशब्देन नायकानायकप्रतिनायिका गृह्यन्ते । तेषां नेतृणां चरितं प्रत्यक्षनेतृचरितं रङ्गप्रदेशे प्रकाश्यं यत्र स तथोक्तः । प्रसक्तार्थोपसंहारी प्रसक्तार्थस्योपसंहारो यस्मिन्निति स तथोक्तः । पताकास्थानकेनान्वितः । पताकास्थानकलक्षणं वक्ष्यते—नानाप्रकाराणि बहुविधान्यर्थानामभिधेयानां संविधानानि रचनाविशेषाः यत्र रसे स तथोक्तस्तद्रसस्याश्रयः स्थानम् । एवंविधवस्तुविभागोऽङ्क इत्युच्यते । शेषं सुगमम् ॥

इति श्रीमद्राजाधिराजपरमेश्वरश्रीवीरप्रतापश्रीकृष्णरायमहाराजसाम्राज्यधुरन्धरश्रीसाल्वतिम्मदण्डनायकभागीनेयनाण्डिल्लगोपमन्त्रिशेखरविरचितायां प्रबोधचन्द्रोदयव्याख्यायां चन्द्रिकासमाख्यायां प्रथमोऽङ्कः ॥ १ ॥

---

परमेश्वरः पुरेषु नरकायादिष्वेक एव बहुधा विभज्य बद्ध्वा क्षिप्त्वा प्रवेश्य मृत्योः पदं जननमरणस्थानं प्रापितः ॥ ३१ ॥—प्रस्तुतविधानाय पूर्वोक्तार्थसिद्ध्ये । प्रबोधोत्पत्तयेऽद्वितीयात्मसाक्षात्कारोत्पत्तये ॥ इति श्रीप्र०दयव्याख्याने प्रकाशाख्ये प्रथमोऽङ्कः ॥ १ ॥

---

१ 'विधानाय प्रारब्धकरणीयविशिष्टदेशकालपात्रेषु प्रबोधोत्पत्तये शमादीन्' इति पाठः । २ 'निष्क्रान्ताः सर्वे' इति पाठः ।

## द्वितीयोऽङ्कः ।

(ततः प्रविशति दम्भः ।)

**दम्भः**—आदिष्टोऽस्मि महाराजमहामोहेन । यथा—वत्स दम्भ, प्रतिज्ञातं सामात्येन विवेकेन प्रबोधोदयाय । प्रेषिताश्च तेषु तेषु तीर्थेषु शमदमादयः । स चायमस्माकमुपस्थितः कुलक्षयो भवद्भिरवहितैः प्रतिकर्तव्यः । तत्र पृथिव्यां परमं मुक्तिक्षेत्रं वाराण-

---

इतः परं प्रतिमुखसन्धिः प्रस्तूयते 'विन्दुप्रयत्नयोः संवन्धः प्रतिमुखसन्धिः' इति । तल्लक्षणमुक्तम्—'लक्ष्यालक्ष्य इवोद्भेदस्तस्य प्रतिमुखं भवेत् । विन्दुप्रयत्नानुगमादङ्गान्यस्य त्रयोदश ॥' अस्यार्थः—तस्य बीजस्य किंचिल्लक्ष्य इवोद्भेदः प्रकाशनम् । तत्प्रतिमुखं नाम बीजमेव महाकार्यावान्तरभेदादनेकविधम् । अवान्तरकार्येण प्रधानकार्यविच्छेदे यदविच्छेदकारणवत्तद्विन्दुरिति । तदुक्तं दशरूपके—'अवान्तरार्थविच्छेदे विन्दुरच्छेदकारणम्' इति । तस्याङ्गानि त्रयोदश—'विलासः परिसर्पश्च विधूतं शर्मनर्मणी । नर्मद्युतिः प्रगमनं निरोधः पर्युपासनम् ॥ पुष्पं वज्रमुपन्यासो वर्णसंहार इत्यपि ॥' इति । एतेषां स्वरूपमुदाहरणनिरूपणसमये निरूपयिष्यामः । द्वितीयाङ्कपात्रं नेपथ्यसंज्ञकेनोपसन्धिनोपक्षेप्तुकामः कथासंघट्टनमात्रस्वरूपं नीचपात्रप्रयुक्तं प्रवेशकं नाम संध्यन्तरालं तावदाह—**ततः प्रविशति दम्भ इति** । अत्र दूतकल्पं नामोपसन्धिः । यथोक्तम्—'प्रश्नो दूतश्च लेख्यं च नेपथ्योक्तिस्तथैव च । आकाशभाषणं चेति विज्ञेयाः पञ्च सन्धयः ॥' इति । दम्भस्य महामोहदूतत्वात्सूचनांविनैव प्रवेशः । अनासूचितपात्रस्य पटाक्षेपात्प्रवेशनम् । राजादेरपि चादेशादद्भुतादिप्रदर्शनात् ॥' आदेशप्रकारमाह—**वत्स दम्भ इति** । राज्ञस्तस्मिन्वात्सल्यं दर्शयति-**प्रतिज्ञातमित्यादि** । प्रबोधोदयाय सामात्येन विवेकेन प्रतिज्ञातमित्यन्वयः । तत्रोपायोऽपि कृत इत्याह—**शमदमेत्यादि** । शमदमादयः प्रेषिताः । स चायमित्यादि । स चायं कुलक्षय इत्यन्वयः । तत्र पृथिव्यामित्यादि । पृथिव्यां परमं मुक्तिक्षेत्रं वाराणसीति । तथाच श्रुतिः—'अथ हैनमत्रिः

---

प्रथमेऽङ्केऽज्ञानकृतो निखिलोऽपि भेदावभास आत्माद्वैतावभासान्निरस्यत इति प्रतिपाद्य विवेकोद्योगमुपश्लुत्य इदानीं द्वितीयेऽङ्के महामोहोऽपि तत्तद्धर्मानुष्ठानवैफल्याय दम्भादीन्प्रेषयति । तथोक्तं 'दम्भं विना यः क्रियते स धर्मः' इति । **ततः प्रविशति दम्भ इत्यादि** । सामात्येन अमात्या मन्त्रिणस्तत्सहितेन । अवहितैरवधानयुक्तैः । सावधानैरित्यर्थः । प्रतिकर्तव्यो दूरीकर्तव्यः । निःश्रेयसविघ्नार्थं मोक्षप्रतिव-

सीनाम नगरी । तद्भवांस्तत्र गत्वा चतुर्णामप्याश्रमाणां निःश्रेयसविघ्नार्थं प्रयततामिति । तदिदानीं वशीकृतभूयिष्ठा मया वाराणसी । संपादितश्च स्वामिनो यथानिर्दिष्ट आदेशः । तथाहि मदधिष्ठितैरिदानीम्—

वेश्यावेश्मसु सीधुगन्धिललनावक्रासवामोदितै-
नीत्वा निर्भरमन्मथोत्सवरसैरुन्निद्रचन्द्राः क्षपाः ।
सर्वज्ञा इति दीक्षिता इति चिरात्प्राप्ताग्निहोत्रा इति
ब्रह्मज्ञा इति तापसा इति दिवा धूर्तैर्जगद्वञ्च्यते ॥ १ ॥

---

पप्रच्छ याज्ञवल्क्यम् । य एषोऽनन्तोऽव्यक्त आत्मा कथमहं विजानीयामिति । सहोवाच याज्ञवल्क्यः । सोऽविमुक्त उपास्यो य एषोऽनन्तोऽव्यक्त आत्मा सोऽविमुक्ते प्रतिष्ठित इति । सोऽविमुक्तः कस्मिन्प्रतिष्ठितः वरणायामस्यां च मध्ये प्रतिष्ठित इति । का वरणा काचाऽसीति सर्वानिन्द्रियकृतान्दोषानस्यत इत्यनेनासीभवति' इति । अतो वाराणसीति निर्वचनम् ॥—तदिदानीमित्यादि । वशीकृतभूयिष्ठा अत्यन्तवशीकृता । मयूरव्यंसकादित्वात्समासः । संपादितश्चेत्यादि । संपादितः संपादितप्राय इत्यर्थः । मदधिष्ठितैर्मदधीनैर्धूर्तैरित्यन्वयः ॥—वेश्यावेश्मस्वित्यादि । वेश्यानां वाराङ्गनानां वेश्मसु सद्मसु सीधुर्मद्यं तद्गन्ध इव गन्धो येषां तानि सीधुगन्धानि तानि च तानि ललनावक्त्राणि च तेष्वासवो मदिरा तेन मोदिताः संजातमोदास्तैः । हृष्टैरित्यर्थः । यद्वा सीधुना मद्येन गन्धो गर्वस्तद्युक्ताश्च ता ललनाश्च । मध्यमपदलोपी समासः । शेषं समानम् । निर्भरमन्मथोत्सवरसैः मन्मथोत्सवा मन्मथकेलयः तेषु निर्भर उत्कृष्टो रसः प्रीतिर्येषां तैः । उन्निद्रचन्द्राः प्रकाशमानश्चन्द्रो यासु ताः क्षपा रात्रयस्ताः । अत्रोन्निद्रचन्द्रपदेनोद्दीपनविभावः कथितः । नीत्वा गमयित्वा रात्रौ वेश्याभिः

---

न्धार्थं प्रयततामतिशयितो यत्नः क्रियताम् । अल्पयत्नेन न भवतीति भावः । यथानिर्दिष्टः यथात्वेनोक्तः । आदेश आज्ञा । मदधिष्ठितैरिति । मया दम्भेनाधिष्ठितैः । दाम्भिकैरित्यर्थः ॥—वेश्येति । धूर्तैर्वञ्चकैर्दिवा दिन एव जगन्नरनारीसमुदायात्मकं इति अनेन प्रकारेण सर्वज्ञत्वादिव्यपदेशेन वञ्च्यते प्रतार्यते । किं कृत्वा । वेश्यावेश्मसु वारविलासिनीमन्दिरेषु क्षपा रात्रीर्नीत्वातिवाह्य । कीदृश्यः क्षपाः । उन्निद्रः प्रकाशयुक्तः प्रकटश्चन्द्रो यासु ताः । कीदृशैर्धूर्तैः । सीधु मद्यं तद्गन्धो यत्र तादृशं ललनावक्त्रं कामिनीमुखं तत्रासवो मादकद्रव्यविशेषो मदिरा वा तया मो-

---

१ 'मया याया' इति पाठः । २ 'रसवरति' इति पाठः ।

(विलोक्य।) कोऽप्ययं पान्थो भागीरथीमुत्तीर्य सांप्रतमित एवाभिवर्तते। तथा च यथैषः—

ज्वलन्निवाभिमानेन ग्रसन्निव जगत्त्रयीम्।
भर्त्सयन्निव वाग्जालैः प्रज्ञयोपहसन्निव ॥ २ ॥

तथा तर्कयामि। नूनमयं दक्षिणराढाप्रदेशादागतो भविष्यति। तदेतस्यार्यस्याहंकारस्य वृत्तान्तमनुसरिष्यामि। (इति परिक्रामति)।

(ततः प्रविशत्यहंकारो यथानिर्दिष्टः।)

अहंकारः—अहो, मूर्खबहुलं जगत्। तथाहि—

---

क्रीडित्वा दिवा धूर्तैः सर्वज्ञा इति, दीक्षिता इति, चिरप्राप्ताग्निहोत्रा अविच्छिन्नाग्निहोत्रा इति, ब्रह्मज्ञा जीवन्मुक्ता इति, तापसा वानप्रस्था इति मनीषां जगतां स्वेषु संपादयद्भिर्जगद्वञ्च्यते प्रतार्यते ॥ १ ॥—विमर्शादनुनिर्णयाख्येन पतकास्थानकेन पात्रप्रवेशं सूचयति—**कोऽप्ययमित्यादि**। तदुक्तं सरस्वतीविलासे—'पताकास्थानकं प्राहुर्भाविनोऽर्थस्य सूचनम्। चतुर्भिः कारणैरेतैश्चतुर्धा परिकीर्तितम् ॥ सहसैवार्थसंपत्त्या विमर्शादनुनिर्णयात्। तुल्येन संविधानेन तथा तुल्यविशेषणात् ॥' इति। अत्र विमर्शादनुनिर्णयः। कोऽप्ययं पान्थ इति संदिह्यमानमयमित्यनुनिर्णयात्। यथा विक्रमोर्वशीये सूतः—'आयुष्मन्, पूर्वस्यां दिशि महता रथवेगेनोपदर्शितः शब्दः।'अयं च गगनात्कोऽपि तप्तचामीकराङ्गदः। अधिरोहति शैलाग्रं तडित्त्वानिव तोयदः ॥ पश्यन्त्योऽप्सरसः अम्मो चित्तरहो। ततः प्रविशति चित्ररथः'। ततः पात्रस्यावधारणानन्तरमप्सरोभिरम्भो चित्तरहो इत्युक्तिरिति निर्णीतम्। तदिदं विमर्शानुनिर्णयकृतं पातकास्थानकम् ॥ **ज्वलन्निति**। स्पष्टार्थः ॥ २॥ **तथेति**। दक्षिणराढाप्रदेशाद्दक्षिणराढानामैकं धारानगरं वाराणस्या दक्षिणस्यां दिशि वर्तते गौडराष्ट्रादागतः। गौडराष्ट्रमहंकारोत्पत्तिस्थानमिति प्रसिद्धिः। **परिक्रामतीति**। परिक्रमणमभिनयविशेषः। **ततः**

---

दितैः संतुष्टैः। पुनः कीदृशैः। निर्भरोऽतिशयितो मन्मथोत्सवो मैथुने रतिः प्रीतिर्येषां तैः। सुगममन्यत् ॥ १ ॥ यथैष इत्युत्तरान्वयि ॥—**ज्वलन्निति**। पूर्वार्धं सुगमम्। वाग्जालैर्जगत्त्रयं भर्त्सयन्निवेत्यनुषङ्गः। उपहसन्नुपहासं कुर्वन्निवेत्यत्रानुषङ्गो जगत्त्रयमित्यस्य ॥ २ ॥ वृत्तान्तं समाचारमनुसरिष्यामि ज्ञास्यामि ॥—

---

१ 'तदेतस्मात्' इति पाठः।

नैवाश्रावि गुरोर्मतं न विदितं कौमारिलं दर्शनं
तत्त्वज्ञानमहो न शारिकगिरां वाचस्पतेः का कथा ।
सूक्तं नापि महोदधेरधिगतं माहाव्रती नेक्षिता
सूक्ष्मा वस्तुविचारणा नृपशुभिः स्वस्थैः कथं स्थीयते ॥ ३ ॥

प्रविशतीत्यादि । मूर्खबहुलं मूर्खप्रायम् । पशुतुल्यमित्यर्थः । नैवाश्रावीत्यादि । गुरोः प्रभाकरगुरोर्मतं शास्त्रं नैवाश्रावि नाधीतमेव । कौमारिलं कुमारिलो भट्टाचार्यस्तेन कृतं शास्त्रं दर्शनं कौमारिलं न विदितं न ज्ञातम् । शारिकगिरां शारिका अस्य कार्यत्वेन सन्तीति शारिकः । अर्श आदित्वादच् । तस्य गिराम् । यद्वा शारिकाख्यो ग्रन्थः तत्संबन्धिन्यो गिरस्तासाम् । 'पुंवत्–' इत्यादिना पुंवद्भावः । शारिका नाम गुरुकृतस्य निबन्धनविवरणाख्यस्य शाबरभाष्यटीकाद्वयस्य पञ्चकाद्वितयं ऋजुविमलादीपशिखाख्यं तद्गिरां तत्त्वज्ञानं सिद्धान्तज्ञानं नास्ति । अहो आश्चर्यम् । वाचस्पतेः का कथा । अत्र वाचस्पतिशब्देन तत्कृतो ग्रन्थस्तस्य का कथा वार्ता । अविदितपूर्वमीमांसातत्त्वस्य वाचस्पतिमततत्त्वापरिज्ञानात् । महोदधिर्नाम शारिकनामा सह ब्रह्मचारी गुरुमतेर्निबन्धनकर्ता भवनाथवत् तस्य सूक्तं सिद्धान्तरहस्यं नाधिगतम् । माहाव्रतं महाव्रतो नाम भट्टमतानुवर्ती महोदधिप्रतिस्पर्धी भवदेववद्भवनाथवत् शारिकनाथमहोदधिमतानुवर्ती महोदधिः शारिकनाथप्रतिस्पर्धी इदानीमाचार्यमते भवदेवमतस्य गुरुमते भवनाथमतस्यैव प्राचुर्यमिति ग्रन्थकारैरनुल्लिखितमपि मतद्वयमस्माभिरुक्तम् । सूक्ष्मा तद्वस्तुविचारणा । गुरुमुखादिति शेषः । नेक्षिता नाभ्यस्ता । अतो नृपशवस्तैः । ज्ञानशून्यानां पशुतुल्यतया पशुत्वव्यपदेशः । यथोक्तम्—'आहारनिद्राभयमैथुनानि समान्यमीषां ( सामान्यमेतत् ) पशुभिर्नराणाम् । ज्ञानं नराणामधिको विशेषो ज्ञानेन हीनाः पशुभिः समानाः ॥' इति । ज्ञानसाधनभूतां विचारणां विहाय स्वस्थैः स्वस्थचित्तैः । कथं

नैवेति । नृपशुभिर्मनुष्यरूपैः पशुभिर्गुरोः प्रभाकरस्य मतं नैवाश्रावि नैव श्रुतम् । तौताततं[1] दर्शनम् कौमारिलं शास्त्रं न विदितं नैव ज्ञातमित्येवकारानुषङ्गः । सर्वत्र अहो इत्याश्चर्ये । शारिकगिरां प्रभाकरमतावलम्बिवाचां तत्त्वमनारोपितरूपं स्वरूपं नैव ज्ञातम्[2] । वाचस्पतेर्न्यायभाष्यव्याख्यातुर्वेदान्तभाष्यव्याख्यातुश्च का कथा । न कापि वार्तेत्यर्थः । महोदधेः सूक्तं शेषप्रणीतभाष्यस्य सूक्तं स्पष्टमपि नाधिगतम् । दुरुक्तं तु न सुतराम् । महाव्रतं पाशुपतव्रतं तत्संबन्धिनी माहाव्रती पाशुपतशास्त्रसंहतिर्नेक्षिता न दृष्टा । वस्तुविचारणा सूक्ष्मा, वस्तु औपनिषदं ब्रह्म तद्विचारणा

१ 'तौतातित' इति पाठः ।　२ 'तत्त्वं ज्ञानं' इति पाठः ।

(विलोक्य) एते तावदर्थावधारणविधुराः स्वाध्यायाध्ययनमात्रनिरता वेदविप्लावका एव । (पुनरन्यतो गत्वा) एते च भिक्षामात्रगृहीतयतिव्रता मुण्डितमुण्डाः पण्डितंमन्या वेदान्तशास्त्रं व्याकुलयन्ति । (विहस्य)

प्रत्यक्षादिप्रमासिद्धविरुद्धार्थावबोधिनः[1] ।
वेदान्ता यदि शास्त्राणि बौद्धैः किमपराध्यते ॥ ४ ॥

---

स्थीयते । भावे यक् । 'अजरामरवत्प्राज्ञो विद्यामर्थं च साधयेत् । गृहीत इव केशेषु मृत्युना धर्ममाचरेत् ॥' इत्युपदेशः कथं विस्मृत इति भावः । अनया वचनभङ्ग्या ग्रन्थकारः स्वमाहात्म्यं प्रकटितवानिति विज्ञायते ॥ ३ ॥—**विलोक्येति** । अभिनयविशेषः । विलोक्य घटशासिन इति शेषः । **एते तावदित्यादि** । एते घटशासिनः । अर्थज्ञानविधुरा अर्थज्ञानशून्याः । अत एव वेदविप्लावका वेदोपद्रवकारिणः । वेदनाशका इत्यर्थः । एतदुक्तं भवति । स्वाध्यायाध्ययनमर्थाववोधपर्यन्तम् । अर्थाववोधश्चानुष्ठानपर्यन्तः । अर्थाववोधानुष्ठानयोरभावे घटशासिनां स्वाध्यायाध्ययनमात्रनिरतानां स्वत एवायाति वेदविप्लवत्वमिति । पुनरन्यतो गत्वेत्यभिनयविशेषः । **एते चेत्यादि** । पण्डितंमन्या विद्वन्मानिनो वेदान्तशास्त्रं व्याकुलयन्ति । वेदान्तशास्त्रतत्त्वमजानाना एव परान्मोहयन्तीत्यर्थः । इदानीमहंकारः सेवकवशात्स्वप्रागल्भ्यप्रकटनार्थं परान्वञ्चयितुं वेदान्तसिद्धं दूषयति—**प्रत्यक्षेति** । प्रत्यक्षादिप्रमासिद्धविरुद्धार्थाववोधिनो वेदान्ता यदि शास्त्राणि स्युस्तर्हि बौद्धैः किमपराध्यते । प्रत्यक्षं नाम प्रतिविषयाध्यवसायः साक्षात्कार इत्यर्थः । आदिशब्देनानुमानादिकं गृह्यते । प्रत्यक्षादिप्रमाणानां प्रमा यथार्थानुभवस्तया सिद्धोऽर्थः प्रपञ्चसत्यत्वादिस्तद्विरुद्धोऽर्थस्तस्मिन्मिथ्यात्वादिस्तदभिदधति प्रतिपादयन्तीति तद्विरुद्धार्थाभिधायिनो वेदान्ताः शास्त्राणि यदि भवेयुः । बुद्धमुनिकृतानि शास्त्राणि बौद्धानि तैः

---

सूक्ष्मा । दुर्विज्ञेयेत्यर्थः । एवं सति स्वस्थैः पण्डितानामस्माकं न किंचिद्विवेचनीयमस्तीति स्वस्थचित्तैः कथं स्थीयत इत्यर्थः ॥ ३ ॥ विलोक्य । शुद्धवैदिकानिति शेषः । अर्थावधारणाविधुरा अर्थनिश्चयरहिताः । पुनरन्यतो गत्वा विलोक्येति शेषः । भिक्षामात्रेति । भिक्षामात्रार्थं गृहीतं यतिव्रतं यैस्ते । भिक्षामात्रं प्रयोजनं न मुक्तिः । गृहीतयतिव्रता नतु यतय इत्यर्थः । मुण्डितं मुण्डं यैस्ते नतु मुण्डितमनस इत्यर्थः । आत्मानं पण्डितं मन्यन्ते ते पण्डितंमन्याः । नतु पण्डिता इत्यर्थः । प्रत्यक्षादीति । प्रत्यक्षादिप्रमासिद्धो योऽर्थस्तद्विरुद्धो योऽर्थः स्वर्गादिरूपस्तमभिदधतीत्येवंशीला वेदान्ता यदि शास्त्राणि तर्हि बौद्धैः किमपराध्यते । न किमपी-

---

१ 'ऽभिधायिनः' इति पाठः ।

तदेतद्वाङ्मात्रश्रवणमपि गुरुतरदुरितोदयाय । (पुनरन्यतो गत्वा) एते च शैवपाशुपतादयो दुरभ्यस्ताक्षपादमताः पशवः पाषण्डाः । अमीषां संभाषणादपि नरा नरकं यान्ति । तदेते दर्शनपथाद्दूरतः परिहरणीयाः ।

(पुनरन्यतो गत्वा) एते च—

गङ्गातीरतरङ्गशीतलशिलाविन्यस्तभास्वद्बृसी-
संविष्टाः कुशमुष्टिमण्डितमहादण्डाः करण्डोज्ज्वलाः ।

---

किमपराध्यते । मतद्वयस्य तुल्यत्वाद्वेदान्तशास्त्रादरः स्वामिनिवेशमात्रादिति भावः ॥ ४ ॥ **एते चेत्यादि** । शैवपाशुपतादयः शैवप्रधानं पाशुपतव्रतं येषां ते शैवपाशुपताः । आदिशब्देन शाक्तपाशुपताः संगृह्यन्ते । दुरभ्यस्ताक्षपादमताः अक्षपादेन वेदप्रामाण्याङ्गीकारात्तत्प्रामाण्यप्रकारानभिज्ञतया तदभ्यासो दुष्कर इति भावः । पाशः प्रकृतिस्तेन बद्धो जीवः पशुस्तस्य पतिरीश्वरः । 'पश बन्धने' इत्यस्माद्धातोरौणादिक उप्रत्यये पशुशब्दो निष्पन्नः।प्राकृत उभयोः संबन्धः । अण्वादिकं मलं तस्य प्रेरकः पतिरीश्वरः । स च जगत्कर्ता जगन्नियन्ता । कार्यरूपप्रपञ्चः कर्तारं विना च सिध्यतीति काव्यलिङ्गानुमानसिद्धः । यथोक्तं वायवीयसंहितायां वायुना—'पशुः पाशः पतिश्चेति कथ्यते तत्त्रयं क्रमात् । पाशः प्रकृतिरुद्दिष्टा पुरुषो मायया वृतः ॥ संबन्धो मलकर्मभ्यां शिवः प्रेरक ईश्वरः । अस्ति कश्चिदपर्यन्तं(?) रमणीयगुणाश्रयः ॥ पतिर्विश्वस्य निर्माता पशुपाशविलक्षणः । अभावे तस्य विश्वस्य दृष्टिरेषा कथं भवेत् ॥ अचेतनत्वादज्ञत्वादनयोः पशुपाशयोः । प्रधानपरिमाण्वादि यावत्किंचिदचेतनम् ॥ न कर्तृत्वं स्वयं दृष्टं बुद्धिमत्कारणं विना । जगच्च कर्तृतापेक्षं कार्यं सावयवं यतः ॥ तस्मात्कार्यस्य कर्तृत्वं पत्युर्न पशुपाशयोः । पशोरपि च कर्तृत्वं पत्युः प्रेरणपूर्वकम् ॥' इति । अतश्च शैवपाशुपतयोर्हैतुकत्वाद्वेदस्यापि हैतुकतयैव प्रामाण्याङ्गीकाराद्वेदबाह्यप्राया एव । अत उक्तं मनुना—'हैतुकान्बकवृत्तींश्च वाङ्मात्रेणापि नार्चयेत्' इति ॥—**गङ्गातीरेत्यादि** । बृसीमासनम् । कुशमुष्टिमण्डितमहादण्डाः कुशमुष्टिभिर्मण्डिता अलंकृता मुष्टिर्येषाम् । गृहीतकुशा इत्यर्थः । महान्पूज्य इ-

---

त्यर्थः ॥ ४ ॥ तदेतैरिति । वाङ्मिश्रणं वाचां मिश्रणम् । संभाषणमिति यावत् । दुरितोदयाय पापोत्पत्तये दुःखेनाभ्यस्तमक्षपादमतं कणादशास्त्रं यैस्ते ॥—गङ्गातीरेति । अहो इत्याश्चर्ये । दाम्भिका दम्भप्रधानाः धनिनां वित्तानि हरन्ति । कीदृशा दाम्भिकाः । गङ्गातीरे तरङ्गैः शीतला याः शिलास्तासु विन्यस्ताः प्रक्षिप्ता याः

---

१ 'तदेतैर्वाङ्मिश्रणमपि' इति पाठः ।

पर्यायग्रथिताक्षसूत्रवलयप्रत्येकवीजग्रह-
व्यग्राग्राङ्गुलयो हरन्ति धनिनां वित्तान्यहो दाम्भिकाः ॥ ५ ॥

(पुनरन्यतो गत्वा) एते त्रिदण्डव्यपदेशजीविनो द्वैताद्वैतमार्गपरिभ्रष्टा एव। (अन्यतो गत्वा विलोक्य) अये, कस्यैतद्द्वारोपान्तनिखातातिप्रांशुवंशकाण्डताण्डवितधौतसितसूक्ष्माम्बरसहस्रमितस्ततो विन्यस्तकृष्णाजिनदृषदुपलसमिच्चषालोलूखलमुसलमनवरतहुताज्यगन्धिधूमैश्यामलितगगनमण्डलममरसरितो नातिदूरे विभात्याश्रम-

---

त्यर्थः। दण्डो वैणवो येषां ते विशेषणसमासः। करण्डोज्ज्वलाः करण्डैः कमण्डलुभिरुज्ज्वलाः। तथा च स्मृतिः—'वेणुमान्सुकमण्डलुः' इति। अथवा करण्डैर्देवतापेटिकादिभिरुज्ज्वलाः। पर्यायेत्यादि व्यक्तम् ॥५॥—**त्रिदण्डेत्यादि**। त्रिदण्डव्यपदेशजीविनः। जीवितार्थमेव दण्डं धृतवन्त इत्यर्थः। न ज्ञानिनः। अत एवाह द्वैताद्वैतमार्गपरिभ्रष्टाः द्विधैव द्वैतं। स्वार्थेऽण्। वेदस्य पूर्वकाण्डो द्वैतनिबन्धनः। उत्तरकाण्डस्त्वद्वैतनिबन्धनः। त्रिदण्डिनो भट्टभास्करमतानुवर्तिनः संन्यासिनो भेदाभेदवादिनः। तेऽपि तत्प्रतिपादकवेदाभावादवैदिकप्राया एवेति भावः। **अये कस्यैतदित्यादि**। ताण्डवितं वायुवशाच्चलितम्। अमरसरितो भागीरथ्या नातिदूरेऽतिनिकटे। नशब्देन सुप्सुपेति समासः। तदुक्तं वामनेन—'नैकशब्दः सुप्सुपेति समासात्' इति। यद्यपि गुरुणा दशमान्त्यपादे 'नानु-

---

भास्वन्त्यो वृस्य ऋषीणामासनानि तेषु संविष्टाः। पुनः कीदृशाः। कुशमुष्टिना मण्डितः शोभितो महादण्डो बृहद्भुजदण्डो येषां ते। पुनः कीदृशाः। करण्डैर्धौतवसनस्थापनोपयोगिवंशपात्रैरुज्ज्वलाः शोभमानाः। पुनः कीदृशाः। पर्यायेणावृत्त्या ग्रथितं यदक्षसूत्रवलयं मणिमालारूपं तस्य प्रत्येकं बीजग्रहे मणिग्रहणे व्यग्राश्चञ्चला अग्राङ्गुलयो येषां ते तथा ॥ ५ ॥—**एते चेति**। त्रिदण्डिव्यपदेशेन त्रिदण्डिच्छलेन जीविनो द्वैताद्वैतमार्गपरिभ्रष्टाः। भट्टभास्करमतावलम्बनादुभयभ्रष्टा इत्यर्थः। अहंकारो विचारयति—**अये कस्येदमिति**। अये इति संबोधनमहो इत्यर्थे। इदं परिदृश्यमानममरसरितो देवनद्या गङ्गाया नातिदूरतः निकट एव कस्याश्रमपदं विभाति शोभते। कीदृशमाश्रमपदम्। द्वारोपान्ते द्वारनिकटभूमौ निखातमारोपितमतिप्रांश्वत्युच्चं यद्वंशकाण्डं तस्मिंस्ताण्डवितं नृत्यत् धौतं प्रक्षालितं सितं श्वेतं सूक्ष्मं च बहुमूल्यमम्बरसहस्रं वस्त्रसहस्रं यस्मिंस्तत्। पुनः कीदृशः। इतस्ततो वि-

---

१ 'कस्येदं द्वारो' इति पाठः। २ 'दुपलचमसचषालो' इति पाठः। ३ 'श्यामलीकृत' इति पाठः। ४ 'आश्रमपदम्' इति पाठः।

मण्डलम् । नूनमिदं कस्यापि गृहमेधिनो गृहं भविष्यति । भवतु । युक्तमस्माकमतिपवित्रमेतद्द्वित्रिदिवसनिवासस्थानम् । (प्रवेशं नाटयति)। (विलोक्य च) अये,

मृद्बिन्दुलाञ्छितललाटभुजोदरोर:-
　कण्ठोष्ठपृष्ठचुबुकोरुकपोलजानुः ।
चूडाग्रकर्णकटिपाणिविराजमान-
　दर्भाङ्कुरः स्फुरति मूर्त इवैष दम्भः ॥ ६ ॥

भवतूपसर्पाम्येनम् । (उपसृत्य) कल्याणं भवतु भवताम् । (दम्भो हुंकारेण निवारयति ।)

(प्रविशति बटुः ।)

बटुः—(ससंभ्रमम् ।) ब्रह्मन्, दूरत एव स्थीयताम् । यतः पादौ प्रक्षाल्य एतदाश्रमपदं प्रवेष्टव्यम् ।

---

याजेषु येयजामहं करोती'त्यत्र नसमासो निषिद्धः । तथापि महाकविप्रयोगात्सिद्धः ॥ द्वित्रिदिवसनिवासस्थानमिति । द्वौ वा त्रयो वा द्वित्राः । 'सङ्ख्ययाव्यया-' इत्यादिना बहुव्रीहिः । 'बहुव्रीहौ सङ्ख्येये' इति डच् । अत्र 'संदेहोऽन्यपदार्थे'ति पदार्थमञ्जरीकारः । द्वित्रिदिवसेषु निवासस्थानमिति समासः ॥ -मृद्बिन्द्विति । एष व्राणीभूतो(?) दम्भ इति प्रान्ते भातीत्यर्थः॥६॥ कल्याणं भवत्वित्यादि । हुंकारेण निवारयति । सर्वेषां नमस्कार्यं महानुभावं मां प्रति कथमाशीर्वाद इति कुपितवानित्यर्थः । इदमर्थमजानानो बटुः ब्रह्मन् दूरत एव स्थीयतामित्यादि कथमस्माकं कुलं परीक्षितव्यमित्यन्तं

---

न्यस्तानि स्थापितानि कृष्णाजिनमारभ्य मुसलान्तानि यज्ञपात्राणि यस्मिंस्तत् । पुनः कीदृशः । अनवरतं निरन्तरं हुतस्याज्यस्य गन्धो यस्मिन्नेतादृशो यो धूमस्तेन श्यामलीकृतं श्यामीकृतं गगनमण्डलं यस्मिंस्तत् । नूनमिति । अदः इदं गृहमेधिनो गृहस्थस्य । दम्भमजानन्नाह—मृद्बिन्द्विति । एष दम्भो मूर्त इव मूर्तिमानिव स्फुरति मम प्रतिभाति । कीदृशः । मृद्बिन्दुभिर्मृन्निर्मितवर्तुलतिलकैर्लाञ्छितानि चिह्नितानि ललाटादीनि जान्वन्तानि यस्य सः । पुनः कीदृशः चूडाग्रं शिखाग्रं तस्मिन्कर्णकटिपाणिषु च विराजमाना दर्भाङ्कुरा यस्य सः ॥ ६ ॥ भवतूपसर्पाम्येन-

---

१ 'नूनमदः' इति पाठः । 'निवासाय' इति पाठः ।

**अहंकारः**—(सक्रोधम् ।) आः पाप, तुरुष्कदेशं प्राप्ताः स्मः यत्र श्रोत्रियानतिथीनासनपाद्यादिभिरपि गृहिणो नोपतिष्ठन्ति ।

**दम्भः**—(हस्तसंज्ञया समाश्वासयति ।)

**बटुः**—एवमाराध्यपादा आज्ञापयन्ति । दूरदेशादागतस्यार्यस्य कुलशीलादिकं न सम्यगस्माकं वेदितव्यम्[1] ।

**अहंकारः**—आः कथमस्माकमपि कुलशीलादिकमिदानीं परीक्षितव्यम् । श्रूयताम्—

गौडं राष्ट्रमनुत्तमं निरुपमा तत्रापि राढापुरी
भूरिश्रेष्ठकनाम[2] धाम परमं तत्रोत्तमो नः पिता ।
तत्पुत्राश्च महाकुला न विदिताः कस्यात्र तेषामपि
प्रज्ञाशीलविवेकधैर्यविनयाचारैरहं चोत्तमः ॥ ७ ॥

(दम्भो बटुं पश्यति ।)

**बटुः**—(ताम्रघटीं गृहीत्वा ।) भगवन्, पादशौचं विधीयताम् ।

**अहंकारः**—(स्वगतम् ।) भवतु । कोऽत्र विरोधः । एवं क्रियते । (तथा कृत्वोपसर्पति ।)

---

स्पष्टम् ॥—श्रूयतामित्यादि । गौडमिति । भूरिश्रेष्ठकनामेत्यन्वर्थसंज्ञेयम् । भूरयः श्रेष्ठा महानुभावा यस्मिन्धामनीति । उत्तम उत्तमनामकः । **महाकुला न विदिता इति** । महाकुला न विदिताः । कस्येत्याक्षेपे । सर्वस्यापि विदिता एवेत्यर्थः । तेषामपीति निर्धारणे षष्ठी । अहं चोत्तमः । अन्वर्थसंज्ञे-

---

मित्यारभ्य यत्र श्रोत्रियानित्यन्तं सुगमम् ॥ यत्रेति । अतिथीननागतपूर्वान् । तत्रापि श्रोत्रियान् गृहिणो गृहस्था नोपतिष्ठन्ति न संमुखमायान्ति । बटुर्दम्भशिष्यः । वदतीति शेषः ॥—गौडमिति । गौडं राष्ट्रं देशः अनुत्तमं न विद्यते उत्तमं यस्मात्तदनुत्तमम्, तत्रापि राढानगरी निरुपमा, तत्रापि राढापुर्यां भूरिश्रेष्ठिक इति नाम यस्य तस्य परमं धाम उत्कृष्टं गृहम् । अस्तीति शेषः । तत्र तस्मिन्धाम्नि नोऽस्माकं पिता उत्तमः उत्तमनामको वास्तीति शेषः । तत्पुत्रा महाकुलाश्चात्र जगति कस्य न विदिताः । अपितु सर्वस्यैव विदिता इत्यर्थः । तेषां पुत्राणामपि मध्येऽहं प्रज्ञा बुद्धिः, शीलं स्वभावः, विवेको विचारः, धैर्यं धीरता, विनयो नम्रता, आचारश्च एतैर्गुणैरुत्तमः । सर्वोत्कृष्ट इत्यर्थः ॥ ७ ॥—दम्भ इत्या-

---

१ 'विदितम्' इति पाठः । २ 'श्रेष्ठिक' इति पाठः ।

दम्भः—(दन्तान्संपीड्य वटुं पश्यति ।)

वटुः—दूरे तावत्स्थीयताम् । वाताहताः प्रस्वेदकणिकाः प्रसरन्ति ।

अहंकारः—अहो, अपूर्वमिदं ब्राह्मण्यम् ।

वटुः—ब्रह्मन्, एवमेतत् । तथाहि—

अस्पृष्टचरणा ह्यस्य चूडामणिमरीचिभिः ।
नीराजयन्ति भूपालाः पादपीठान्तभूतलम् ॥ ८ ॥

अहंकारः—(स्वगतम्) अये, दम्भग्राह्योऽयं देशः । (प्रकाशम्) भवतु । अस्मिन्नासने उपविशामि । (तथा कर्तुमिच्छति ।)

वटुः—मैवम् । नाराध्यपादानामन्यैरासनमाक्रम्यते ।

अहंकारः—आः पाप, अस्माभिरपि दक्षिणराढाप्रदेशप्रसिद्धविशुद्धिभिर्नाक्रमणीयमिदमासनम् । शृणु रे मूर्ख,

नास्माकं जननी तथोज्ज्वलकुला सच्छ्रोत्रियाणां पुन-
र्व्यूढा काचन कन्यका खलु मया तेनास्मि तताधिकः ।

---

यम् ॥७॥ वटुं पश्यतीत्यारभ्यैवमेवेत्यन्तं स्पष्टम् । तथाहीत्यादि । यस्य मद्गुरोः पादपीठान्तर्भूतलं भूपाला अस्पृष्टचरणाः सन्तः पादपीठसमीपभूतलमेव चूडामणिमरीचिभिर्नीराजयन्तीत्यन्वयः॥८॥अहंकार इत्यारभ्य आः पापेत्यन्तं स्पष्टम् ॥—नास्माकं जननीत्यादि । तथोज्ज्वलकुला । यथा कन्योज्ज्वलकुला मया व्यूढा तथा मातोज्ज्वलकुला न भवति । तेन कारणेन तताधिकोऽस्मि पितरम-

---

रभ्य तथा हीत्यन्तं निगदव्याख्यानम् । अहो इत्युपहासोक्तिः । अपूर्वमिदं ब्राह्मण्यम् ॥—अस्पृष्टेति । हि निश्चितं भूपालाः राजानोऽस्य दम्भस्य पादपीठस्यान्तेऽवसाने निकटे भूतलं चूडामणिमरीचिभिर्मुकुटमाणिक्यरश्मिभिर्नीराजयन्त्यारार्तिक्यक्रिययोपचरन्ति । कीदृशा भूमिपालाः । अस्पृष्टचरणाः न स्पृष्टौ चरणौ यैस्ते । चरणस्पर्शरहिता इत्यर्थः । एतेन राजपूजानिबन्धनमेव ब्राह्मण्यम् न विद्यातपोव्रतैर्दाम्भिकानामिति भावः ॥ ८ ॥ अहंकार इत्यारभ्य शृणु रे मूर्खेत्यन्तं सुबोधम् । सुबोधमध्ये परेषामासनोपवेशेनाहंकारोत्यनाचारीति नैवमाराध्यपादानामित्यनेन ध्वनितम् ॥ नास्माकमिति । अस्माकं जननी माता तथोज्ज्वलकुलोत्कृष्टकुला

---

१ 'पीडयित्वा । दूरे' इति पाठः । २ 'यस्य' इति पाठः । ३ 'देशः । भवतु' इति पाठः । ४ 'नैवमाराध्यपादानामासनमन्यैराक्रम्यते' इति पाठः । ५ 'राढाप्रसिद्धशुद्धिभिर्नाक्रमणीयं' इति पाठः ।

असमच्छालकभागिनेयदुहिता मिथ्याभिशप्ता यत-
स्तत्संपर्कवशान्मया स्वगृहिणी प्रेयस्यपि प्रोज्झिता ॥ ९ ॥

दम्भः—ब्रह्मन्, यद्यप्येवं तथाप्यस्माकमविदितवृत्तान्तो भवान्। तथाहि—

सदनमुपगतोऽहं पूर्वमम्भोजयोनेः
सपदि मुनिभिरुच्चैरासनेषूज्झितेषु।
सशपथमनुनीय ब्रह्मणा गोमयाम्भः-
परिमृजितनिजोरावाशु संवेशितोऽस्मि ॥ १० ॥

अहंकारः—(स्वगतम्) अहो, दाम्भिकस्य ब्राह्मणस्यात्युक्तिः। (विचिन्त्य) अथवा दम्भोयम्। भवत्वेवं तावत्। (प्रकाशम्)[2] आः, किमेवं गर्वायसे। (सक्रोधम्)

---

तिक्रान्तोऽस्मि ॥—यत इत्यादि। असमच्छालकभागिनेयत्वं यद्यपि स्वपुत्रे वर्तते तथापि दूरसंबन्धप्रतिपादनपरत्वाद्वाक्यस्य भागिनेयशब्देन सपत्नीभागिनेयो विवक्षितः ॥९॥ यद्येवमित्यर्धाङ्गीकारे ॥१०॥ अहो ब्राह्मणस्य दाम्भिकस्यात्युक्तिः। दाम्भिकस्य दम्भोपजीवनः। अथवा दम्भोऽयमिति। मूर्तो दम्भ इत्यर्थः॥—आः किमेवमित्यादि। गर्वायसे गर्ववानिवाचरसि। 'कर्तुः क्यङ् सलोपश्च' इति

---

न, मया पुनः समीचीनश्रोत्रियाणां कन्या व्यूढा परिणीता। तेन कारणेनाहं ताताधिकः पित्रधिकः। 'उत्तमैरुत्तमैर्नित्यं संबन्धानाचरेद्बुधः' इति स्मरणात्संबन्धकृतमुत्तमत्वम्। आचारातिशयं दर्शयति। अस्माकं शालकोऽस्मच्छालकस्तस्य मित्रं तस्य मातुलो मातुर्भ्राता तस्य सुता कन्या सायतो हेतोर्मिथ्याभिशप्ता मिथ्याभिशापयुक्ता तत्संपर्कवशात्परंपरासंबन्धान्मया प्रेयस्यपि प्रेमास्पदमपि स्वगृहिणी प्रोज्झिताऽत्यन्तं त्यक्ता ॥ ९ ॥ सदनमिति। अहं पूर्वमम्भोजयोनेर्हिरण्यगर्भस्य सदनं गृहं प्रत्युपगतः। ब्रह्मणा हिरण्यगर्भेण गोमयाम्भःपरिमृजितनिजोरौ गोमययुक्तेनाम्भसा जलेन परि समन्तान्मृजितः शोधितो निजः स्वीय ऊरुरङ्कस्तस्मिन्सशपथं यथा स्यात्तथानुनीय मानयित्वोपवेशितः। केषु सत्सु। उच्चैरतिशयेन मुनिभिः सपदि तत्क्षण एव आसनेषूज्झितेषु त्यक्तेषु सत्सु। एतेन हिरण्यगर्भस्यापि वयं मान्याः किं

---

१ 'श्यालकमित्रमातुलसुता' इति पाठः। २ 'सक्रोधं प्रकाशम्' इति पाठः।

अरे क इव वासवः कथय कोऽत्र पद्मोद्भवो
　　वद प्रभवभूमयो जगति का मुनीनामपि[1] ।
अवेहि तपसो बलं मम पुरन्दराणां शतं
　　शतं च परमेष्ठिनां पततु वा मुनीनां शतम् ॥ ११ ॥

**दम्भः**—(विलोक्य । सानन्दम् ।) अये, आर्यः पितामहोऽस्माक-[2] महंकारः । आर्य, दम्भो लोभात्मजोऽहं भो अभिवादये ।

**अहंकारः**—वत्स, आयुष्मान्भव । बालः खल्वसि मया द्वापारान्ते दृष्टः । संप्रति चिरकालविप्रकर्षाद्वार्धक्यग्रस्ततया च न सम्यक्प्रत्यभिजानामि । अथ त्वत्कुमारस्यानृतस्य कुशलम् ? ।

---

क्यङ् । 'विन्मतोर्लुक्' इति लुक् ॥—**अरे क इवेत्यादि** । अरे दम्भ, ब्रह्मणा संभावितोऽहमिति वदसि सोऽपि ब्रह्मा कोनु वद । वासवो ऋषिसङ्घजुष्टः क इव । मुनीनां प्रभवभूमयो जन्मस्थानानि । वसिष्ठादीनामुत्पत्त्यादीनीति ध्वनिः । काः कीदृशीर्वद । तृणीकृतब्रह्मपुरंदरस्य मम पुरतः के वा भवादृशाः कीटाः सन्ति । मम तपसो बलमवेहि । येन तपसो बलेन तव पुरतः पुरंदराणां शतं, परमेष्ठिनां शतं, मुनीनां शतं पततु स्थानाच्च्यवताम् । संप्रश्ने लोट् । शतमिति बहुसंख्योपलक्षणम् । असंख्याकान्पुरन्दरादीन्निर्मातुं पातयितुं वा शक्तस्य मम पुरो ब्रह्मणा संभावित इति किमेवं गर्वायसे ॥ ११ ॥ **विलोक्य सानन्दमित्यादि** । अये इति संबोधनम् । **लोभात्मज इति** । लोभमूलो दम्भ इत्यर्थः । द्वापारान्ते । कलियुगादावित्यर्थः । अथेति प्रश्ने । यद्यपि प्रमादालस्यवि-

---

पुनर्मानुपाणामिति व्यज्यते ॥ १० ॥ मत्तपोविजृम्भितमिदमित्याहाहंकारः—**अनेक इति** । अरे इति नीचसंबोधने । वासवः शतक्रतुः क इव । न कोपीत्यर्थः । अहल्यागामित्वादिति ध्वनितम् । अत्र जगति पद्मोद्भवो ब्रह्मा क इति कथय । स्वकन्यागामित्वादिति तात्पर्यम् । जगति ऋषीणामपि मन्त्रद्रष्टॄणामपि प्रभवभूमय उत्पत्तिभूमयः काः कथय । अनेन धीवरकन्यातो व्यासः, कुम्भसंभवोऽगस्त्यः, हरिण्या ऋष्यशृङ्गी, एवमादीन्युत्पत्तिस्थानानीति ध्वनितम् । ईदृशं मम तपसः सामर्थ्यमस्तीत्याह—**अवेहीति** । मम तपसो बलमवेहि जानीहि । किं तत्तदाह । पुरंदराणामिन्द्राणां, परमेष्ठिनां ब्रह्मणां, मुनीनां मननशीलानां प्रत्येकं शतं पततु । मत्तपःसामर्थ्यात्सर्वमाहंकारिकमिति भावः ॥ ११ ॥ **अहंकार इति** । वदतीति शेषः । चिरकालविप्रकर्षाद्बहुकालविलम्बान्न सम्यक् प्रत्यभिजानामि न परिचि-

---

१ 'ऋषीणामपि' इति पाठः ।　२ 'पितामहोऽयम्' इति पाठः ।

दम्भः—अथ किम् । सोऽप्यत्रैव महामोहस्याज्ञया वर्तते । नहि तेन विना मुहूर्तमप्यहं प्रभवामि[1] ।

अहंकारः—अथ तव मातापितरौ तृष्णालोभावपि कुशलौ ? ।

दम्भः—तावपि राज्ञो महामोहस्याज्ञयाऽत्रैव वर्तेते[2] । तयोर्विना क्षणमपि न तिष्ठामि । आर्यमिश्रैः पुनः[3] केन प्रयोजनेनात्र प्रसादः कृतः ।

अहंकारः—वत्स, मया महामोहस्य विवेकसकाशादत्याहितं श्रुतम् । तेन तद्वृत्तान्तं प्रत्येतुमागतोऽस्मि ।

दम्भः—स्वागतमेवार्यस्य[4] । यतो महाराजस्यापीन्द्रलोकादत्रागमनं श्रूयते । अस्ति च किंवदन्ती यद्देवेन वाराणसी[5] राजधानी वस्तुं निरूपितेति ।

---

प्रलिप्सामूलमनृतं तथापि विप्रलिप्साया दम्भकलत्रत्वात्तत्कुमारत्वव्यपदेशोऽनृतस्य युज्यते । अथ किमिति सर्वथाङ्गीकारे । **अथ तवेत्यादि** । मातापितरौ तृष्णालोभाविति । तृष्णा नाम यावदीप्सितद्रव्यप्राप्तौ सत्यामपि पुनस्ततोऽधिकद्रव्याकाङ्क्षा । लोभो नाम स्वद्रव्यापरित्यागपूर्वं परद्रव्यजिघृक्षा । एवं च सत्यधिकद्रव्याकाङ्क्षारूपायाः लोभस्यार्धशरीरत्वात्पत्नीत्वव्यपदेशः । **आर्यमिश्रैरिति** । आर्यशब्दः श्रेष्ठवचनः । मिश्रशब्दः षड्दर्शनपारदृश्ववचनः । बहुवचनं पूजायाम् । पुनरिति वाक्यालंकारे । केन प्रयोजनेन किंप्रयोजनमुद्दिश्यात्र प्रसादः कृतः समाहितः । अथ विन्दुमुपक्षिपति—**वत्सेत्यादि** । विन्दुलक्षणमङ्कादावुक्तम्—'अवान्तरार्थविच्छेदे पुनरविच्छेदकारणम्' इत्यादि । अत्र दम्भाहंकारयोः संवादेन कथाविच्छेदे पुनरविच्छेदहेतुर्महामोहस्य विवेकसकाशादत्याहितं श्रुतमिति पुनः कथानुसरणरूपो विन्दुः ॥ **स्वागतमित्यादि** । सुष्ठु आगतं स्वागतम् । आर्यस्य पूज्यस्य । कर्तरि षष्ठी । **यत इत्यादि** । महारा-

---

नोमि । अथेत्यादिः प्रसादः कृत इत्यन्तो ग्रन्थः स्पष्टार्थः । वत्स, मयेति । अत्याहितम् । अत्यनिष्टमित्यर्थः । तद्वृत्तान्तं महामोहसमाचारं प्रत्येतुं ज्ञातुम् । स्वागतमेव सुष्ठ्वागतम् । राजधानी राजानो धीयन्ते वसन्त्यस्यामिति राजधानी राजवसतिः म मापि सैव वसतिस्थलमिति निरूपिता विचारिता । तत्रैवावस्थातव्यमिति भावः ।

---

१ 'जीवामि' इति पाठः । २ 'तावप्यत्रैव वर्तेते । तयोर्विना' इति पाठः । ३ 'पुनरत्र' इति पाठः । ४ 'तर्हि स्वागतम्' इति पाठः । ५ 'वाराणसी नाम नगरी राजधानी निरूपितेति' इति पाठः ।

**अहंकारः**—पुनः किं वाराणस्यां सर्वात्मना मोहस्यावस्थान-कारणमिति ।

**दम्भः**—आर्य, ननु विवेकोपरोध एव । तथाहि—

विद्याप्रबोधोदयजन्मभूमिर्वाराणसी ब्रह्मपुरी निरत्यया ।
असौ कुलोच्छेदविधिं चिकीर्षुर्निर्वस्तुमत्रेच्छति नित्यमेवम् ॥ १२ ॥

**अहंकारः**—(सभयम्) यद्यप्येवमशक्यप्रतीकार एवायमर्थः ।

---

जस्य महामोहस्येन्द्रलोकात्स्वर्गेपि महामोहाविष्ट इत्यर्थः । महामोहो नाम विषयेष्वासक्तिविशेषहेतुरहंममाभिमानः । तदुक्तं सांख्यवाचस्पतौ—अविद्यास्मितारागद्वेषाभिनिवेशाः पञ्च यथासंख्यं तमोमोहमहामोहतामिस्रान्धतामिस्रसंज्ञकाः । यद्यपि शब्दादिषु पञ्चसु दिव्यादिव्यतया दशविधेषु विषयेष्वनुरक्तिरूपतया दशविधो महामोहस्तथापि विषयभेदाद्दशविध एव प्रतीयते । वस्तुतस्त्वेक एवेत्यवधारणीयम् ॥—**आर्य नन्वित्यादि** । विवेकोपरोधो विवेकराज्ञ उपरोधो निरोधनम् । हिंसनमिति यावत् । **तथाहीत्यादि** । **विद्येति** । ब्रह्मपुरी ब्रह्मोपदेशप्राप्तिहेतुर्निरत्यया निद्रा-प्रलयकालेऽप्यविनाशिनी । कुलच्छेदविधिं चिकीर्षुः कर्तुमिच्छुः । असौ विवेक इत्यर्थः । विवेकोपरोध इति समासे गुणीभूतस्यापि विवेकस्यादःशब्देन सर्वनाम्ना परामर्शो युज्यते । तदुक्तं वामनेन—'सर्वनाम्नानुसन्धिर्वृत्तिश्छिन्नस्य' इति ॥ १२ ॥ **यद्येवमित्यादि** । अशक्यप्रतीकार इति । ज्ञानिनामज्ञानिनां चाविशेषेण मुक्तिप्रदत्वाद्वाराणस्या इत्यर्थः ।

---

विवेकस्योपरोधः प्रविघातः । विवेकोपरोधस्त्वावश्यको यतस्तस्यां निरन्तरं निवासमिच्छति वाराणस्यामित्याह—**तथाहीति** । वाराणसीवासयोग्यो विवेक एवेत्याह—**विद्येति** । स विवेकः । अतो हेतोरत्र वारणस्यां नित्यमेव सर्वदैव निवस्तुं नितरां वासं कर्तुमिच्छति । कीदृशो विवेकः । कुलोच्छेदविधिं कुलोच्छेदेतिकर्तव्यतां विधित्सुश्चिकीर्षुः अतः । कुतः । यतः दुरत्यया अविनाशा ब्रह्मपुरी शिवनगरी । ब्रह्मशब्दः शिववचनः । उक्तं च 'ब्रह्म ज्ञानं प्रधानं च क्षेत्रज्ञोङ्कारबुद्धयः । मोक्षो हिरण्यगर्भश्च मन्त्रो वेदः शिवस्तथा ॥' इति । कीदृशी वाराणसी । विद्याप्रबोधोदयजन्मभूमिः विद्या च प्रबोधश्च तयोरुदयः तस्य जन्मभूमिः, विद्या ब्रह्माकारान्तःकरणवृत्तिस्तद्वृत्त्युपहितं चैतन्यं प्रबोधः तयोर्जन्मभूमिरित्यर्थः ॥ १२ ॥ **यद्येवमिति** । यदि एवम् । एवंविधा वाराणसीति शेषः । तर्हि अयमर्थोऽशक्यप्रतीकार इति यो-

---

१ 'किं पुनः कारणं' इति पाठः । २ 'महामोहस्य' इति पाठः । ३ 'दुरत्यया' इति पाठः । ४ 'अयं कुलोच्छेदविधिं विधित्सुः' इति पाठः ।

यतः—

परममविदुषां पदं नराणां पुरविजयी करुणाविधेयचेताः ।
कथयति भगवानिहान्तकाले भवभयकातरतारकं प्रबोधम् ॥१३॥

---

तदेवाह—परममविदुषामित्यादि । परमं पदं ब्रह्मस्वरूपम् । 'तद्विष्णोः परमं पदम्','विष्णोः पदे परमे मध्व उत्सः', 'विश्वं नारायणं देवमक्षरं परमं पदम्' इत्यादिश्रुतिभ्यः परमपदस्य ब्रह्मस्वरूपत्वावगमात् । अविदुषामजानताम् । 'न लोका–' इत्यादिना षष्ठीनिषेधाद्द्वितीया । नराणाम् । अत्र नरशब्दो जन्तुमात्रपरः । पुरविजयी त्रिपुरान्तको रुद्रः । यद्वा पुरेषु लिङ्गशरीरेषु विजयवान्प्रकाशमानः पुरुषो रुद्रः । यद्वा पुराणां विजयोऽस्यास्तीति पुरापुरादिवर्ति साक्षाच्चैतन्यं विश्वेश्वरशब्दवाच्यः । करुणाविधेयचेताः करुणायाः परदुःखप्रहाणेच्छाया विधेयमधीनं चेतश्चित्तं यस्य सः कथयत्युपदिशति । भगवान् । भगशब्देनान्तादिवर्णलोपाभ्यां भवयोगौ विवक्षितौ । भशब्देन भवः । गशब्देन योगः । एवं च सति भगौ हेयत्वेन देयत्वेन च यस्य स इति भगवान् । भवं निहत्य योगं ददाति स भगवानित्यर्थः । तथा च अथर्वशिखोपनिषदि—'अथ कस्मादुच्यते भगवानिति यस्मादुच्चार्यमाण एको रुद्रो भवं निहत्य योगं ददाति तस्मादुच्यते भगवानिति' । इह काश्यामन्तकाले मुमूर्षावस्थायां भवभयकातरतारकं भवः संसारस्तस्माद्भयम् । जन्ममरणाभ्यां भीतिरित्यर्थः । तेन कातरः कान्दिशीकस्तस्य लोकस्य तारकं तरणहेतुः प्रबोधः । अन्वर्थसंज्ञेयम् । प्रबुध्यतेऽनेन ब्रह्मस्वरूपमिति प्रबोधस्तम् । अत्रेत्थं पदयोजना । इह काश्यां करुणाविधेयचेता भगवान्पुरविजयी परमं पदमविदुषां नराणां प्रबोधं भवभयकातरतारकमन्तकाले कथयति । तथा चाथर्वणी श्रुतिः—'मुमूर्षोर्दक्षिणे कर्णे यस्य कस्यापि वा स्वयम् । उपदेक्ष्यसि तं मन्त्रं स मुक्तो भविता शिव ॥' इति । श्रीरामवाक्यमेतत् । स्मृतिरपि—'मुमूर्षोर्मणिकर्ण्यन्तरर्धोदकनिवासिनः । अहं दिशामि ते मन्त्रं तारकं ब्रह्मसंज्ञकम् ॥' इति । तथा काशीखण्डे पञ्चमाध्यायेऽपि—'स होवाच जाबालिमुनिस्त्वसिरिला मता । वरणा पिङ्गलानाडी तदन्तरविमुक्तकम् ॥ सा सुषुम्ना परा नाडीत्येवं वाराणसी त्वसौ । तदत्रोत्क्रमणे सर्वजन्तूनां हि मृतौ

---

जना । अशक्यप्रतीकारत्वे कारणमाह—यतः—परममिति । इह वाराणस्यां पुरविजयी श्रीमहादेवः भगवान् षड्गुणैश्वर्यसंपन्नो नराणां जीवानामन्तकाले प्राणोत्क्रमणसमये भवः संसारस्तस्माद्भयं तेन कातरा भीतास्तांस्तारयतीति तारकः तं प्रबोधं ब्रह्मैकत्वलक्षणं कथयति प्रकाशयति । कथंभूतानां नराणाम् । परमं पदं ध्येयस्थानमविदुषाम् । यद्वा परमं ब्रह्म पद्यते प्राप्यते तत्पदं ब्रह्मप्राप्तिस्थानमविदुषामजानताम् । कीदृशो महादेवः । करुणया विधेयं प्रवर्तनीयं चेतो यस्य सः ॥ १३ ॥—

**दम्भः**—सत्यमेतत्तथापि नैतत्कामक्रोधाभिभूतानां संभाव्यते । तथा ह्युदाहरन्ति तैर्थिकाः—

यस्य हस्तौ च पादौ च मनश्चैव सुसंयतम् ।
विद्या तपश्च[1] तीर्थं च स तीर्थफलमश्नुते ॥ १४ ॥ इति ।

---

हरः ॥ तारकं ब्रह्म आचष्टे तेन ब्रह्म भवन्ति हि । एवं लोका वदन्त्येवं तमाहुर्ब्रह्मवादिनः ॥ भगवानन्तकालेऽत्र तारकस्योपदेशतः । अविमुक्तस्थिताञ्जन्तून्मोचयेन्नात्र संशयः ॥' इति । एतदुक्तं भवति काश्यां मरणं जन्तुमात्रसाधारण्येन मुक्तिहेतुरिति ॥ १३ ॥ उक्तेऽर्थेऽर्धमङ्गीकरोति—**सत्यमेतदिति** । भगवान् सर्वसाधारण्येनान्तकाले तारकमुपदिशतीत्येतच्छब्दार्थः । तारकमुपदिशतीत्यङ्गीकारांशः । साधारण्येऽप्यङ्गीकारांशं प्रतिपादयितुमुपक्रमते । तथाहीत्यादिना । कामक्रोधाद्युपहतचित्तानामेतद्भगवान्सर्वसाधारण्येनोपदेशं करोतीत्येतन्न संभाव्यते । कुत इति तत्राह—तत्र ह्युदाहरन्तीति । मुनय इति शेषः ॥—**यस्येति**। यस्य जनस्य पादौ चरणौ सुसंयतौ निषिद्धसंचारपराङ्मुखौ । सुसंयतमित्यादि पादहस्तयोर्विभक्तिलिङ्गविपरिणामेनान्वयः कर्तव्यः पादौ सुसंयतौ हस्तौ सुसंयतौ चेति दम्भरहितः पुरुषः । विद्या ज्ञानं, तपः कृच्छ्रचान्द्रायणादिकम्, तीर्थं योनिरुपस्थः (?) । सुसंयत इत्यन्वयः । स तीर्थफलं काशीतीर्थफलं तस्मिंस्तीर्थे यत्फलमुपदिष्टं तत्फलमश्नुते प्राप्नोति । अस्य सामान्यशास्त्रस्य विशेषशास्त्रेणैकार्थ्यात्काश्यां संयतेन्द्रियाणामेव तीर्थफलप्राप्तिर्नान्येषाम् । तथा चोक्तं काशीखण्ड उत्तरभागे षण्णवतितमेऽध्याये कृच्छ्रचान्द्रायणादितपांस्युक्त्वा—'अद्भिर्गात्राणि शुध्यन्ति मनः सत्येन शुध्यति । विद्यातपोभ्यां भूतात्मा बुद्धिर्ज्ञानेन शुध्यति ॥ तच्च ज्ञानं भवेत्पुंसां सम्यक्काशीनिषेवणात् । काशीनिषेवणात्तस्माद्विश्वेशे करुणोदयः । ततो महोदयावाप्तिः कर्मनिर्मूलनक्षमा ॥ ततः काश्यां प्रयत्नेन स्नानं दानं तपो जपः । व्रतं पुराणश्रवणं स्मृत्युक्ताध्वनिषेवणम् ॥ प्रतिक्षणं प्रतिदिनं विश्वेशपदचिन्तनम् । साधुभिः सह संवासो जल्पः शिवशिवेति च ॥ आस्तिक्यबुद्धिर्विनयो मानामानसमानधीः । अकामत्वमनौद्धत्यमरागित्वमहिंसनम् ॥ अप्रतिग्रहवृत्तिश्च मतिश्चानुग्रहात्मिका । अदम्भित्वममात्सर्यमप्रार्थितधनागमः ॥ अलोभित्वमनालस्यमपारुष्यमदीनता ।

---

**सत्यमेतदिति** । यद्यपि शंकरः सच्चिदानन्दवाक्यार्थरूपं ब्रह्म वाराणस्यां प्रकाशयतीति सत्यं तथापीत्यग्रेतनेन योजनीयम् । तैर्थिकाः वैदिकाः । किमुदाहरन्ति तदाह—यस्येति । यस्य हस्तौ पादौ च सुसंयतौ पारमेश्वरमेव कार्यं कुर्वाणौ नतु

---

१ 'तपश्च कीर्तिश्च' इति पाठः ।

इत्यादि तत्प्रवृत्तिश्च कर्तव्या क्षेत्रवासिना ॥' इति । तथा तत्रैव—'प्रतिग्रहादुपावृत्तः संतुष्टो येनकेनचित् । अहंकारविमुक्तश्च स तीर्थफलमश्नुते ॥ अदाम्भिको निरालम्बो लघ्वाहारो जितेन्द्रियः । विमुक्तः सर्वसङ्गैर्यः स तीर्थफलमश्नुते ॥ अकोपनोऽमलमतिः सत्यवादी दृढव्रतः । आत्मोपमश्च भूतेषु स तीर्थफलमश्नुते ॥ तीर्थान्यनुसरन्धीरः श्रद्दधानः समाहितः । कृतपापो विशुध्येत किं पुनः शुद्धकर्मसु ॥ तिर्यग्योनिं न वै गच्छेत्कुदेशे न च जायते । न दुःखी स्यात्स्वर्गभाक्च मोक्षोपायं च विन्दति ॥ अश्रद्दधानः पापात्मा नास्तिकोऽच्छिन्नसंशयः । हेतुनष्टश्च पञ्चैते न तीर्थफलभागिनः' ॥ असंयतेन्द्रियाणां पापकर्मणामन्यत्र स्थितानां काश्यां पापक्षयः । 'अन्यत्र यत्कृतं पापं तत्काश्यां च विनश्यति । वाराणस्यां कृतं पापमन्तर्गेहे विनश्यति ॥ अन्तर्गेहकृतं पापं पैशाचनरकावहम् । पिशाचनरकप्राप्तिर्गच्छत्येव बहिर्यदि ॥ न कल्पकोटिभिः काश्यां कृतं कर्म प्रणश्यति । किंतु रुद्रपिशाचत्वं जायते त्वयुतत्रयम् ॥ वाराणस्यां स्थितो यो वै कामरोषरतः सदा । योनिं प्राप्यापि पैशाचीं वर्षाणामयुतत्रयम् ॥ पुनस्तत्रैव निवसञ्ज्ञानं प्राप्नोत्यनुत्तमम् । तेन ज्ञानेन संपन्नो मोक्षं प्राप्नोत्यनुत्तमम् ॥ दुष्कृतानि विधायेह पुनः पञ्चत्वमागताः । तेषां गतिं प्रवक्ष्यामि शृणुत द्विजसत्तमाः ॥ विवस्त्राः क्षुत्पिपासाभिर्लग्नपृष्ठोदरत्वचः । अन्यै रुद्रपिशाचैश्च सह तान्योजयेत्पतिः ॥' अत्र कालराजेत्यनुषज्यते । 'ततो रुद्रपिशाचास्ते भैरवानुचरास्तदा । सदन्नकाममत्यर्थं(?)क्षत्रिये मूत्रसंभवम् । आहरं रुधिरोन्मिश्रं नैव भक्तं कदाचन । एवं त्वयुतसंख्यातं कालं ते भ्रान्तदुःखिताः । स्मशानस्तम्भमहिता नीयन्ते कण्ठपाशिताः ॥ पिपासिता अपि न ते अम्बुस्पर्शमवाप्नुयुः । अथ संक्षीणपापास्ते कालभैरवदर्शनात् ॥ इहैव देहिनो भूत्वा मुच्यन्ते ते ममाज्ञया । तस्मान्न कामयेत्तात्र वाङ्मनःकर्मणाप्यघम् ॥ शुचौ पथि समास्थेयं महालाभमभीप्सुभिः ॥' इति । अनेन वाराणस्यां पापकारिणां मरणानन्तरं रुद्रपिशाचयातनाप्राप्तिस्तदनन्तरं मुक्तिरित्युक्तम् । सा च मुक्तिः 'ज्ञानादेव तु कैवल्यम्' इत्यादिश्रुतिभ्यो भगवांस्तारकमुपदिशति । भगवच्छब्दार्थपर्यालोचनया परमगुरूपदेशवशादेव मुक्तिरिति विज्ञायते । क्षेत्रमहिम्नैव मरणान्मुक्तिरित्युक्तौ तारकोपदेशो व्यर्थः स्यात् । न च 'नाविमुक्तो मृतः कश्चिन्नरकं याति किल्बिषी । ममानुग्रहमासाद्य गच्छत्येव परां गतिम् ॥' इति । नात्र मरणादेव मुक्तिः प्रदीयत इति वाच्यम् । ममानुग्रहमासाद्येत्यनेन ज्ञानप्रदानरूपानुग्रहस्यैव परमपदगमनस्य हेतुत्वावगमात् । अतश्च

---

ब्राह्मणताडनादि । मनश्च सुसंयतमेव कामानासक्तमेव । विद्या तत्तीर्थमाहात्म्यज्ञानम् । तपश्चान्द्रायणादि । कीर्तिर्दानादिना । एवं यः करोति स तीर्थफलमश्नुते ।

दम्भः—(नेपथ्ये) भो[1] भोः पौराः, एष खलु संप्राप्तो देवो महामोहः। तेन,

निष्यन्दैश्चन्दनानां स्फटिकमणिशिलावेदिकाः संस्क्रियन्तां
मुच्यन्तां[2] यन्त्रमार्गाः प्रचरतु परितो वारिधारा गृहेषु।

'वाराणस्यां मृतस्य च' इत्यादयः स्मृतयो ज्ञानेनैव मुक्तिरिति प्रतिपादनपरा इति न काचित्क्षतिः। काश्यामपि कैवल्यमुक्तेरेव प्रतिपादनाज्जीवन्मुक्तिप्रतिपादकं शास्त्रमर्थवादः। तथा चोक्तं संक्षेपशारीरके—'जीवन्मुक्तिप्रत्ययं शास्त्रजातं जीवन्मुक्तिः कल्पितं योजनीयम्' इति चेत्। तन्न। 'भूयश्चान्ते विश्वमायानिवृत्तिः' इत्यादिश्रुतिभ्यो जीवन्मुक्तिप्रतिपादनात्। जीवन्मुक्तेः स्वानुभवैकवेद्यत्वाच्च। एतच्च षष्ठाङ्के निरूपयिष्यामः। तथा च काशीखण्डे—'इह पाशुपताः शुद्धा आकल्पब्रह्मचारिणः। जितेन्द्रियास्तपोनिष्ठास्तत्त्वार्थज्ञाननिर्मलाः॥ कन्दमूलफलाहाराः परतत्त्वार्पितेक्षणाः। सत्यवन्तो जितक्रोधा निर्मोहा निष्प्रतिग्रहाः। निर्द्वन्द्वा निश्चयार्थाश्च निरहंकारवृत्तयः। ते देवतामयात्मानो मच्चित्ता मत्स्वरूपिणः॥ एते पूज्या नमस्याश्च मद्बुद्ध्या मत्परायणैः॥' इति। काश्यां जीवन्मुक्तिरप्यस्तीति ध्येयम्। अयमत्र दम्भाशयः। आगन्तूञ्जनान्कामादीन्प्रयुज्य निर्गमयिष्यामः। तत्र स्थितान्रुद्रयातनादिकं प्रवेशयिष्यामः। जीवन्मुक्तान् मधुमतीविद्यया योगाद्भ्रंशयिष्याम इत्यलमतिविस्तरेण। अत्र विलासो नाम प्रतिमुखसन्धेः प्रथममङ्गम्। नष्टदृष्टार्थरूपबीजस्य समीहात्मतया वर्णनात्। तदुक्तम्—'दृष्टार्थविषयामीहां विलासं परिचक्षते' इति॥ इतः परं नेपथ्योक्तिलक्षणेनोपसंधिनाङ्कपात्रप्रवेशः। यद्वा चूलिकया पात्रप्रवेशः। तदुक्तम् 'नेपथ्याङ्कगतैः पात्रैश्चूलिका कार्यसूचना। यद्वा प्रवेशकेनैव अङ्गपात्रप्रवेशकः॥' इति॥ १४॥–निष्यन्दैरित्यादि। धारागृहेषु धाराप्रधानेषु हर्म्येषु। यन्त्रमार्गा मुच्यन्ताम्। जलप्रस्रवणार्हाः क्रियन्तामित्यर्थः। तत्र वारि प्रसरतु। हर्म्येषु

प्राप्नोति॥ १४॥ राज्ञामागमने यान्यपेक्षितानि लोके तान्याह—निष्यन्दैरिति। चन्दनानां निष्यन्दैः सेकैः स्फटिकाश्च मणयश्च त एव शिला यासु तादृश्यो वेदिकाः स्फटिकरत्ननिमित्तानि चत्वराणि संस्क्रियन्तां परिष्क्रियन्ताम्। यन्त्रमार्गा जलयन्त्रद्वाराणि क्रीडार्थमापणेषु रचितानि मोच्यन्तामुद्घाट्यन्ताम्। अनेनापणशृङ्गारो ध्वन्यते। वारिधारा जलधारा गृहेषु परित इतस्ततः प्रसरतु। नगरालंकारोऽनेन सूचितः। स्फुरन्तो दीप्तिमन्त उरवः स्थूला मणयो यासु तादृश्यस्तोरणानां श्रेणयः पङ्क्तयः समन्ताच्चतुर्दिक्षूच्छ्रीयन्तामुच्चैर्बध्यन्ताम्। अनेन राजगृ-

१ 'भोभो जनाः' इति पाठः। २ 'मोच्यन्तां' इति पाठः।

उच्छ्रीयन्तां समन्तात्स्फुरदुरुमणयः श्रेणयस्तोरणानां
धूयन्तां सौधमूर्धस्वमरपतिधनुर्धामचित्राः पताकाः ॥१५॥

**दम्भः**—आर्य, प्रत्यासन्नोऽयं महाराजः । तत्प्रत्युद्गमनेन संभाव्यतामार्येण ।

**अहंकारः**—एवं भवतु । (निष्क्रान्तौ ।)

(प्रवेशकः ।)

(ततः प्रविशति महामोहो विभवतश्च परिवारः ।)

**महामोहः**—(विहस्य) अहो, निरङ्कुशा जडधियः ।

आत्मास्ति देहव्यतिरिक्तमूर्तिर्भोक्ता स लोकान्तरितः फलानाम् ।
आशेयमाकाशतरोः प्रसूनात्प्रथीयसः स्वादुफलप्रसूतौ ॥ १६ ॥

---

प्रसारिता मुक्ताः स्रज इव प्रसरन्त्वित्यर्थः ॥ १५ ॥ **प्रवेशक इति** । निरूपित इति शेषः । 'अङ्कयोर्मध्यवर्ती च नीचपात्रप्रवेशितः । विष्कम्भ इव नान्यश्च प्रवेशक इति स्मृतः ॥' अङ्कयोर्मध्यवर्तीत्यनेन प्रथमाङ्के प्रवेशको नास्तीत्यवः गन्तव्यम् । यथा शाकुन्तले चातुर्थाङ्के । यद्यपि दम्भाहंकारयोः सर्वदूषकत्वान्नीचपात्रत्वेन प्राकृतभाषयैव भवितव्यम्, तथापि 'कार्यतश्चोत्तमादीनां कार्यो भाषाविपर्ययः' इति वचनात्संस्कृतभाषाश्रयणं दम्भाहंकारयोर्दूषकत्वेनैव नीचत्वं न तु जात्या । अतश्च संस्कृतभाषाश्रयणम् । प्रवेशकः प्राकृतभाषयैव वक्तव्य इति नियमाभावाद्दम्भाहंकारौ नीचौ विद्वांसौ च । **ततः प्रविशतीत्यादि** । बार्हस्पत्यमतमाश्रित्याह—**आत्मास्तीत्यादि** । देहाद्व्यतिरिक्तमूर्तिर्देहव्यतिरिक्त आत्मास्ति । स च लोकान्तरितः । अत्र लोकशब्देन देशकालौ

---

द्वाणामलंकरणं सूचितम् । सौधमूर्धसु प्रासादमस्तकेष्वमराणां देवानां पतिरिन्द्रस्तस्य धनुषो धाम स्वरूपं तद्वद्विचित्रा नानारूपाः पताका धूयन्तां कल्प्यन्ताम् । अनेन नगरद्वारपरिष्कारो ध्वनितः । इदं सर्वं महामोहप्रवृत्तिजनकमिति सूचितम् ॥ १५ ॥ प्रत्यासन्नोऽतिसमीपमागतः । तत्प्रत्युद्गमनेनेति यस्मात्कारणादतिनिकटवर्ती तत्तस्मात्कारणात् । प्रत्युद्गमनेन । संमुखगमनेनेत्यर्थः ॥—तत इति । विभवेनेति । विभवतः स्वसामर्थ्येन महामोहः प्रविशतीत्यन्वयः । चकारो भिन्नक्रमः । परिवारश्च सेवकवर्गश्च प्रविशतीत्यस्यानुषङ्गः । निरङ्कुशा जडधियः । निर्मर्यादा मूढाः ॥—निरङ्कुशत्वं प्रकटयति लोकायतिकमतेन—आत्मेति । देहाद्व्यतिरिक्तमूर्तिरात्मास्ति ।

---

१ 'सहपरिवारः' इति पाठः । २ 'देहाद्व्यतिरिक्त' इति पाठः । ३ 'प्रथीयसी' इति पाठः ।

इदं च स्वकल्पनाविनिर्मितपदार्थावष्टम्भेन जगदेवं दुर्विदग्धै-र्वञ्च्यते । तथाहि—

यन्नास्त्येव तदस्ति वस्त्विति मृषा जल्पद्भिरेवास्तिकै-
वाचालैर्बहुभिस्तु सत्यवचसो निन्द्याः कृता नास्तिकाः ।
हंहो पश्यत तत्त्वतो यदि पुनश्छिन्नादितो वर्ष्मणां
दृष्टः किं परिणामरूपितचितेर्जीवः पृथक्कैरपि ॥ १७ ॥

---

गृह्येते । फलानां स्वर्गादीनां भोक्तेत्यतिशयेन निरङ्कुशा निर्भीका जडधियो वदन्ति । अहो आश्चर्यम् । इयमाशाऽकाशतरोः प्रथीयसः पृथुतरात्प्रसूनात्स्वादुफलप्रसूतौ । तद्विषयभूता यतस्तादृशीत्यर्थः । अत्र निदर्शनालंकारः ॥१६॥—**इदं चे-त्यादि** । यदुक्तं तद्रूपपदार्थास्तेषामवष्टम्भेन दुर्विदग्धैर्वैशेषिकादिभिर्जगद्वञ्च्यत एव ॥—**यन्नास्तीत्यादि** । यद्वस्तु देहव्यतिरिक्त आत्मापूर्वादिकं नास्त्येव प्रमाणं तद्वस्त्वस्तीति जल्पन्तः प्रलपन्त एवास्तिकाः सत्यवचसो वयं बहुभिर्वाचालैः कौमारिलप्रभृतिभिर्नास्तिका इत्यङ्गीकृताः । अहो आश्चर्यम् । पश्यत तत्त्वतः । तत्त्वमवलम्ब्य विचारणां कुरुतेत्यर्थः । छिन्नात्खण्डितादितो वर्ष्मणो देहात्परिणामरूपितचितेः परिणामभूतसंहतिस्तेन रूपिता तदात्मना निरूपिता चितिश्चैतन्यं यस्य वर्ष्मणस्तस्मात् । अत्र बहुव्रीहिसमासाश्रयणात् 'तृतीयादिषु भाषितपुंस्कं—' इत्यादिना पुंवद्भावाच्चितेरिति रूपसिद्धिर्यद्यस्ति तर्हि हृदयाद्यवय-

---

स आत्मा लोकान्तरितः स्वर्गलोकं गतः फलानां स्वर्गादीनां भोक्तेति यत् इयमाकाशतरोः प्रसूनादाकाशवृक्षपुष्पात्स्वादुफलस्य मधुरफलस्य प्रसूतावुत्पत्तौ प्रथीयसी । महती आशेत्यर्थः ॥ १६ ॥—उक्तेऽर्थे उपपत्तिमाह—**इदं चेति** । स्वकल्पनया न तु परमार्थविचारणयेत्यर्थः । अवष्टम्भेनाङ्गीकारेण । दुर्विदग्धैर्दुर्बुद्धिभिः ॥—**यन्नेति** । बहुभिर्वाचालैः कोलाहलरसिकैरास्तिकैर्वैदिकैः नास्तिका वेदबाह्याः सत्यवचस एव निन्द्याः कृताः । कीदृशैरास्तिकैः । यद्वस्तु शरीराद्भिन्नमात्मस्वरूपं तन्नास्त्येव प्रत्यक्षेणानुपलम्भात्तद्वस्त्वस्तीति मृषाजल्पद्भिः । ये वयं सत्यप्रमाणवादिनस्ते नास्तिकाः कृताः स्वयमप्रमाणं वदन्तः कथमास्तिका इति न विद्म इति तात्पर्यम् । स्वमते युक्तिं दर्शयति । हंहो इत्याश्चर्येऽव्ययम् । छिन्नाच्छेदितादितोऽसाद्वर्ष्मणः शरीरात्पृथग्भिन्नो जीवः कैरपि दृष्टो यदि तर्हि पुनर्वारंवारं तत्त्वतः सम्यक्तया पश्यत विचारयत । अचेतनक्षोण्यारब्धे तत्कथं चैतन्यं तत्राह । परिणामेन रूपान्तरापत्त्या रूपिता उत्पादिता चितिः चैतन्यं यस्य सः क्रमुकादीनां मिलितानां रागजनकत्वव-

---

१ 'स्वकपोलकल्पना' इति पाठः । २ 'जगदेतैर्दुर्विदग्धैः' इति पाठः ।

अपि च न केवलं जगदात्मैव तावदमीभिर्वञ्च्यते । तथाहि—

तुल्यत्वे वपुषां मुखाद्यवयवैर्वर्णक्रमः कीदृशो
[1]योषेयं वसु चापरस्य तदमुं भेदं न विद्मो वयम् ।
हिंसायामथवा यथेष्टगमने स्त्रीणां परस्वग्रहे
[2]कार्याकार्यविचारणा हि यदमी निःपौरुषाः कुर्वते ॥१८॥

(विचिन्त्य सश्लाघम् ।) सर्वथा लोकायतमेव शास्त्रं यत्र प्रत्यक्षमेव प्रमाणं पृथिव्यप्तेजोवायवस्तत्त्वानि, अर्थकामौ पुरुषार्थौ भूतान्येव

---

ववद्दृश्यत इति भावः ॥१७॥ एते दुर्विदग्धाः पराञ्नाशयित्वा स्वयमपि नश्यन्तीत्याह—तथाहीत्यादि । तुल्यत्व इति । मुखाद्यवयवैर्वपुषां तुल्यत्वे सति वर्णक्रमश्चातुर्वर्ण्यव्यवस्था कीदृशः । किमाक्षेपे । इयं परस्य योषा, इदं परस्य वस्त्वित्यमुं भेदं वयं न विद्मः । हिः प्रसिद्धौ । एवं सतीत्यर्थः । परहिंसायामथवा परस्त्रीणां यथेष्टगमने परस्वग्रहे परद्रव्यापहारे वा निःपौरुषाः पौरुषहीनाः सन्तः कार्याकार्यविचारणाः कर्तव्याकर्तव्यविचारान् । यदिति कस्मादर्थे । कुतो हेतोरित्यर्थः । 'यतो मन्दास्त्वाम्' इतिवद्यदिति । सश्लाघम् । श्लाघा नाम गुणकीर्तनम् । क्रियाविशेषणमेतत् ॥ १८ ॥ लोकायतशास्त्रप्रतिपाद्यं प्रमाणस्वरूपं प्रमेयस्वरूपं चाह—प्रत्यक्षमेव प्रमाणम् । एवकारेण प्रमाणान्तराणां प्रत्यक्ष एवान्तर्भावः सूचितः । प्रत्यक्षनिबन्धनव्याप्तिमूलकमनुमानम् । अत एवार्थोत्पत्तिः । अतएव च शब्दे प्रत्यभिज्ञानिबन्धनत्वादुपमापीति प्रत्यक्षान्तर्भूतान्येवेत्यर्थः । पृथिवीत्ति ।

---

न्मिलितभूतानां चैतन्योत्पादकत्वमिति भावः ॥ १७ ॥—न केवलमिति । एवशब्दोऽप्यर्थः । अमीभिरास्तिकैर्न केवलं स्वात्मा वञ्च्यते । अपि तु जगदपीत्यर्थः ॥—तुल्यत्वे वपुषामिति । मुखाद्यवयवैर्हस्तपादाद्यवयवैर्वपुषां तुल्यत्वेऽपि शरीराणां साम्येऽपि वर्णक्रमो ब्राह्मणक्षत्रियवैश्यशूद्रा वर्णास्तेषां क्रमो धर्मनिरूपणरूपः कीदृशः । न युक्तिसह इत्यर्थः । किंच इयं स्त्री वसु च इयं परस्य स्त्री परस्य वा धनं यद्यस्माद्धेतोरयं भेदस्तममुं भेदं वयं न विद्मो न जानीमः । आस्तिककल्पितभेदव्यवहारोऽनर्थक इत्याह । हिंसायां वैदिकहिंसायाम् । अथवा अथच स्त्रीणां यथेष्टगमने यथेच्छं स्वपरस्त्रीणां पर्वकालादावपि सुरताभ्यासे परस्वग्रहे परधनग्रहणे कार्याकार्यकथाः कर्तव्याकर्तव्यविचारा यद्यपि वपुषां साम्यं स्त्रीपुंभिदा न तथापि निष्पौरुषाः पुरुषार्थहीनाः कुर्वते । अर्थकामावेव परमपुरुषार्थौ न धर्मो नापि मोक्षस्तत्र मानाभावादिति भावः ॥ १८ ॥ सश्लाघं सगर्वं । लोकायतमेव शास्त्रम् । चार्वाकशास्त्रमे-

---

१ 'स्त्री चेयं वसु वा परस्य यदमुं' इति पाठः । २ 'कार्यकथास्तथापि' इति पाठः ।

चेतयन्ते। नास्ति परलोकः । मृत्युरेवापवर्गः । तदेतदस्मदभिप्राया-नुवन्धिना वाचस्पतिना प्रणीय चार्वाकाय समर्पितम् । तेन च शिष्योपशिष्यद्वारेणास्मिँल्लोके बहुलीकृतं तन्त्रम् ।

(ततः प्रविशति चार्वाकः शिष्यश्च ।)

**चार्वाकः**—वत्स, जानासि दण्डनीतिरेव विद्या । अत्रैव वार्तान्तर्भवति । धूर्तप्रलापस्त्रयी । स्वर्गोत्पादकत्वेन विशेषाभावात् ।

---

आकाशस्यापि 'नीलं नभः' इति प्रतीतेर्गोलाकारप्रतीतेश्च जलादौ दर्शनाच्च प्रत्यक्षत्वमित्यर्थः । इतरेषां शब्दादीनां पञ्चस्वेवान्तर्भावः पृथिव्यां गन्धोऽप्सु रस इत्यादि । अर्थकामौ पुरुषार्थाविति वार्ता च दण्डनीतिरिति द्वितीयशास्त्रं सम्यक् । अत एव तद्द्वितीयमान्वीक्षिकीत्रयीरूपं शास्त्रद्वयं लोकायतेनाङ्गीकृत-मित्यर्थः । भूतान्येव चेतयन्ते । भूतानि समष्टिरूपेण शरीरात्मना चेतयन्ते । यद्यपि तेजस्येव प्रकाशनशक्तिः प्रतिपाद्यो दृष्टान्तस्तथापि पदार्थसंसर्गमहि-म्नापि शक्तिरुत्पद्यते । किरणादिभ्यो दाहशक्तिमत्सूर्यकान्तवन्मधुघृतसंयोगा-दिना विषार्तिवत्पूगनागवल्लीचूर्णमेलनाद्रागवद्वेत्रबीजवद्दाहसंयोगवशात्कदल्युत्पा-दनशक्तिवदित्याद्युन्नेयम् । नास्ति परलोक इति शब्दस्य प्रमाणत्वनिरासात्प-रलोकप्रतिपादकशास्त्रस्य शब्दात्मकत्वादस्याप्रमाणत्वात्परलोकभोक्तुरात्मनश्चा-भावादित्यर्थः । **मृत्युरेवापवर्ग इति** । देहपात एव मोक्षः । परप्रसिद्ध्या मोक्ष इत्युक्तम् । पुण्यपापयोः प्रभावात्तदनुसारिणी पुनः शरीरोत्पत्तिरपि नास्ति बलाहकादिवत् । तदेतदित्यादि तन्त्रमित्यन्तं स्पष्टम् । तन्त्रमिति शास्त्रम् । अत्र सहसैवार्थसंपत्त्या पताकास्थानकेन पात्रप्रवेशं सूचयति । लोकायतशास्त्रं चा-र्वाकाय समर्पितम् । स च शिष्यपरम्परया लोके बहुलीचकारेत्युक्त्वा सहसै-वार्थसंपत्तिरूपया पात्रस्य प्रवेशनाच्छिष्यं प्रत्याह—**चार्वाकः । वत्सेत्यादि ।** दण्डनीतिरेव विद्या ज्ञानसाधनं दण्डनीतिशास्त्रम् । वार्ता नाम अर्थानर्थप्रतिपा-दकं शास्त्रम् । तदपि दण्डनीत्यामन्तर्भवति । धूर्ततामापाद्य प्रलाप इत्युक्तम्—

---

वेत्यर्थः । तत्त्वानि सपरमार्थानि भूतान्येव शरीराकारपरिणतानि चेतयन्ते ज्ञानज-नकानि । परलोकः स्वर्गादिः, अपवर्गो मोक्षः, अस्मदभिप्रायानुरोधिनास्मदीयता-त्पर्यानुसारेण ।—दण्डनीतिः राजनीतिः । अत्रैव राजनीत्यामेव वार्तान्तर्भवति राजसेवाप्रतिपादिका नीतिरन्तर्भवति । त्रयी वेदत्रयी धूर्तप्रलापः वञ्चकानर्थकवच-

---

१ 'अभिप्रायानुरोधिना' इति पाठः ।

पश्य—

स्वर्गः कर्तृक्रियाद्रव्यविनाशे यदि यज्वनाम् ।
ततो दावाग्निदग्धानां फलं स्याद्भूरि भूरुहाम् ॥ १९ ॥

अपि च ।

निहतस्य पशोर्यज्ञे स्वर्गप्राप्तिर्यदीष्यते ।
स्वपिता यजमानेन किं[1] नु कस्मान्न हन्यते ॥ २० ॥

अपि च ।

मृतानामपि जन्तूनां श्राद्धं चेत्तृप्तिकारणम् ।
निर्वाणस्य प्रदीपस्य स्नेहः संवर्धयेच्छिखाम् ॥ २१ ॥

**शिष्यः**—*आचालिअ, जई एसो जेव्व पलमत्थो पुलिसस्स जं खज्जए पिज्जए । ता किंति एदिहिं तित्थेहिं[2] संसालसुहं पलिह-

---

* आचार्य, यद्येष एव परमार्थः पुरुषस्य यत्खाद्यते पीयते । तर्हि

---

**पश्येत्यादि** । **स्वर्गेति** । यज्वनां विधिनेष्टवताम् । कर्तृक्रियानाशेऽपि स्वर्गो यदि फलं स्यात्ततस्तर्हीत्यर्थः । तर्हि दावाग्निदग्धानां भूरुहां भूरि फलं स्यादित्यन्वयः ॥१९॥२०॥ देवयज्ञप्रतिपादकं शास्त्रं दूषयित्वा पितृयज्ञप्रतिपादकं शास्त्रं दूषयति—**मृतेति** । मृतानामपि भूतानां श्राद्धं तृप्तिकारकं चेन्निर्वाणस्य विनष्टस्य शिखां स्नेहः संवर्धयेत् ॥२१॥ **आचालीत्यादि** । इयं मागधी भाषा । एसो पलमपुलिसस्स, इत्यत्र 'पुंसेलतः' इति सूत्रेण एकारः । पुंस्येलतः । मागध्यां भाषायां पुंसि पुंलिङ्गे अतः अकारस्य एत् एकारादेशो भवतीति लिखामित्यां(?)यद्यपि शेः श-

---

नम् । वेदवचसामप्रामाण्येन धूर्तप्रलपितत्वं समर्थयति—**स्वर्ग इति** । कर्तारश्च ऋत्विजः, क्रियाश्च होमादिरूपाः, द्रव्यं च पुरोडाशादि, एतद्विनाशे यज्वनां यजमानानां यदि स्वर्गः ततस्तर्हि दावाग्निदग्धानां भूरुहां वृक्षाणां फलं भूरि बहु स्यात् । अकारणात्कार्योत्पत्तेरुभयत्रापि तुल्यत्वादिति भावः ॥ १९ ॥ २० ॥—तत्रैव युक्त्यन्तरमाह—**मृतानामिति** । निर्वाणस्य विनष्टस्य । स्नेहस्तैलादिः । अतिरोहितार्थमन्यत् ॥ २१ ॥ शिष्यः—आचार्य, यदि एष एव परमार्थः पुरुषस्य, यत्खाद्यते पीयते तत्किमित्येतैस्तैर्थिकैः संसारसुखं परिहृत्य आत्मा घोरघोरतरैः पराकसान्तपन-

---

१ 'किं न तस्मान्निहन्यते' इति पाठः । २ 'तित्थिएहिं' इति पाठः ।

लिअ आप्पा घोलघोलतलेहिं पलाअ-सांतवन-सट्ठकाआप्पासनप्प-हुदिहिं दुःखेहिं कुदो खविज्जदि।

**चार्वाकः**—धूर्तप्रणीतागमप्रतारितानामाशामोदकैरियं तृप्तिर्मूर्खाणाम्। पश्य पश्य—

> कालिङ्गनं भुजनिपीडितबाहुमूलं
> भुग्नोन्नतस्तनमनोहरमायताक्ष्याः।
> भिक्षोपवासनियमार्कमरीचिदाहै-
> र्देहोपशोषणविधिः कुधियां क चैषः॥ २२॥

---

किमित्येतैस्तीर्थैः संसारसौख्यं परिहृत्यात्मा घोरघोरतरैः पराक सान्तपन-षष्ठ-कात्माशनप्रभृतिभिर्दुःखैः कस्मात्क्षिप्यते।

---

न्तिसूत्रेण मागध्यां भाषायां शकारादेशे प्राप्ते पुल्लि शब्दे इति प्राप्तौ मागध्यां शौरसेनीवदिति शकारादेशस्य विकल्प इति चन्द्रसेनादय आहुरिति न दोषः। 'रो लः' इति सूत्रेण मागध्यां रस्य लकारादेश इति रूपसिद्धिः। एवमुत्तरत्र मागधीभाषायां विज्ञेयम्। ग्रन्थविस्तरभयान्नात्र लिख्यते॥—**चार्वाक इति।** धूर्तप्रणीतागमास्त्रयीमुख्यास्तैः प्रतारिता वञ्चिताः। आशामोदकैराशापरिमितैः। मनोमात्रविजृम्भितैरित्यर्थ-। मोदकैर्लड्डुकैरियं तृप्तिस्तुष्टिः स्वर्गादिरूपा मूर्खाणामविवेकिनाम्। तदेव द्रढयति—**कालिङ्गनमित्यादि।** नायिकानायकयोर्भुजाभ्यां परस्परनिपीडितं बाहुमूलं यस्मिन्नालिङ्गने तत्तथोक्तम्। भुग्नोन्नतस्तन-मनोहरं गाढालिङ्गनवशाद्भुग्नौ किंचित्कुञ्चितावुन्नतौ च स्तनौ ताभ्यां मनोहरमत्यन्तमधुरमायताक्ष्या आलिङ्गनं क। भिक्षाटनम्, उपवासः, नियमाः कृ-

---

षष्ठकालप्रभृतिभिर्दुःखैः खेद्यते। धूर्तेति। वञ्चकप्रणीतशास्त्रप्रतारितानामाशामोदकैः। मनसि परिधृतमोदकैरित्यर्थः॥—कालिङ्गनमिति। आयताक्ष्या विस्तृतलोचनाया आलिङ्गनं आलिङ्गनजन्यं सुखं क। कुधियां परलोकसुखेप्सूनामेष सकललोकप्रसिद्धो देहोपशोपणविधिः शरीरशोषणकर्तव्यता क। परलोके प्रमाणाभावादिति भावः। कीदृशमालिङ्गनम्। भुजाभ्यां निपीडितं यद्बाह्वोर्मूलं तेन भग्ना उन्नतिर्ययोस्तौ च तौ स्तनौ च ताभ्यां मनोहरम्। देहशोषणविधिः कैः साधनैः। भिक्षा च, उपवास एकादश्यादिश्च, नियमश्चान्द्रायणादिश्च, अर्कमरीचिभिः सूर्यकि-

---

१ 'सट्टआलप्पहुदिहिं दुक्खेहिं खविज्जदि' इति पाठः। २ 'बाहुमूलभग्नोन्नत' इति पाठः।

शिष्यः—*आचालिअ, एवं खु तित्थिआ आलवन्ति जं दुःखमिस्सिदं संसालसुहं पलिहलणीअं त्ति ।

चार्वाकः—(विहस्य) आः, दुर्बुद्धिविलसितमिदं[1] नरपशूनाम् ।

त्याज्यं सुखं विषयसंगमजन्म पुंसां
दुःखोपसृष्टमिति मूर्खविचारणैषा ।
व्रीहीञ्जिहासति सितोत्तमतण्डुलाढ्या-
न्को नाम भोस्तुषकणोपहितान्हितार्थी ॥ २३ ॥

महामोहः—अये, चिरेण खलु प्रमाणवन्ति वचनानि कर्णसुखमुपजनयन्ति । (विलोक्य सानन्दम्) हन्त, प्रियसुहृन्मे चार्वाकः ।

चार्वाकः—(विलोक्य) एष महाराजो महामोहः । (उपसृत्य) जयतु जयतु महाराजः । एष चार्वाकः प्रणमति ।

महामोहः—चार्वाक, स्वागतं[2] ते । इहोपविश्यताम् ।

---

* आचार्य, एवं खलु तीर्थिका आलपन्ति यद्दुःखमिश्रितं संसारसुखं परिहरणीयमिति ।

---

च्छ्रचान्द्रायणादयः, अर्कमरीचिदाहाः पञ्चाग्नितपांसि तैः क्षुधियामेष देहोपशोषणविधिः क्व । उभयोः कियदन्तरम् । आलिङ्गनमेव श्रेष्ठमित्यर्थः ॥२२॥ विहस्येत्याद्यारभ्योपविश्येत्यन्तं सुगमम् ॥ २३ ॥ देवेत्यादि चार्वाकवाक्यम् । एष कलेः प्रणाम

रणैः सूर्यसंमुखावलोकनेन तत्किरणैर्यो दाहः संताप एतान्येव साधनानि तैरित्यर्थः ॥ २२ ॥ [ शिष्यः—आचार्य, एवं खलु तैर्थिका आलपन्ति । यद्दुःखमिश्रितं संसारसुखं परिहरणीयमिति ।]—त्याज्यं सुखमिति । दुःखेनोपसृष्टं मिश्रितं दुःखसंवलितं विषयसंगमाद्वनितादिसंबन्धाज्जन्म यस्य तादृशं सुखं त्याज्यमित्येषा पुंसां मूर्खविचारणा । मूर्खविचारणमेव दृष्टान्तेन प्रकटयति । भोः शिष्य, कः पुमान् हितार्थी हितमिष्टमर्थः प्रयोजनमस्यास्तीति हितार्थी सिताः श्वेता अत एव उत्तमास्तण्डुलास्तैराढ्यान्पूर्णान्व्रीहीन्शालींस्तुषकणोपहितांस्तुषकणैर्युक्तान् । नाम इति निश्चयेन । जिहासति हातुमिच्छति । न कोऽपीत्यर्थः । यदि त्यक्ष्यति तदा स मूर्ख इत्यर्थः ॥ २३ ॥—उपजनयन्ति प्रापयन्ति । विलोक्येत्यादि प्रणाम इत्यन्तमतिरो-

---

१ 'विलसितं नर' इति पाठः । २ 'स्वागतं भोः' इति पाठः ।

चार्वाकः—(उपविश्य) एष कलेः[1] साष्टाङ्गं प्रणामः।

महामोहः—अये कले, भद्रमव्याहतम्।

चार्वाकः—देव[2]प्रसादात्सर्वत्र भद्रम्। निर्वर्तितकृत्य[3]शेषश्च देवपादमूलं द्रष्टुमिति। यतः—

आज्ञामवाप्य महतीं द्विषतां निपाता-[4]
न्निर्वर्त्य तां सपदि लब्धसुखप्रसादः।
उच्चैःप्रमोदमनुमोदितदर्शनः सन्
धन्यो नमस्यति पदाम्बुरुहं प्रभूणाम्॥ २४॥

महामोहः—अथ तस्मिन्कलौ किय[5]त्संवृत्तम्।

चार्वाकः—देव,

इति। हे महाराज, अयं कलिस्त्वां नमस्करोतीत्यर्थः। अये इति प्रश्ने। भद्रं कुशलमव्याहतम्। **निर्वर्तितेति**। निर्वर्तितो निष्पादितः कृत्यशेषः कार्यशेषो येन स तथोक्तः। कार्यशेषं निर्वर्त्य द्रष्टुमागमिष्यतीत्यर्थः॥ **यतः—आज्ञेति**। महतीं भवदीयामाज्ञामवाप्य शिरसि निधाय तामाज्ञां द्विषतां निपाताच्छत्रुसंहारेण निर्वर्त्य निष्पाद्य सपदि सद्यो लब्धसुखप्रसादः सन्। कलिरित्यर्थः। उच्चैःप्रमोदम्। क्रियाविशेषणमेतत्। अनुमोदितदर्शनः। दर्शनार्थमनुज्ञात इत्यर्थः। धन्यः कलिः प्रभूणां स्वामिनां भवतां पदाम्बुरुहं नमस्यतीत्यन्वयः॥२४॥ **महामोह इत्यादि**। अथेति प्रश्ने। कियत्संवृत्तम्। कलिना कियत्कृतमि-

हितार्थम्॥—अथ कलेरिति। भद्रं कुशलमव्याहतं न व्याहतम्। नोपद्रुतमित्यर्थः। **निर्वर्तितेति**। निर्वर्तितः कृतः कर्तव्यस्य कार्यजातस्य शेषो येन सः। कृतकार्यः सेवकस्त्वतीव प्रभूणां प्रिय इति भावः॥ संपादितकार्यस्य भृत्यस्य प्रभुदर्शनं महते गुणायेत्याह—**आज्ञामिति**। य इत्यध्याहारः स इत्यपि। यः प्रभूणां पादाम्बुरुहं पादाम्बुजं नमस्यति स धन्यः। कीदृशः सन्। उच्चैरतिशयेन प्रमोदं प्रकृष्टानन्दं यथा स्यात्तथानुमोदितं संतोषास्पदीकृतं दर्शनं यस्य तादृशः सन्। किं कृत्वा। प्रभूणां महतीं सानन्दमाज्ञामवाप्य द्विषतां रिपूणां निपाते विनाशे कृते सति तामाज्ञां निर्वर्त्य संपाद्य सपदि तस्मिन्नेव क्षणे लब्धः सुखप्रसादो यस्य तादृशः सन्नित्यपि योज्यम्॥ २४॥ कियत्संपन्नमिति प्रश्ने उत्तरमाह—

१ 'कलिः साष्टाङ्गं प्रणमति' इति पाठः। २ 'देवस्य प्रसाद' इति पाठः। ३ 'कर्तव्यशेषश्च' इति पाठः। ४ 'निपाते निर्वर्त्य' इति पाठः। ५ 'कियत्संपन्नम्' इति पाठः।

व्यतीतवेदार्थपथः प्रथीयसीं यथेष्टचेष्टां गमितो महाजनः ।
तदत्र हेतुर्न कलिर्न चाप्यहं प्रभोः[1] प्रभावो हि तनोति पौरुषम् ॥२५॥

तत्रोत्तराः पथिकाः पाश्चात्याश्च त्रयीमेव त्याजिताः । शमदमादीनां कैव कथा । अन्यत्रापि प्रायशो जीविकामात्रफलैव त्रयी । यथाहाचार्यः ।

अग्निहोत्रं त्रयो वेदास्त्रिदण्डं भस्मगुण्ठनम् ।
प्रज्ञापौरुषहीनानां जीविकेति बृहस्पतिः ॥ २६ ॥

तेन कुरुक्षेत्रादिषु तावद्देवेन स्वप्नेऽपि विद्याप्रबोधोदयो नाशङ्कनीयः ।

**महामोहः**—साधु संपादितम् । महत्खलु तत्तीर्थं व्यर्थीकृतम् ।

**चार्वाकः**—देव, अन्यच्च विज्ञाप्यमस्ति ।

**महामोहः**—किं तत् ।

**चार्वाकः**—अस्ति विष्णुभक्तिर्नाम महाप्रभावा[2] योगिनी । सा

---

त्यर्थः ॥—व्यतीतेत्यादि । महाजनो वैदिकजनः । प्रथीयसीं पृथुतरां यथेष्टचेष्टामिच्छानुरूपव्यवहारं गमितः सन् । व्यतीतोऽतिक्रान्तो वेदमार्गो येन स तथोक्त इति यावत् । अत्र हेतुस्त्वमेव । न कलिः, नाप्यहम् । हि यस्मात्प्रभोः प्रभाव एव पौरुषं तनोति नोपजीविनाम् ॥ २५ ॥ तत्रोत्तरा इत्यारभ्य अन्यच्च विज्ञाप्यमस्तीत्येतदन्तं सुबोधम् ॥ २६ ॥ अस्ति विष्णुभक्तिरित्यादि भवतु प्रका-

---

व्यतीतेति । महाजनो धर्मपरो लोको ब्राह्मणादिः । यथेष्टचेष्टामविहितचेष्टां परस्त्रीगमनमद्यपानादिरूपां गमितः प्रापितः । कीदृशो महाजनः । व्यतीतो वेदार्थपन्थाः संध्याग्निहोत्रादिर्यस्मात्सः । कीदृशीं चेष्टाम् । प्रथीयसीं प्रचुराम् । महामोह एव तत्र हेतुरित्याह—तदत्रेति । हि निश्चितम् । अत्र धर्मत्यागेऽहं चार्वाकः कलिर्वा न हेतुर्यतः । तत्तस्मात्कारणात्प्रभुप्रसादः पुरुषस्य कर्म पौरुषं तनोति । विस्तारयतीत्यर्थः ॥ २५ ॥—त्रयीमेवेति । वेदत्रय्युक्तधर्मानित्यर्थः । आचार्यो बृहस्पतिः । अग्नीति । त्रिदण्डं त्रयो दण्डा यस्मिन्कर्मणि तत्त्रिदण्डम् । संन्यास इत्यर्थः । भस्मगुण्ठनं सर्वाङ्गे भस्मोद्धूलनं जीविका जीवनहेतुः ॥ २६ ॥—तेनेति । तेन

---

१ 'प्रभुप्रसादो' इति पाठः । २ 'महानुभावा' इति पाठः ।

तु कलिना यद्यपि विरलप्रचारा कृता तथापि तदनुगृहीतान्वय-मालोकयितुमपि न प्रभवामः । तदत्र देवेनावधातव्यमिति[1] ।

**महामोहः**—(सभयमात्मगतम् ।) आः, प्रसिद्धमहाप्रभावा सा योगिनी स्वभावाद्विद्वेषिणी चास्माकं दुरुच्छेद्या सा । भवतु[2] । (स्वगतम् ।) कार्यमत्याहितं भविष्यति । (प्रकाशम्[3]) तत्र भद्र, अल-मनया शङ्कया । कामक्रोधादिषु प्रतिपक्षेषु कुत्रेयमुदेष्यति ।

**चार्वाकः**—तथापि लघीयस्यपि रिपौ नानवहितेन जिगीषुणा भवितव्यम् । यतः—

> विपाकदारुणो राज्ञां रिपुरल्पोऽप्यरुंतुदः ।
> उद्वेजयति सूक्ष्मोऽपि चरणं कण्टकाङ्कुरः ॥ २७ ॥

**महामोहः**—( नेपथ्याभिमुखमवलोक्य ) कः कोऽत्र भोः ।

---

शमित्यन्तं सुबोधम् । अत्र पूर्वविलासाख्येनाङ्गेन दृष्टं यद्बीजं मध्ये नष्टम-स्ति विष्णुभक्तिर्नामेत्यादिना पुनर्दृष्टमिति दृष्टनष्टानुसर्पणात्परिसर्पाख्यं प्रति-मुखसन्धेर्द्वितीयमङ्गम् । तदुक्तम्—'परिसर्प इति प्राहुर्दृष्टनष्टानुसर्पणम्' इति ।—**तत्रेत्यादि** । तत्रार्थे भद्र चार्वाक, अलमनया शङ्कया । अलंशब्दो वारणक्रियापेक्षया । करणत्वात्तृतीया । कामक्रोधेत्यारभ्य यत इत्यन्तं स्पष्टम् ॥—**विपाकेत्यादि** । विपाकेऽवसाने दारुणो भयंकरोऽरुंतुदो मर्मस्पृक् । 'अरुर्द्विषद्–' इत्यादिना मुम् । उद्वेजयति दुःखाकरोति ॥ २७ ॥ कः कोऽत्र भोः । द्वारि क-

---

कारणेन कुरुक्षेत्रादिषु । आदिपदसंग्राह्या मायापुरीकेदारबदरिकाश्रमादयस्तेषु देवेन महाराजेन मोहेनेत्यर्थः । विद्या च प्रबोधश्च तयोरुदयः ।—**तदनुगृहीतान्वय-मिति** । तया विष्णुभक्त्यानुगृहीतोऽन्वयो वंशो यस्य तमालोकयितुं न प्रभवामः किमुत साक्षाद्विष्णुभक्तम् । अवधातव्यं सावधानेन भवितव्यम् ।—आत्मगतम् । स्वम-नस्येव वदति न बहिरित्यर्थः । आः पीडायाम् । प्रतिपक्षेषु शत्रुषु । अनवहितेना-सावधानेन ।—**विपाकेति** । राज्ञामल्पोऽपि रिपुः विपाकदारुणो विपाके परिणामे दारुणो दुःखदः । अरुर्मर्मस्थानं तुदतीत्यरुंतुदः । उक्तमर्थं द्रढयति—**उद्वेजयतीति** । उद्वेगं जनयति । शेषं सुगमम् ॥ २७ ॥ कः कोऽत्रेत्यादि महामोह इत्यन्तं स्पष्टम् ।

---

१ 'नावधारयितव्यं' इति पाठः । २ 'भवतु (प्रकाशम्) भद्र' इति पाठः । ३ 'प्रकाशं भद्र' इति पाठः ।

(प्रविश्य दौवारिकः ।)

**दौवारिकः**—जयतु जयतु । आज्ञापयतु देवः ।

**महामोहः**—भो असत्सङ्ग, आदिश्यन्तां कामक्रोधलोभमदमात्सर्यादयो यथा योगिनी विष्णुभक्तिर्भवद्भिरेवावहितैर्विहन्तव्येति ।

**दौवारिकः**—यदाज्ञापयति देवः ।

(इति निष्क्रान्तः ।)

(ततः प्रविशति पत्रहस्तः पुरुषः ।)

**पुरुषः**—*हग्गे उक्कलदेसादो आगदोह्मि । अत्थि तत्थ साअलतीलसण्णिवेसे पुलिसोत्तमसग्गिदं देवदाअदणम् । तस्सिं मदमाणेहिं भट्टकेहिं महालाअसआसं पेसिदोह्मि । (विलोक्य) एसा वालाणसी । एदं लाअउलम् । जाव प्पविसामि । (प्रविश्य) एसो भट्टको चव्वाकेण सद्धं किंवि मन्तअन्तो चिट्ठदि । ता उवसप्पामि

---

* अहमुत्कलदेशादागतोऽस्मि । अस्ति तत्र सागरतीरसंनिवेशे पुरुषोत्तमशब्दितं देवतायतनम् । तस्मिन्मदमानाभ्यां भट्टारकाभ्यां महाराजसकाशं प्रेषितोऽस्मि । एषा वाराणसी । इदं राजकुलम् । यावत्प्रविशामि । एष भट्टारकश्चार्वाकेण सार्धं किमपि मन्त्रयंस्तिष्ठति ।

---

स्तिष्ठतीत्यर्थः । प्रविश्य दौवारिकः । अत्र सहसैवार्थसंपत्तिलक्षणेन पताकास्थानकेन प्रवेशः ॥ आज्ञापयत्वित्यादि दौवारिकेत्यन्तं स्पष्टम् । अत्र विष्णुभक्तिर्विहन्तव्येत्यादि सा भवद्भिर्निग्राह्येत्यन्तेन विष्णुभक्तिश्रद्धाहिंसाकथनेनार्तिप्रतीतेर्विधूतं नाम प्रतिमुखसन्धेस्तृतीयमङ्गम् । 'विधूतमार्तिविख्यातम्' इति लक्षणात् । **ततः प्रविशति पत्रहस्तः पुरुष इति** । अत्र लेख्यं नामोपसन्धिस्तेन पात्रप्रवेशः । 'प्रश्नोद्भूतं च लेख्यं च नेपथ्योक्तिस्तथैव च । आकाशवचनं चेति विज्ञेयाः पञ्च सन्धयः ॥' इति । पत्रमर्पयती-

---

असत्सङ्ग इति दौवारिकसंबोधनम् । [पुरुषः—अहमुत्कलदेशादागतोऽस्मि । अस्ति तत्र सागरतीरसंनिवेशे पुरुषोत्तमसंज्ञितं देवायतनम् । तस्मिन् मदमानाभ्यां भट्टारकाभ्यां महाराजसकाशं प्रेषितोऽस्मि । एषा वाराणसी । इदं राजकुलम् । यावत्प्रविशामि । एष भट्टारकश्चार्वाकेण सार्धं किमपि मन्त्रयंस्तिष्ठति । तदुपसर्पाम्येनम् । जयतु

---

१ 'मदमानमात्सर्य' इति पाठः । २ 'संविदं' इति पाठः । ३ 'महालाजस्स' इति पाठः ।

णम् । (उपसृत्य) जेदु जेदु भट्टको । एदं पत्तं जाव णिलुप्पिअमाणं पेक्खदु[1] भट्टको । (इति पत्रमर्पयति ।)

**महामोहः**—(पत्रं गृहीत्वा) कुतो भवान् ।

**पुरुषः**—*हग्गे पुलिसोत्तमादो आगदोह्मि ।

**महामोहः**—(स्वगतम्) कार्यमत्याहितं भविष्यति । (प्रकाशम्) चार्वाक, गच्छ । कर्तव्येष्ववहितेन भवता भवितव्यम् ।

**चार्वाकः**—यदाज्ञापयति देवः ।

(इति निष्क्रान्तः ।)

**महामोहः**—(पत्रं वाचयति ।)

'स्वस्ति श्रीवाराणस्यां महाराजाधिराजपरमेश्वरमहामोहपादान्पुरुषोत्तमायतनान् मदमानौ साष्टाङ्गपातं प्रणम्य विज्ञापयतः । यथा भद्रमव्याहतम् । अन्यच्च देवी शान्तिर्मात्रा श्रद्धया सह विवेकस्य दौत्यमापन्ना विवेकसंगमाय देवीमुपनिषदमहर्निशं प्रबोधयति । अपि च कामसहचरोऽपि धर्मो वैराग्यादिभिरुपजप्त इव लक्ष्यते । यतः कामाद्विभिद्य[2] कुतश्चिन्निगूढः प्रचरति । तदेतज्ज्ञात्वा[3] तत्र देवः प्रमाणमिति ।

---

तदुपसर्पाम्येनम् । जयतु जयतु भट्टारकः । इदं पत्रं तावन्निरूप्यमाणं प्रेक्षतु भट्टारकः ।

* अहं पुरुषोत्तमादागतोऽस्मि ।

---

त्यादि पुरुष इत्यन्तं स्पष्टम् । नन्वित्यादि अपि चेत्यन्तं स्पष्टम् । **काम इत्यादि** । उपजप्त इव भेदं प्रापित इव । तद्देवः प्रमाणमिति । तत्र कार्ये देवः

---

जयतु भट्टारकः । इदं पत्रं निरूप्यमाणं प्रेक्ष्यतां भट्टारकैः । ] [पुरुषः—अहं पुरुषोत्तमादागतोऽस्मि । ] प्राकृते हग्गे इति शब्दोऽस्मद एकवचनम् । महामोह इत्यादि पत्रं वाचयतीत्यन्तं सुगमम् ॥ परमश्चासावीश्वरश्च एतादृशो यो मोहः । यथेति । भद्रमव्याहतं कल्याणं निर्विघ्नम् । देवीत्यादि सक्रो-

---

१ 'पेक्खदु भट्टकेहिं' इति पाठः । २ 'द्विच्छिद्य क्वचिन्निगूढः' इति पाठः । ३ 'तदेतदुक्तार्थं ज्ञात्वा' इति पाठः ।

**महामोहः**—(सक्रोधम्) आः किमेवमतिमुग्धौ शान्तेरपि वि-भ्यतः। कामादिषु प्रतिपक्षेषु कुतोऽस्याः संभवः। तथाहि—

धाता विश्वविसृष्टिमात्रनिरतो देवोऽपि गौरीभुजा-
श्लेषानन्दविघूर्णमाननयनो दक्षाध्वरध्वंसनः।
दैत्यारिः कमलाकपोलमकरीलेखाङ्कितोरःस्थलः
शेतेऽब्धावितरेषु जन्तुषु पुनः का नाम शान्तेः कथा ॥२८॥

(पुरुषं प्रति वदति।)

जाल्म, गच्छ। कामं सत्वरमुपेत्यादेशमस्माकं प्रतिपादय। तथा दुराशयो धर्म इत्यस्माभिरवगतम्। तदस्मिन्मुहूर्तमपि न वि-श्वसितव्यम्। दृढं बद्ध्वा धारयितव्य इति।

**पुरुषः**—*जं देवो आणवेदि।

(इति निष्क्रान्तः।)

---

* यद्देव आज्ञापयति।

---

प्रमाणम्। भवानेव जानातीत्यर्थः। सक्रोधमित्यारभ्य प्रतिपादयेत्यन्तं स्पष्टम्। अहो आश्चर्यम्। मदमानौ शान्तेरपि बिभ्यतः। यतस्तयोर्विद्यमानयोः शान्तेः कुतोऽवसरः। अतीव मुग्धौ स्वप्रभावमपि नावगच्छत इति ॥—**दुराशय इत्यादि**। धर्मः कामं विहाय दुराशयो भवतीत्यस्माभिरवगतम्। तस्मिन्धर्मे विश्वासो न कार्यः। यद्देव आज्ञापयतीति। निष्क्रान्त इत्यारभ्य पर्याप्तावि-

---

धमित्यन्तं सुबोधम्। अतिमुग्धा अतिशयेन मूढाः। शान्तेः इन्द्रियोपशमात्। अस्याः शान्तेरिन्द्रियोपशमाभावं प्रकटयति—धातेति। धाता ब्रह्मा विश्वस्य वि-शिष्टा या सृष्टिस्तन्मात्रे निरतस्तत्परः। दक्षाध्वरध्वंसनो दक्षयज्ञविनाशको देवोऽपि त्रिनेत्रोऽपि गौरीभुजाभ्यामाश्लेष आलिङ्गनं तेन जनितो य आनन्दः सुखं तेन विशेषेण घूर्णमानानि नयनानि यस्य सः। एतेन कामक्रोधासक्तो महादेव इति समसूचि। दैत्यारिर्विष्णुः कमलाया लक्ष्म्याः कपोलं गण्डस्थलं तस्मिन्मकरीलेखा मत्स्याकृतिपत्रलेखा तयाङ्कितं चिह्नितमुरःस्थलं यस्य सः। एतेनायमपि कामा-सक्त इत्यभाणि। अब्धौ क्षीरसमुद्रे शेते स्वपिति। एतादृशेषु सिद्धेषु शान्त्यभावे इतरेषु प्राणिषु शान्तेः का नाम कथा। न कापीत्यर्थः॥ २८॥ कामदूतस्य नाम जाल्म इति। असमीक्ष्यकारित्वात्।'जाल्मोऽसमीक्ष्यकारी स्यात्' इत्यमरः। आदेश-माज्ञां। प्रतिपादय कथय। दुराशयो दुर्हृदयः। [पुरुषः—यद्देव आज्ञापयति। ]

---

१ 'पत्रं वाचयित्वा सक्रोधं' इति पाठः। २ 'अतिमुग्धाः—बिभ्यति कुतोऽस्याः' इति पाठः।

**महामोहः**—(स्वगतं विचिन्त्य) शान्तेः कोऽभ्युपायः । अथवा अलमुपायान्तरेण । क्रोधलोभावेव तावदत्र पर्याप्तौ । (प्रकाशम्) कः कोऽत्र भोः ।

(प्रविश्य दौवारिकः ।)

**दौवारिकः**—*आज्ञापयतु देवः ।

**महामोहः**—तावदाहूयतां क्रोधो लोभश्च ।

**पुरुषः**—जं आणवेदि देवो ।

(इति निष्क्रान्तः ।)

(ततः प्रविशति क्रोधो लोभश्च ।)

**क्रोधः**—श्रुतं मया यथा शान्तिश्रद्धाविष्णुभक्तयो महाराजेन प्रतिपक्षमाचरन्तीति । अहो, मयि जीवति कथमासामात्मनि निरपेक्षितं चेष्टितम् । तथाहि—

अन्धीकरोमि भुवनं बधिरीकरोमि
धीरं सचेतनमचेतनतां नयामि ।
कृत्यं न पश्यति न येन हितं शृणोति
धीमानधीतमपि न प्रतिसंदधाति ॥ २९ ॥

---

* यदाज्ञापयति देवः ।

---

त्यन्तं स्पष्टम् । तावदाहूयतामित्यादि वाक्यं श्रुत्वा दौवारिको यदादिशतीति गतः प्रविशतीति क्रोधो लोभश्च । अत्र सहसैवार्थसंपत्त्या प्रवेशः । आज्ञापयतु देवः ॥—**अन्धीकरोमीत्यादि** । अन्धीति च्विप्रत्ययान्तम् । एवं बधिरीति । येन मया कृत्यं न पश्यति । हितं न शृणोति । धीमान् अधीतमपि न

---

कोऽभ्युपाय इति । शान्तिनिराकरणायेति शेषः । महाराजेन प्रतिपक्षभावं शत्रुत्वमात्मनिरपेक्षितं स्वात्मापेक्षारहितं स्वजीवनरहितम् ।—**अन्धीकरोमीति** । भुवनं भूमण्डलमन्धीकरोम्यनन्धमन्धं संपादयामि तथाकरोमीत्यन्धीकरोमि । दृष्टिरहितं करोमीत्यर्थः । बधिरीकरोमि श्रोत्रहीनं करोमि । धीरं धैर्ययुक्तमधीरतां नयामीति शेषः । सचेतनं सहृदयमचेतनतां हृदयशून्यतां नयामि प्रापयामि । अन्धीकरणादेः प्रयोजनमाह । येन कृत्यं कर्तव्यं न पश्यति, येन हितं न शृणोति । धीमान् बुद्धिमा-

---

१ 'प्रविशतः' इति पाठः । २ 'आत्मनिरपेक्षं' इति पाठः ।

**लोभः**—अये, मदुपगृहीता मनोरथसरित्परम्परामेव तावन्न तरिष्यन्ति किं पुनः शान्त्यादींश्चिन्तयिष्यन्ति । पश्य पश्य सखे—

सन्त्येते मम दन्तिनो मदजलप्रम्लानगण्डस्थला
 वातव्यायतपातिनश्च तुरगा भूयोऽपि लप्स्येऽपरान् ।
एतल्लब्धमिदं लभे पुनरिदं लब्धाधिकं ध्यायतां
 चिन्ताजर्जरचेतसां बत नृणां का नाम शान्तेः कथा ॥३०॥

**क्रोधः**—सखे, विदितस्त्वया मत्प्रभावः ।

त्वाष्ट्रं वृत्रमघातयत्सुरपतिश्चन्द्रार्धचूडोऽच्छिन-
 द्देवो ब्रह्मशिरो वसिष्ठतनयानाघातयत्कौशिकः ।

---

प्रतिसंदधाति । अधीतमपि न स्मरतीत्यर्थः ॥२९॥ अये लोभ इत्यारभ्य चिन्तयतीत्यन्तं स्पष्टम् ॥ लोभस्य वचः—**सन्त्येत इत्यादि** । वाताद्वायोर्व्यायतं दीर्घमधिकं यथा भवति तथा पातिनः पतन्ति धावन्तीति तथोक्ताः । भूयोऽपि पुनरपरान्लप्स्ये । एतल्लब्धमिदं लभे । इदमधिकं लब्धमिति शेषः । इत्येवमहर्निशं चिन्तयतां चिन्तावशाज्जर्जरचेतसां नृणाम् । बतेत्यामन्त्रणे । का नाम शान्तिः । न कुत्रापीत्यर्थः ॥ ३० ॥ एवं लोभेन स्वप्रभावप्रकटने कृते क्रोधः स्वमाहात्म्यं प्रकटयति—**सखे इत्यादि** । **त्वाष्ट्रमिति** । त्वाष्ट्रं त्वष्टुः पुत्रं वृत्रनामकमघातयद्धिंसितवान् । वज्रेण कर्त्रा । चन्द्रार्धचूडो रुद्रो ब्रह्मशि-

---

नपि । अपिशब्दात्तान्नाकलयतीत्यर्थः । येनाधीतं पठितं धर्मशास्त्रादि न प्रतिसंदधाति न स्मरतीत्यर्थः ॥ २९ ॥ मदुपगृहीता लोभवन्तः । मनोऽभिलाषरूपा या नदी परंपरा तामेवेत्यर्थः ॥—**सन्त्येत इति** । एते मम दन्तिनो गजाः सन्ति । कीदृशा दन्तिनः । मदजलेन मदोदकेन प्रम्लानानि गण्डस्थलानि येषां ते । एते मम तुरगाः सन्ति । कीदृशास्तुरंगाः । वातवद्वायुवद्व्यायतं विशेषेण विस्तृतं यथास्यात्तथा पतन्ति गच्छन्ति तच्छीलाः । भूयोऽपि पुनरपि परानन्यांल्लप्स्ये प्राप्स्यामि । किंच एतल्लब्धं प्राप्तमिदं पुनर्लभे प्राप्नोमि एवं लब्धादधिकं ध्यायतां चिन्तयतां नृणां चिन्तया जर्जरं शिथिलं चेतो येषां तादृशानां प्राणिनाम् । बत इति निश्चयेन । शान्तेः शान्तिमार्गस्य का कथा का वार्ता । अपितु न कापीत्यर्थः ॥ ३० ॥ मत्प्रभावः मम क्रोधस्य प्रभावः सामर्थ्यमिति योजना ॥—**त्वाष्ट्रमिति** । सुरपतिरिन्द्रः त्वाष्ट्रं वृत्रं वृत्रासुरमपातयदमारयत् । चन्द्रार्धचूडश्चन्द्रशेखरो देवो ब्रह्मणः शिरोऽच्छिन-

---

१ 'मनोरथनदी' इति पाठः । २ 'झर्झरचेतसां' इति पाठः । ३ 'मपातयत्' इति पाठः ।

अपि च—

विद्यावन्त्यपि कीर्तिमन्त्यपि सदाचारावदातान्यपि
प्रोच्चैःपौरुषभूषणान्यपि कुलान्युद्धर्तुमीशः क्षणात् ॥ ३१ ॥

लोभः—तृष्णे, इतस्तावत् ।

(प्रविश्य तृष्णा)

तृष्णा—*किं आणवेदि अज्जउत्तो ।

लोभः—प्रिये, श्रूयताम्—

क्षेत्रग्रामवनाद्रिपत्तनपुरद्वीपक्ष्मामण्डल-
प्रत्याशायत[1]सूत्रबद्धमनसां लब्धाधिकं ध्यायताम् ।
तृष्णे देवि यदि प्रसीदसि तनोष्यङ्गानि तुङ्गानि चे-
त्तद्बोः प्राणभृतां कुतः शमकथा ब्रह्माण्डलक्षैरपि ॥ ३२ ॥

---

* किमाज्ञापयत्यार्यपुत्रः ।

---

रोऽच्छिनत् । कौशिको विश्वामित्रो वसिष्ठतनयाञ्शतादीनाघातयत् । धातुयोगे आङ् । घातयद्घातितवान् । कल्माषपादेनेति शेषः । स्वकीयमहिम्नो निर्मलतामाह—अपि चेति । **विद्यावन्त्यपीत्यादि** । प्राशस्त्ये मतुप् । प्रोच्चैःपौरुषभूषणानीत्येकं पदम् । यद्वा भिन्नं पदम् । प्रोच्चैरत्युन्नता इत्यर्थः ॥ ३१ ॥ **क्षेत्रग्रामेत्यादि** । क्षेत्रं शालेयादिकम् । ग्रामः प्रसिद्धः । वनान्याम्रवनादीनि । अद्रयः पर्वता दुर्गार्थाः । पत्तनान्युपनगराणि । पुराणि प्रधाननगराणि । द्वीपा जम्बुद्वीपादयः । क्ष्मामण्डलं तत्र प्रत्याशा वाञ्छा सैव आयतसूत्रं तेन बद्धमनसां

---

च्छेदयामास । कौशिको विश्वामित्रो वसिष्ठतनयाना समन्तात् । सर्वानित्यर्थः । अघातयदमारयत् । क्रोधाक्रान्तानामेतानि चरित्राणीति ध्वनितम् । स्वीयं साक्षात्पौरुषमाह । अपिच—विद्येति । अहमीदृशान्यपि कुलानि क्षणाच्छीघ्रमेवोद्धर्तुमुत्कर्षेण हर्तुं नाशयितुमीशः समर्थः । कीदृशानि कुलानि । विद्यावन्ति ज्ञानवन्त्यपि, कीर्तिमन्ति यशस्वीन्यपि, सदाचारेण वेदविहिताचारेणावदातानि निर्मलान्यपि, प्रोच्चैः पौरुषभूषणान्यप्यतिशयेन पुरुषार्थभूषणानि एवंगुणयुक्तानि नाशयितुं समर्थः किं पुनरन्यादृशानीति भावः ॥ ३१ ॥ [तृष्णा—किमाज्ञापयत्यार्यपुत्रः ।] क्षेत्रग्रामेति । क्षेत्रादिमण्डलान्तानि यानि तेषां या प्रत्याशा प्रतिवस्त्वधिकप्राप्तीच्छा तदेव घनं दृढं सूत्रं तेन बद्धं मनो येषां ते । लब्धात्प्राप्तादधिकं ध्यायतां चिन्तयतां प्राणभृतां जीवानां भोः तृष्णे, यदि प्रसीदसि प्रसन्ना भवसि । अङ्गानि तुङ्गानि चे-

---

१ 'घनसूत्र' इति पाठः ।

तृष्णा—*अज्जउत्त, सअं जेव्व दाव अहं एदस्सिं अत्थे णिच्चं अहिजुत्ता। संपदं अज्जउत्तस्स अण्णाए वह्मण्डकोटिओवि[१] ण मे उदरं पूरइस्संदि ।

क्रोधः—हिंसे, इत आगम्यताम् ।

(प्रविश्य हिंसा ।)

हिंसा—†एसह्मि । आणवेदु अज्जउत्तो ।

क्रोधः—प्रिये[२], तावत्त्वया सह धर्मचारिण्या मातृपितृवधोऽपि ममेषत्कर एव । तथाहि—

केयं माता पिशाची क इव हि जनको भ्रातरः केऽत्र कीटा
वध्योऽयं बन्धुवर्गः कुटिलविटसुहृच्चेष्टिता ज्ञातयोऽमी ।

(हस्तौ निष्पीड्य ।)

---

* आर्यपुत्र, स्वयमेव तावदहमस्मिन्नर्थे नित्यमभियुक्ता । सांप्रतमार्यपुत्रस्याज्ञया ब्रह्माण्डकोट्योऽपि न मे उदरं पूरयिष्यन्ति ।

† एषास्मि । आज्ञापयत्वार्यपुत्रः ।

---

तदाविष्टचेतसां लब्धाधिकं ध्यायतां वाञ्छतां प्राणभृतां मनुष्याणां हे तृष्णे देवि, यदि प्रसीदसि । असंशये संशयोक्तिः । यदङ्गानि तुङ्गानि तनोषि तत्तस्मात्कारणाद्ब्रह्माण्डलक्षैरपि ब्रह्माण्डकोटिभिरपि परिपूर्णत्वनिबन्धना शमकथा कुत इत्यन्वयः ॥ ३२ ॥ प्रिये, तावदिति वाक्यालंकारे । **केयमिति** । कुटिलविटसुहृच्चेष्टिताः कुटिला वक्राः प्रच्छन्नशत्रवस्त एव विटसुहृदश्चेटविदूषकादयस्तेषां चेष्टितानीव चेष्टितानि व्यापारा येषां ते । हस्तौ निष्पीड्येति क्रोधातिशयाभि-

---

त्तनोपि पुष्टानि चेत्करोषि तत्तदा ब्रह्माण्डलक्षैरपि प्राप्तैः शमकथा शमवार्ता कुतः । न कुतोऽपीत्यर्थः । अधिकाशाविच्छेदाभावादिति भावः ॥ ३२॥ [तृष्णा—आर्यपुत्र, स्वयमेव तावदहमेतस्मिन्नर्थे नित्यमभियुक्ता, सांप्रतं आर्यपुत्रस्याज्ञया ब्रह्माण्डकोटिभिरपि न मे उदरं पूरयिष्यते ] । [तृष्णा—एषास्मि, आज्ञापयत्वार्यपुत्रः । ] सहधर्मचारिण्या मद्वचनकारिण्या ईषत्कर एव । सुकर एवेत्यर्थः । क्रोधस्य स्वरूपं दर्शयति —केयं मातेति । बन्धुवर्ग इत्यन्तं सुगमान्वयम् । कुटिला वक्राश्च ते विटा जाराश्च तद्वत्सुहृच्चेष्टितं सौहार्दचेष्टितं येषां तादृशा अमी ज्ञातयः के । न केऽपीत्यर्थः । पित्रा-

---

१ 'कोडिहिरवि' इति पाठः । २ 'प्रिये, त्वया' इति पाठः ।

आगर्भं यावदेषां कुलमिदमखिलं नैव निःशेषयामि
स्फूर्जन्तः क्रोधवह्नेर्न दधति विरतिं तावदङ्गे स्फुलिङ्गाः॥३३॥
(विलोक्य) एष स्वामी। तदुपसर्पामः। (सर्वे उपसृत्य) जयतु जयतु देवः।

**महामोहः**—श्रद्धायास्तनया शान्तिरस्मद्द्वेषिणी। सा भवद्भिरवहितैर्निग्राह्येति[1]।

**सर्वे**—यदादिशति देवः।

(इति निष्क्रान्ताः।)

**महामोहः**—श्रद्धायास्तनया इत्युपक्षेपेणोपायान्तरमपि हृदयमारूढम्। तथाहि। शान्तेर्माता श्रद्धा। सा च परतन्त्रा। तत्केनाप्युपायेनोपनिषत्सकाशात्तावच्छ्रद्धापकर्षणं कर्तव्यम्। ततो मातृवियोगदुःखादतिमृदुलतया शान्तिरुपरता भविष्यति[2]। श्रद्धां व्याक्रष्टुं मिथ्यादृष्टिरेव विलासिनी परं प्रगल्भेति तदस्मिन्विषये सैव नियुज्यताम्। (पार्श्वतो विलोक्य) विभ्रमावति, सत्वरमाहूयतां मिथ्यादृष्टिर्विलासिनी[3]।

---

नयः। **आगर्भमित्यादि**। एषामिदमखिलं कुलमागर्भं यावदेव न निःशेषयामि तावत्पर्यन्तं क्रोधवह्नेर्विस्फुलिङ्गाः स्फूर्जन्तो जाज्वल्यमाना विरतिं न प्राप्नुवन्तीत्यन्वयः॥ ३३॥ विलोक्येत्यारभ्य निष्क्रान्ता इत्यन्तं स्पष्टम्। उपक्षेपेण स्मृत्युद्बोधेन। तथाहीत्यादि तदस्मिन्विषये सैव नियुज्यतामित्यन्तं स्पष्टम्। अत्रार्तिशान्तिप्रतीतेः शमो नाम प्रतिमुखसन्धेश्चतुर्थमङ्गम्। तल्लक्षणं

---

दीनामप्युपालम्भे। अन्येषामुपालम्भे कैव कथेत्यभिप्रायः। आगर्भमिति। क्रोधवह्नेः स्फुलिङ्गा अङ्गे शरीरे विरतिं विरामं न दधति नोररीकुर्वन्ति। कुत इत्याह। यावदेषां बन्ध्वादीनामखिलं समस्तं कुलमागर्भं गर्भावधि नैव निःशेषयामि निःशेषं करोमि तावत्स्फुलिङ्गा न विरता भवन्तीत्यर्थः। कीदृशाः स्फुलिङ्गाः। स्फूर्जन्तो देदीप्यमानाः। मारणादिनैव क्रोधः शाम्यतीति हृदयम्॥ ३३॥ उपक्षेपेणोपक्रमेण हृदयं प्रत्यागतम्। उपायान्तरमाह—तथा हीति। परतन्त्रा

---

१ 'भवद्भिर्निग्राह्येति' इति पाठः। २ अत्र 'अवसीदन्ती विनशिष्यति' इति पाठः। ३ 'मिथ्यादृष्टिः' इति पाठः।

**विभ्रमावती**—*जं देवो आणवेदि ।

(निष्क्रम्य मिथ्यादृष्ट्या सह प्रविशति ।)

**मिथ्यादृष्टिः**—†सहि, चिरदिट्ठस्स [1]महाराअस्स कहं मुहं पेक्खिस्सं । णं खु मं महाराओ उवालहिस्सदि ।

**विभ्रमावती**—‡सहि, तुअ मुहदंसणेण अप्पाणं जेव्व महाराओ ण वेइस्सदि । कुदो उवालहिस्सदि ।

**मिथ्यादृष्टिः**—¶सहि, किं मं [2]अलीअसोहग्गां संभाविअ विलम्बेसि ।

**विभ्रमावती**—§सहि, संपदं जेव्व पेक्खिस्से अलिअत्तणं सोहग्गस्स । अण्णच्च णिद्दाघुम्माउले प्पिअसहीए लोअणे पेक्खेमि । ता किं खु प्पिअसहीए लोअणस्स विणिद्दाए कालणम् ।

---

* यदेव आज्ञापयति ।

† सखि, चिरदृष्टस्य महाराजस्य कथं मुखं प्रेक्षिष्ये । न खलु मां महाराज उपालम्भिष्यते ।

‡ सखि, त्वन्मुखदर्शनेनात्मानमेव महाराजो न वेत्स्यति । कुत उपालम्भिष्यते ।

¶ सखि, किं मामलीकसौभाग्यां संभाव्य विडम्बयसि ।

§ सखि, सांप्रतमेव प्रेक्षिष्येऽलीकत्वं सौभाग्यस्य । अन्यच्च निद्राघूर्णाकुले प्रियसख्या लोचने पश्यामि । तर्हि किं खलु प्रियसख्या लोचनस्य विनिद्रतायाः कारणम् ।

---

तु—'आर्तिशान्तिः शमः स्मृतः' इति ॥ **सहीत्यादि** । अत्र प्रतिमुखसन्धेर्नर्माख्यं पञ्चममङ्गमुक्तम् । तल्लक्षणम्—'परिहासवचो नर्म' इति । अतः किमु-

---

श्रद्धाधीना । व्याक्रष्टुं तिरस्कर्तुम् [**विभ्रमाः**—यदेव आज्ञापयति ।][**मिथ्यादृष्टिः**—सखि, चिरदृष्टस्य महाराजस्य कथं मुखं प्रेक्षिष्ये । न खलु महाराज उपालप्स्यति ।] [**विभ्रमा**—सखि, तव दर्शनेनात्मानमेव महाराजो न वेत्स्यते, कुत उपालप्स्यति ।] [**मिथ्यादृष्टिः**—सखि, किं मामलीकं सौभाग्यं संभाव्य विडम्बयसि । [**विभ्रमा**—सखि, सांप्रतमेव प्रेक्षिष्येऽलीकत्वं सौभाग्यस्य । अन्यच्च निद्राघूर्णा-

---

१ 'महालअस्स—णं खु महालाओ' इति पाठः । २ 'मा अलीअं सोहग्गं' इति पाठः ।

**मिथ्यादृष्टिः**—*सहि, एकवल्लहावि जा इत्थिआ भोवई[1] ताएवि णिद्दा दुल्लहा । किं उण अह्माणं सअललोअवल्लहाणम् ।

**विभ्रमावती**—†के के उण प्पिअसहीए वल्लहा ।

**मिथ्यादृष्टिः**—‡सहि, पढमं महाराओ, अदो उवरि कामो, कोहो, लोहो, अहंकालोत्ति[2] । अधवा अलं विसेसेण । एत्थ कुले जो जादो[3] वालो ट्ठविरो जुवाणोवि हिअअणिहिदए मए विणा रद्दिदिअहाइं ण अहिरमई ।

**विभ्रमावती**—§णं एत्थ कामस्स रदी, कोहस्स हिंसा,

---

* सखि, एकवल्लभापि या स्त्री भवति तस्या अपि निद्रादुर्लभा । किं पुनरस्माकं सकललोकवल्लभानाम् ।

† के के पुनः प्रियसख्या वल्लभाः ।

‡ सखि, प्रथमं महाराजः, अत उपरि कामः, क्रोधः, लोभः, अहंकारश्च । अथवालं विशेषेण । अस्मिन्कुले यो जातो बालः स्थविरो युवापि हृदयनिहितया मया विना रात्रिदिवसान्नाभिरमते ।

§ नन्वस्य कामस्य रतिः, क्रोधस्य हिंसा, लोभस्य तृष्णा, प्रियतमेति

---

पालम्भिष्यते अलीकत्वं सौभाग्यस्य नास्तीति हृद्गतोऽर्थः । **एत्थ कुले जो जाद इत्यादि** । युवशब्दस्य जुवाणादेशः । बाल्यावस्थापन्नो बालः, स्थवि-

---

कुलं प्रियसख्या लोच प्रेक्षे । तत् किं खलु प्रियसख्या लोचनस्य विनिद्रतायाः कारणम् । ] [मिथ्यादृष्टिः—सखि, एकवल्लभापि या स्त्री भवति तस्या अपि निद्रा दुर्लभा । किं पुनरस्माकं सकललोकवल्लभानाम् । ] [विभ्रमा—केके पुनः प्रियसख्या वल्लभाः । ] [मिथ्यादृष्टिः—सखि, प्रथमं महाराजः, अत उपरि कामः,क्रोधः,लोभः, अहंकार इति । अथवा अलं विशेषेण । अस्मिन्कुले यो जातो न मया विना बालः. स्थविरो युवा वा हृदयनिहितया रात्रिदिनान्यभिरमते । [ हृदयनिहितया मया विनेति योजना प्राकृते । [विभ्रमा—ननु इह कामस्य रतिः, क्रोधस्य हिंसा, लोभस्य तृष्णा,

---

१ 'भोदि' इति पाठः । २ 'अहंआरो' इति पाठः । ३ 'जादो ण मएविणा बालो ट्ठविरो जुवा वा हिअअणिहिदाए रद्दिंअहाइं अहिरमदि' इति पाठः ।

लोहस्स तिण्हा परमप्पिआ सुणीअदि । तासं कधं पिअदमाणं णिच्चं रमन्दी इस्सं णं संजाणेसि ।

मिथ्यादृष्टिः—*सहि, इस्सेत्ति कहं भणीअदि । ताँ अवि मए विणा मुहूत्तंवि ण तुस्संति ।

विभ्रमावती—†सहि, अदो जेव्व भणामि तुहसरिसी सुहआ इत्थिआ पुहिवीए णत्थि । जाए सोअग्गमहद्धिविहुरिअहिअआ सावतिओ प्पसाअं पडिच्छन्ति । सहि, अण्णच्च भणामि । एवं णिद्दाउळणअणविसंठुलक्खलन्तचलणनेउलंझकालमुहलाए गदीए

---

श्रूयते । तासां कथं प्रियतमान्नित्यं रमयन्तीर्ष्यो न संजनयसि ।

* सखि, ईर्ष्येति कथं भण्यते । ता अपि मयाविना मुहूर्तमपि न तुष्यन्ति ।

† सखि, अत एव भणामि त्वत्सदृशी सुभगास्त्री पृथिव्यां नास्ति । यस्याः सौभाग्यमाहात्म्यविधुरितहृदयाः सपत्न्यः प्रसादं प्रतीच्छन्ति । सखि, अन्यद्भणामि । एवं निद्राकुलनयनविसंस्थुलस्ख-

---

परमप्रिया श्रूयते । तासां कथं यत्प्रियतमे नित्यं रमयन्ती ईर्ष्यां न जनयसि । ] [ मिथ्यादृष्टिः—सखि, ईर्ष्येति किं भण्यते । न ता अपि मया विना मुहूर्तमपि तिष्ठन्ति । ] [ विभ्रमा—सखि, अत एव भणामि । त्वत्सदृशा सुभगा स्त्री पृथिव्यां नास्ति । यस्याः सौभाग्यमहर्द्धिविधुरितहृदयाः सपत्न्यः प्रसादं प्रतीच्छन्ति । सखि, अन्यच्च भणामि । एवं निद्राकुलहृदया विसंस्थुलस्खलच्चरणनूपुरझङ्कारमुखरया गत्या महाराजं संभावयन्ती शङ्कितहृदयं करिष्यति प्रियसखीति तर्कयामि । ] प्रतीच्छन्ति वाञ्छन्ति, सौभाग्यस्य महती ऋद्धिः महर्द्धिः महासंपत्तिः तया विधुरितं रहितं हृदयं यासां ता इति प्राकृते समासः, विसंस्थुलं स्वस्थानाद्भ्रष्टं नूपुरस्य झङ्कारः शब्द-

---

१ 'तास्सं कधं जं पिअदमे' इति पाठः । २ 'ण जाणेसि' इति पाठः । ३ 'ण ता अवि मए विणा मुहूत्तं वि चिट्ठंदि' इति पाठः । ४ 'तुवसदिसी सुहगा इत्थिआ पुहिवीए णत्थि । जाए सोहग्गमहद्धिविहुरहिअआ सवत्तिओ पसादं पडिच्छति । सहि अण्णच्च भणामि । एव्वं णिद्दाउलहिअआ विसंठुलस्खलच्चलणनेउरझंकालमुहलाए गदीए महाराअं संहावअंदी संकिदहिअअं करिस्सदि' इति पाठः ।

महाराअं संभावयंदी संकिदहिअअं करिस्सदि पिअसहीति तक्केमि।

**मिथ्यादृष्टिः**—*किं एत्थ संकिदव्वं । णं अह्माणं महाराअ[१]-णिउत्ताणं जेव्व एसो अविणओ । अविअ सहि, दंसणमत्तप्पसण्णाणं पुरिसाणं पुरो कीरिसं भअम् ।

**महामोहः**—(विलोक्य) अये, संप्राप्तैव प्रिया मिथ्यादृष्टिः । या एषा—

श्रोणीभारभरालसा दरगलन्माल्योपवृत्तिच्छला-
लीलोत्क्षिप्तभुजोपदर्शितकुचोन्मीलन्नखाङ्कावलिः ।
नीलेन्दीवरदामदीर्घतरया दृष्ट्या धयन्ती मनो
दोषान्दोलनलोलकङ्कणरणत्कारोत्तरं सर्पति ॥ ३४ ॥

---

लच्चरणनूपुरझङ्कारमुखरया गत्या महाराजं संभावयन्ती शङ्कितहृदयं करिष्यति प्रियसखीति तर्कयामि ।

* किमत्र शङ्कितव्यम् । नचास्माकं महाराजनियुक्तानामेवैषोऽविनयः । अपिच सखि, दर्शनमात्रप्रसन्नानां पुरुषाणां पुरतः कीदृशं भयम् ।

---

रो वृद्धो युवा तरुणो वा कौमाराद्यवस्थापन्नः कश्चन वा भवत्वित्यर्थः ॥—**श्रोणीभारेति** । भ्रियत इति भारः भृतकं श्रोणीभार इव । उपमितसमासः । तस्य भरोऽतिशयस्तेनालसालसगमना । दरगलन् किंचिद्विगलितो माल्यस्योपवृत्तिच्छलाद्यथास्थानस्थापनव्याजाद्व्याजमवलम्ब्य लीलया विलासेनोत्क्षिप्तेन भुजेनोपदर्शिता कुचयोरुन्मीलन्ती विजृम्भमाणा नखाङ्कावलिर्यस्याः सा । अत्र स्वभावोक्तिरलंकारः । 'नानावस्थां पदार्थानां रूपं साक्षाद्विवृण्वती । स्वभावश्च'

---

स्तेन मुखरया सशब्दया । [ मिथ्यादृष्टिः—किमत्र शङ्कितव्यं, न चास्माकं महाराजनियुक्तानामेवैषोऽविनयः । अपिच सखि, दर्शनमात्रप्रसन्नानां पुरुषाणां पुरतः कीदृशं भयम् ।] या एषेति । श्रोणीभारेति । या एषा अगणितगुणग्रामा दोलाया आन्दोलनं चालनं तद्वल्लोले चञ्चले ये कङ्कणे करभूषणे तयोर्यो झणत्कारः शब्दः स उत्तरोऽग्रवर्ती यत्र यस्यां क्रियायां यथा स्यात्तथा सर्पत्यागच्छति । कीदृशी । श्रोण्या भारो नितम्बभारस्तस्य भरोऽतिशयस्तेनालसा । पुनः कीदृशी । दरमीषत् अर्थात् शिथिलधम्मिल्लाद्गलन्ति च तानि माल्यानि च तेषां योपवृत्तिः संवरणं तस्य छलं

---

१ 'महालाअ—अविणवो—केरिस' इति पाठः ।

विभ्रमावती—*एसो महाराओ । उवसप्पदु पिअसही ।

मिथ्यादृष्टिः—(उपसृत्य) †जंअदु जअदु महाराओ ।

महामोहः—प्रिये,

दलितकुचनखाङ्कमङ्कपालीं रचय ममाङ्कमुपेत्य पीवरोरु ।

अनुहर हरिणाक्षि शंकराङ्कस्थितहिमशैलसुताविलासलक्ष्मीम् ३५

(मिथ्यादृष्टिः सस्मितं तथा करोति ।)

महामोहः—(आलिङ्गनसुखमभिनीय) अहो, प्रियायाः परिष्वङ्गात्परात्तं नवयौवनम् । तथाहि—

* एष महाराजः । उपसर्पतु प्रियसखी ।

† जयतु जयतु महाराजः ।

इति लक्षणात् । नीलेन्दीवरदामदीर्घतरया । नीलशब्देनेन्दीवराणां दरविकसितत्वं द्योत्यते । इन्दीवराणां दाम स्रक् तद्वद्दीर्घतरात्यन्तायता तया दृष्ट्या कटाक्षमालया यूनां मनो धयन्ती पिबन्ती । आकर्षयन्तीत्यर्थः । दोष्णोर्हस्तयोरान्दोलनं चालनं तेन लोलानां चञ्चलानां कङ्कणानां रणत्कारो ध्वनिविशेषस्तेनोत्तरमुत्कटं रम्यं यथा भवति तथा सर्पत्यागच्छति । विभ्रमतीत्यर्थः । 'अन्येभ्योऽपि दृश्यते' इति दीर्घः । अमरावतीवत्साधुः ॥ ३४ ॥ दलितकुचेति । दलितकुचनखाङ्कम् । क्रियाविशेषणम् । अङ्कपालीमालिङ्गनं रचयं कुरु । गाढालिङ्गनं कुर्वित्यर्थः ।

मिषं तस्माल्लीलयोत्क्षिप्तौ भुजौ यया सा । पुनः कीदृशी । उपदर्शितौ यौ कुचौ स्तनौ तत्रोन्मीलन्ती प्रकाशमाना नखाङ्कानां नखक्षतानामावलिः पङ्क्तिर्यस्याः सा । पुनः कीदृशी । नीलानि यानीन्दीवराणि नीलोत्पलानि तेषां दाम माला तद्वद्दीर्घतरया दृष्ट्या मनो धयन्ती पिबन्ती । प्रीणयन्तीति यावत् ॥ ३४ ॥ [विभ्रमावती—एष महाराजः । उपसर्पतु प्रियसखी ।] [मिथ्यादृष्टिः—जयतु जयतु महाराजः ।] दलितेति । भो पीवरोरु पीवरौ मांसलावूरू यस्यास्तत्संबोधनं भो पीवरोरु प्रिये, दलिताः प्रकटाः कुचयोर्नखाङ्काः स्तनयोर्नखक्षतानि यस्यां क्रियायां यथा स्यात्तथा । अङ्कपालीमालिङ्गनं रचय देहि । किं कृत्वा । ममाङ्कमुपेत्य भो हरिणाक्षि, शंकराङ्के शंकरोरौ स्थिता चासौ हिमशैलसुता च हिमपर्वतपुत्री तस्या विलासस्तस्य लक्ष्मीं शोभामनुहरानुकुरु । एतेनोमामहेश्वराविव निर्बाधमावाभ्यां स्थातव्यमिति ध्वनितम् ॥ ३५ ॥ सस्मितं सहासं तथा करोति । आलिङ्गनसुखमनुभवतीत्यर्थः । परिष्वङ्गा-

१ 'जेदु जेदु महालाओ' इति पाठः । २ 'नखदलितकुचाङ्कं' इति पाठः ।

यः प्रागासीदभिनववयोविभ्रमावाप्तजन्मा
चित्तोन्माथी विविधविषयोपप्लवानन्दसान्द्रः ।
वृत्तीरन्तस्तिरयति तवाश्लेषजन्मा स कोऽपि
प्रौढः प्रेमा नव इव पुनर्मान्मथो मे विकारः ॥ ३६ ॥

**मिथ्यादृष्टिः**—*महाराअ, अहंवि संपदं नवजोवणा संवुत्ता। ण खु भावाणुवन्धो प्पेमा कालेणावि विघडिअदि । आणवेदु महाराओ किंणिमित्तं भट्टिणा सुमरिदह्मि ।

**महामोहः**—प्रिये,

---

* महाराज, अहमपि सांप्रतं नवयौवना संवृत्ता । न खलु भावानुबन्धः प्रेमा कालेनापि विघटते । आज्ञापयतु महाराजः किंनिमित्तं भट्टारकेण स्मृतास्मि ।

---

अङ्कमुपेत्येत्यादि निदर्शनम् ॥ ३५ ॥ परावृत्तमिति भावे निष्ठाप्रत्ययः । यः प्रागासीदित्यादि । कोप्यननुभवैकवेद्यः प्रौढ उद्रिक्तो नव एव पुनर्मान्मथो मारजो विकारो वृत्तीर्बाह्याभ्यन्तरविषयगास्तिरयत्यन्तर्हिताः करोति ॥ ३६ ॥

---

दालिङ्गनात्परावृत्तं व्यतीय पुनरागतम् ॥—यः प्रागासीदिति । स कोऽप्यचिन्त्यसामर्थ्यः मान्मथो मन्मथात्कंदर्पाज्जातो विकारः परिणामो मे ममान्तर्वृत्तीर्मानसवृत्तीस्तिरयति तिरस्करोति । स कः । योऽभिनवं च तद्वयश्च नूतनं वयस्तस्य विभ्रमो विलासस्तस्मादवाप्तं जन्म येन तादृशः प्रागासीत्पूर्वं बभूव । मान्मथो विकारः कीदृशः । चित्तं मन उन्मश्नात्युन्मादयुक्तं करोति तच्छीलः । पुनः कीदृशः । विगतो विविधो विषयोपप्लवो विषयसंबन्धो यस्मिन्नेतादृशो य आनन्दस्तेन सान्द्रो घनः । पुनः कीदृशः । तवाश्लेष आलिङ्गनं तस्माज्जन्म यस्य सः । पुनः कीदृशः । प्रौढं प्रेमोत्कृष्टा प्रीतिर्यस्मिन्सः । पुनरिति वितर्के । नव इव न जातो न जनिष्यते तादृश इत्यर्थः ॥ ३६ ॥ [मिथ्यादृष्टिः—महाराज, अहमपि सांप्रतं नवयौवनेव संवृत्ता, न खलु भावानुबद्धं प्रेम कालेनापि विलीयते । आज्ञापयतु महाराजः । किंनिमित्तं भट्टारकेण स्मृतास्मि ।] भावो मनोभिप्रायस्तेना-

---

१ 'जोवणा विअ संवुत्ता । णं खु भावानुबद्धं प्रेम कालेणावि विलीअदि' इति पाठः ।

स्मर्यते सा हि वामोरु या भवेद्धृदयाद्बहिः ।
मच्चित्तभित्तौ भवती शालभञ्जीव राजते ॥ ३७ ॥

**मिथ्यादृष्टिः**—*महाप्पसादो[1] ।

**महामोहः**—यथैव प्रकाशितैरङ्गैः सर्वत्र विचरसि तथैव प्रवर्तितव्यम् । अन्यच्च दास्याः पुत्री श्रद्धा विवेकेन सहोपनिषदं संयोजयितुं कुट्टिनीभावं प्रतिपन्ना[2] । अतः—

प्रतिकूलामकुलजां पापां पापानुवर्तिनीम् ।
केशेष्वाकृष्य तां रण्डां पाषण्डेषु निवेशय ॥ ३८ ॥

**मिथ्यादृष्टिः**—†एद्दहमेत्तके वि विसए अलं भट्टिणो अहि-

---

* महान्प्रसादः ।
† एतावन्मात्रेऽपि विषये अलं भर्तुरभिनिवेशेन । वचनमात्रेणैव

---

**स्मर्यत इत्यादि** । सा हीत्यत्र हिः प्रसिद्धौ । हे वामोरु, वामौ ऊरू यस्याः । ऊरुशब्दादूङ् । सा हि स्मर्यते या हृदयाद्बहिः स्थिता भवती त्वं शालभञ्जीव लिखितप्रतिमेव राजते । भवच्छब्दयोगात्प्रथमः पुरुषः॥३७॥दास्याः पुत्रीति । 'षष्ठ्या आक्रोशे' इत्यनुकूलकुट्टिणी त्वं स्त्रीपुरुषसंयोगकारिणीत्युच्यते । **प्रतिकूलामित्यादि** स्पष्टम् ॥ ३८ ॥ मिथ्यादृष्टिर्नाम नास्तिकता । सा च शान्तिं श्रद्धां चोपनिषदः

---

नुबद्धं संपादितमिति प्राकृतार्थः —स्मर्यत इति । हे वामोरु सुन्दरोरु, हृदयाच्चित्ताद्बहिर्यो भवेद्वर्तेत स निश्चितं स्मर्यते । तव स्मरणमयुक्तमित्याह । भवती मम चित्तमेव भित्तिस्तस्यां शालभञ्जीव चित्रन्यस्तपुत्तलिकेव राजते शोभते । सर्वदा चित्ते सत्त्वान्न स्मरणमिति भावः ॥ ३७ ॥ [मिथ्यादृष्टिः—महाप्रसादः । तथाप्याज्ञापयतु महाराजः ।] दास्याः पुत्री कुट्टिनीति गालिप्रदानम् ॥ प्रतिकूलामिति । तां रण्डां नियामकशून्यां श्रद्धां पाखण्डेपु सद्धर्मशून्येपु केशेष्वाकृष्य नियोजय प्रवेशय । कीदृशीं रण्डाम् । प्रतिकूलामसदनुकूलकार्यकर्त्रीम् । पुनः कथंभूताम् । अकुलजां दुर्भगाप्रसूताम् । संप्रति मनोनिवृत्तावनुरागो नास्तीति दुर्भगा । पुनः कीदृशीम् । कुलक्षयप्रवृत्तत्वात्पापाम् । पुनः कीदृशीम् । पापाः शमादयः । कुलक्षयहेतुत्वादेव तेपामपि पापत्वम् । तदनुवर्तिनीं तदनुकूलाम् ॥ ३८ ॥ [मिथ्यादृष्टिः—एतावन्मात्रकेऽपि विषयेऽलं भर्तुरभिनिवेशेन, वचनमात्रकेणैव भर्तुर्दासी श्रद्धा

---

१ 'पसादो । तधावि आणवेदु महाराओ' इति पाठः । २ 'भावमापन्ना' इति पाठः ।

णिवेसेण । वअणमत्तकेण जेव्व भट्टिणो दासी सद्धा सव्वं अण्णां करिस्सदि । सा खु मए मित्था धम्मो, मित्था मोक्खो, मित्था वेअमग्गो, मित्था सुहविग्घअराइं, सात्थपलविदाइं, मित्था सग्गफलं ति भणिअन्ती वेअमग्गं जेव्व पलिहलिस्सदि, किं उण उवणिसहम् । अविअ । विसआणन्दविमुक्के मोक्खे दोसाणं दंसअन्तीए उवणिसदोवि विरत्ता कलिस्सदि अचिलं मए सद्धा ।

महाराजः—यद्येवं सुष्ठु मे[3] प्रियं संपादितं प्रियया । (पुनरालिङ्गय चुम्बति ।)

मिथ्यादृष्टिः—*भट्टिणोप्पआसे एव्वं प्पउत्तेण लज्जेमि ।

---

भर्तुर्दासी श्रद्धा सर्वामाज्ञां करिष्यति । सा खलु मया- मिथ्या धर्मो, मिथ्या मोक्षो, मिथ्या वेदमार्गो, मिथ्या सुखविघ्नकराणि शास्त्रप्रलपितानि, मिथ्या स्वर्गफलमिति भण्यमाना वेदमार्गमेव परिहरिष्यति, किं पुनरुपनिषदम् । अपिच । विषयानन्दविमुक्ते मोक्षे दोषान्दर्शयन्त्योपनिषदाऽपि विरक्ता करिष्यतेऽचिरं मया श्रद्धा ।

* भट्टारकस्य प्रकाशे एवं प्रवृत्तेन लज्जामि ।

---

सकाशादाकृष्य पाषण्डे निवेशयितुं क्षमा । अयमर्थः । ये नास्तिकास्ते पाषण्डास्तेषां सात्विकी श्रद्धा नास्ति । अपि तु राजसी तामसी च । अत एव श्रद्धायास्तत्र पाषण्डेषु प्रवेशनमुपपद्यते । शेषं सुगमम् । श्रद्धा त्रिविधा । सात्विकी राजसी तामसी चेत्याह श्रीभगवान्—'त्रिविधा भवति श्रद्धा देहिनां सा स्वभावजा । सात्त्विकी राजसी चैव तामसी चेति तां श्रृणु ॥ यजन्ते सात्विका देवान्यक्षरक्षांसि राजसाः।

---

आज्ञां करिष्यति । सा खलु मया मिथ्या धर्मो, मिथ्या मोक्षो, मिथ्या वेदमार्गो, मिथ्या सुखविघ्नकराणि शास्त्रप्रलपितानि, मिथ्या स्वर्गफलविधेति भण्यमाना झटिति वेदमार्गमेव परिहरिष्यति । किं पुनरुपनिषदम् । अपि च विषयानन्दविमुक्ते मोक्षे दोषान्दर्शयन्त्या उपनिषदोऽपि विरक्ता करिष्यतेऽचिरं मया श्रद्धा । [मिथ्यादृष्टिः—

---

१ 'सद्धा अण्णं' इति पाठः । २ 'सग्गफलविज्जेति भणिज्जन्ति झडिति वेदमग्गं' इति पाठः । ३ 'मे संपादितम्' इति पाठः । ४ 'पउत्तेण भट्टारएण' इति पाठः ।

**महामोहः**—तद्भवतु । स्वागारमेव प्रविशामः ।

(इति निष्क्रान्ताः सर्वे ।)

इति श्रीकृष्णमिश्रविरचिते प्रबोधचन्द्रोदयनाम्नि नाटके द्वितीयोऽङ्कः ॥ २ ॥

---

प्रेतान्भूतगणांश्चान्ये यजन्ते तामसा जनाः ॥ श्रद्धामयोऽयं पुरुषो यो यच्छ्रद्धः स एव सः ॥' श्रद्धानाम विश्वासः । निष्क्रान्ताः सर्वे ॥

इति श्रीमद्राजाधिराजपरमेश्वरश्रीवीरप्रतापश्रीकृष्णरायमहाराजसा-
म्राज्यधुरन्धरश्रीसाल्वतिम्मदण्डनायकभागिनेयनाण्डिल्लगो-
पमन्त्रिशेखरविरचितायां प्रबोधचन्द्रोदयव्याख्यायां
चन्द्रिकासमाख्यायां द्वितीयोऽङ्कः ॥ २ ॥

---

भर्तुः प्रकाशे एवं प्रवृत्तेन लज्जामि ।] वासागारम् । निवासगृहमित्यर्थः ॥

इति श्रीप्रबोधचन्द्रोदयव्याख्याने प्रकाशाख्ये द्वितीयोऽङ्कः समाप्तः ॥२॥

---

१. 'वासागारमेव' इति पाठः ।



## तृतीयोऽङ्कः ।

(ततः प्रविशति शान्तिः करुणा च ।)

शान्तिः—(सास्रम् ।) मातः मातः, क्वासि । देहि मे प्रियदर्शनम् । ततः—

मुक्तातङ्ककुरङ्गकाननभुवः शैलाः स्खलद्वारयः
पुण्यान्यायतनानि संततपोनिष्ठाश्च वैखानसाः ।
यस्याः प्रीतिरमीषु सात्रभवती चण्डालवेश्मोदरं
प्राप्ता गौः कपिलेव जीवति कथं पाषण्डहस्तं गता ॥ १ ॥

अथवालं जीवितसंभावनया । यतः—

---

**ततः प्रविशतीत्यादि** । शान्तेरुत्तमपात्रत्वात्संस्कृतभाषया कथनं नैजमेव । यद्वा नाटके परिभाषावशात्स्त्रीणां प्राकृतभाषयैव वक्तव्यम् । परिदेवनरूपकार्यायत्ता संस्कृतभाषापि भाषापर्याय इति विज्ञेयम् । अत्र स्वत एव पात्रप्रवेश इति ज्ञेयम् । तथा चोक्तम्—'प्रायोपवृत्तचित्तानां शोकापहतचेतसाम् । परैराधर्षितानां च स्वत एव प्रवेशनम् ॥' इति । मातः मातरिति दुःखे वीप्सा । क्वासीत्यादीनि प्रलापवचनानि ॥ **मुक्तातङ्केत्यादि** । मुक्तातङ्ककुरङ्गकाननभुवः मुक्तातङ्कास्त्यक्तभयाः कुरङ्गा यासु काननभूमिषु ताः । ऋषिवनानीत्यर्थः । वैखानसा ऋषयः । यस्या इत्यादि । परिदेवनवशात्परितो निर्दिश्योक्तिः । अन्यत्स्पष्टम्

---

द्वितीयेऽङ्के तत्तद्धर्मानुष्ठानवैफल्याय दम्भादीन्प्रेषयामास महामोहः । इदानीं तृतीयेऽङ्के विवेकसैन्यपराभवाय पाखण्डाडम्बरः ॥ सास्रमस्रैः सहितम् । प्रियदर्शनं प्रियमिष्टं दर्शनम् ॥—मुक्तातङ्केति । सात्रभवती पूज्या पाखण्डहस्तं गता वेदबाह्यकराक्रान्ता कथं जीवति । न कथमपीत्यर्थः । सा का । यस्या अमीषु वक्ष्यमाणेषु प्रीतिरस्तीत्यध्याहारः । अमी के तानाह—मुक्तातङ्केति । मुक्त आतङ्को भयं यैस्ते तादृशा ये कुरङ्गा मृगास्ते यासु तादृश्यः काननभुवो वनस्थल्यः । स्खलन्ति वारीणि जलानि येभ्यस्ते तादृशाः शैलाः । तथा पुण्यानि पवित्राण्यायतनानि देवतागृहाणि । संततमनवरतं तपोनिष्ठास्तपोनिरता वैखानसा वानप्रस्थाः । कथं जीवतीत्युक्तं तत्र दृष्टान्तमाह । चाण्डालस्य वेश्म मन्दिरं तस्योदरं मध्यं प्राप्ता कपिला गौरिव । यथा कपिला गौर्हन्तॄणां गृहमध्यं प्राप्ता कथमपि न जीवति तथा भवती पाखण्डहस्तं गता कथमपि न जीवतीत्यर्थः । कपिलेत्यनेन गवां कपिला गौर्यथोत्तमा एवं

मामनालोक्य न स्नाति न भुङ्क्ते न पिबत्यपः ।
न मया रहिता श्रद्धा मुहूर्तमपि जीवति ॥ २ ॥

तद्विना[1] श्रद्धया मुहूर्तमपि शान्तेर्जीवितं विडम्बनमेव । तत्सखि करुणे, मदर्थं चितामारचय । यावदचिरमेव हुताशनप्रवेशेन तस्याः सहचरी भवामि ।

**करुणा**—(सास्रम्) *सहि, एव्वं विसम[2]ज्जलणज्जालाउल्लकादुः-सहाइं अक्खराइं जप्पन्ती सव्वधा विलुत्तजीविदं मं करेसि । ता प्पसीददु मुहूत्तं जीविदं धारेदु पिअसही । जाव इदो तदो पुण्णेसु अःसमेसु मुणिअणसमाउलेसु भाईरहीतीरेसु णिउणं निरुवेह्मि कआवि महामोहमीदिआ कहमवि पच्छण्णा णिवसदि ।

---

* सखि, एवं विषमज्वलनज्वालोल्काढुःसहान्यक्षराणि जल्पन्ती सर्वथा विलुप्तजीवितां मां करोषि । तस्मात्प्रसीदतु मुहूर्तं जीवितं धारयतु प्रियसखी । यावदितस्ततः पुण्येष्वाश्रमेषु मुनिजनसमाकुलेषु भागीरथीतीरेषु निपुणं निरूपयामि कदाचिन्महामोहभीत्या कथमपि प्रच्छन्ना निवसति ।

---

॥ १ ॥ अलमिति । मृतेवं प्रतिभातीत्यर्थः । तदेव स्फोरयति—**मामनालोक्येति** । जीवनं विडम्बनमेवोपहासास्पदमेव ध्रुवम् । शेषं व्यक्तम् ॥ २ ॥

---

श्रद्धा शान्त्यादीनां मध्य उत्तमेति भावः ॥ १ ॥ —**मामनालोक्येति** । मामनालोक्यादृष्ट्वा स्नानभोजनजलपानानि न कुरुते । अत एव हेतोर्मया रहिता श्रद्धा क्षणमपि न जीवतीति शान्तेरुक्तिः । अनेन श्रद्धाशान्त्योर्व्याप्तिर्दर्शिता ॥ २ ॥ [**करुणा**—सखि, एवं विषमज्वलनज्वालाकुलकर्णकटुदुःसहान्यक्षराणि जल्पन्ती सर्वथा विलुप्तजीवितां मां करोषि । तत्प्रसीदतु मुहूर्तकं जीवितं धारयितुं प्रियसखी । यावदितस्ततः पुण्येष्वाश्रमेषु मुनिजनसमाकुलेषु भागीरथीतीरेषु निपुणं निरूपयामि कदाचिन्महामोहभीता कुत्रापि प्रच्छन्ना निवसति ।] विषमा अत्युग्रा ज्वलनस्याग्ने-

---

१ अत्र 'तद्विनेत्यारभ्य तत्सखि' इत्यन्तः पाठो लिखितपुस्तके नास्ति । २ 'विसमजलणजालाउलकण्णकडुदुःसहाइं—प्पसीददु मुहुत्तकं जीविदं धारेदुं—भागीरही—कहिंवि' इति पाठः ।

शान्तिः—सखि, किमन्विष्यते । अन्वेषितैव[1]—

नीवाराङ्कितसैकतानि सरितां कूलानि वैखानसै-
　राक्रान्तानि समिच्चषालचमसव्याप्ता गृहा यज्वनाम् ।
प्रत्येकं च निरूपिताः प्रतिपदं चत्वार एवाश्रमाः
　श्रद्धायाः क्वचिदप्यहो खलु मया वार्तापि नाकर्णिता ॥ ३ ॥

करुणा—*सहि, एव्वं भणामि । जइ सा जेव्व सत्तई सद्धा तदो ताए[2] ण एरिसीं दुग्गहिं संभावेमि । णं खु तारिसीओ पुण्णमयी सदीओ एतारिसीं असंभावणिज्जं विपत्तिं अणुहवन्दि ।

शान्तिः—सखि, किंनु[3] प्रतिकूले विधातरि न संभाव्यते ।

---

* सखि, एवं भणामि । यदि सैव सात्त्विकी श्रद्धा तदा तस्या नेदृशीं दुर्गतिं संभावयामि । न खलु तादृशः पुण्यमय्यः सत्य एतादृशी-मसंभावनीयां विपत्तिमनुभवन्ति ।

---

तत्सखीत्यारभ्य साश्रमित्यन्तं सुगमम् ॥—नीवाराङ्कितेत्यादि । ऋष्याश्रमाः देवयजनानि ब्रह्मचर्याश्रमादयः श्रद्धाया निवासभूमय इत्यर्थः । निरूपणं मार्गणम् ॥ ३ ॥ सती साध्वी । यदीति असंशये संशयोक्तिः ॥ सखि, किंन्विति त्यादि ।

---

ज्वालास्तासां कुलं समूहस्तद्वत्कर्णकटूनि । अत एव दुःसहानीत्येतदक्षरविशेषणमिति प्राकृतयोजना । —नीवारेति । हे सखि, मया क्वचिदपि कुत्रापि । अहो इत्याश्चर्ये । श्रद्धाया वार्तापि नाकर्णिता खलु निश्चयेन न श्रुता । क्व त्वयान्वेषितेत्यपे-क्षायामाह—नीवारेति । नीवाराङ्कितसैकतानि नीवारैररण्यशालिभिरङ्कितानि चिह्नितानि सैकतानि पुलिनानि येषां तानि । तथा वैखानसैर्वानप्रस्थैराक्रा-न्तानि सरितां नदीनां कूलानि तीराणि तान्यन्वेषितानि । पुनः यज्वनां या-ज्ञिकानां गृहाः प्रत्येकं समिधः, चषालो यूपकटकः, चमसाः पात्रविशेषास्तैर्व्याप्ता निरूपिता । दृष्टा इत्यर्थः । एवकारोऽप्यर्थे । चत्वारोऽप्याश्रमाः प्रतिपदं प्रति-स्थानं निरूपिता विलोकिताः ॥ ३ ॥ [करुणा—सखि, एवं भणामि । यदि सैव सात्त्विकी श्रद्धा तदा तस्या नेदृशीं दुर्गतिं संभावयामि । न खलु तादृश्यः पुण्य-मय्य एतादृशीमसंभावनीयां विपत्तिमनुभवन्ति ।] अदृष्टमनुकूलं नास्तीत्याह—

---

१ 'अन्वेषितैव' इति लिखितपुस्तकेऽधिकः पाठः । २ 'ताए एरिसीं' इति पाठः । ३ 'किमु' इति पाठः ।

तथाहि[1]—

श्रीदेवी[2] जनकात्मजा दशमुखस्यासीद्गृहे रक्षसो
नीता चैव रसातलं भगवती वेदत्रयी दानवैः ।
गन्धर्वस्य मदालसां च तनयां पातालकेतुश्छला-
द्दैत्येन्द्रोऽपजहार हन्त विषमा वामा विधेर्वृत्तयः ॥४॥

एवं[3] विधिविलसितमेतदिति संप्रधार्य । तद्भवतु । पाखण्डालये-ष्वेव तावदनुसरावः ।

करुणा—*सहि, एवं भोदु । (इति परिक्रामतः ।)

(अग्रतो[4] विलोक्य)

करुणा—(सत्रासम्) सहि, रक्खसो रक्खसो ।

शान्तिः—कोऽसौ राक्षसः ।

---

* सखि, एवं भवतु ।

† सखि, राक्षसो राक्षसः ।

---

सर्वैः संभाव्यत एवेत्यर्थः ॥—तथाहीत्यादि । श्रीदेवीति । श्रीदेवी सा लक्ष्मीः । अपजहारापहृतवान् । विषमा वामाः । अत्यन्तवक्रा इत्यर्थः । यद्वा विधेर्वृत्तयः स्वभावतो वामा वक्राः । दुष्कृतवशाद्विषमाः । अनुल्लङ्घ्या इत्यर्थः ।

---

सखीति । प्रतिकूले विधातरि सर्वमपि संभाव्यत एवेत्याह—देवी श्रीरिति । हन्त इति दुःखे । विधेर्दैवस्य वृत्तय आचरितरूपा वामा वक्राः । विषमाः सकललोकविलक्षणाः । देवी देवतारूपा श्रीः साक्षाल्लक्ष्मीर्जनकस्यात्मसाक्षात्कारवतः कन्यापि रक्षसो दशग्रीवस्य गृह आसीत् । भगवती सर्वानुष्ठानमूलभूता वेदत्रय्येव दानवैर्दैत्यै रसातलं पातालं नीता प्रापिता । चेत्यपरं गन्धर्वस्य मदालसां तनयां कन्यां पातालकेतुसंज्ञो दैत्येन्द्रश्छलान्मिपादपजहार स्वनिकटे नीतवान् , एवं श्रद्धायाः पाखण्डहस्तगमने दैवं मूलमिति भावः ॥ ४ ॥[करुणा—सखि एवं भवतु।] [करुणा—सखि राक्षसो

---

१ 'तथाहि' इति मुद्रितपुस्तके नास्ति । २ 'देवी श्रीर्जनकात्मजा' इति पाठः । ३ 'एवंविधेत्यतः संप्रधार्येत्यन्तं मुद्रितपुस्तके नास्ति । ४ 'अग्रतो विलोक्य' इति मुद्रितपुस्तके नास्ति ।

करुणा—*सहि, पेक्ख पेक्ख। जो एसो गलन्तमलपिच्छिल-वीहत्सदुप्पेक्खदेहच्छवी उल्लुंचिअचिउरमुक्कवसणदुद्दंसणो सिहि-सिहण्डपिच्छिआहत्थो इदो जेव्व अहिवट्टदि।[1]

शान्तिः—सखि, नायं राक्षसः। नीर्वीर्यः खल्वयम्।

करुणा—†ता को एसो भविस्सदि।

शान्तिः—सखि, पिशाच इति शङ्के।

करुणा—‡सहि, पप्फुरन्तमहामऊहमालोब्भासिअभुअणन्तरे जलदि प्पचण्डमात्तण्डमण्डले केहं[2] पिसाआणं अवआसो।

शान्तिः—तर्हि अनन्तरमेव नरकविवरादुत्तीर्णः कोऽपि नारकी

---

*सखि, पश्य पश्य। य एष गलन्मलपिच्छिलवीभत्सदुःप्रेक्ष्यदेहच्छविः उल्लुञ्चितचिकुरमुक्तवसनदुर्दर्शनः शिखिशिखण्डपिच्छिकाहस्त इत एवाभिवर्तते।

†तर्हि क एष भविष्यति।

‡सखि, प्रस्फुरन्महामयूखमालोद्भासितभुवनान्तरे ज्वलति प्रचण्डमार्तण्डमण्डले कथं पिशाचानामवकाशः।

---

॥ ४ ॥ राक्षस इत्यारभ्य दिगम्बरसिद्धान्त इत्यन्तेन प्रतिमुखसन्धेः प्रगमनं नाम सप्तममङ्गम्। तल्लक्षणं तु—'यथोत्तरं कृतां वाचं प्राहुः प्रगमनं बुधाः' इति॥

---

राक्षसः।] [करुणा—सखि, प्रेक्षस्व प्रेक्षस्व, य एष गलन्मलपङ्कपिच्छिलबीभत्सदुःप्रेक्षदेहच्छविरुल्लुञ्चितचिकुरमुक्तवसनदुर्दर्शनः शिखिशिखण्डपिच्छिकाहस्त इत एवाभिवर्तते।] गलन्मलपङ्कः स्रवद्विष्ठाकर्दमस्तेन पिच्छिला मसृणा वीभत्सा भयानका दुःप्रेक्ष्या द्रष्टुमशक्या देहच्छविः शरीरकान्तिर्यस्य। उल्लुञ्चिता उत्पाटिताश्चिकुराः केशा येन। मुक्तवसनो दिगम्बरः। [करुणा—तत् क एष भविष्यति।] निर्वीर्यो नपुंसकः। [करुणा—सखि, प्रस्फुरन्महामयूखमालोद्भासितभुवनान्तरे ज्वलति प्रचण्डमार्तण्डमण्डले कथं पिशाचानामवकाशः।] प्रस्फुरन्तो दीप्यमाना ये मयूखाः किरणास्तेषां मालाभिः परम्पराभिरुद्भासितं प्रकाशितं यद्भुवनान्तरालं भुवनमध्यप्रदेशस्तस्मिन्मार्तण्डमण्डले सूर्यमण्डले। तर्ह्यनन्तरमेव। इदानीमेवेत्यर्थः। नरक-

---

१ 'मलपङ्कपिच्छिल—अहिवट्टइ' इति पाठः। २ 'कथं' इति पाठः।

भविष्यति । (विलोक्य विचिन्त्य च) आः, ज्ञातम् । महामोहप्रवर्तितोऽयं दिगम्बरसिद्धान्तः । तत्सर्वथा दूरे परिहरणीयमस्य दर्शनम् । (इति पराङ्मुखीभवति ।)

करुणा—*सहि, मुहूत्तकं चिट्ठ । जाव एत्थ सद्धां अण्णेसामि ।

(उभे तथा स्थिते ।)

(ततः प्रविशति यथानिर्दिष्टो दिगम्बरसिद्धान्तः ।)

दिगम्बरः—†[1]ॐ णमो अलिहन्ताणम् । णवद्दुवालग्घलमज्झे अप्पा दीवेव्व जलदि । एसो जिणवलभासिदो पलमत्थो

---

* सखि, मुहूर्तकं तिष्ठ । यावदत्र श्रद्धामन्वेषयामि ।

† ॐ नमोऽर्हद्भ्यः । नवद्वारपुरीमध्ये आत्मा दीप इव ज्वलति ।

---

ॐ णमो इत्यादि मागधीभाषा । प्रक्रिया तु पूर्वमेवोक्ता । दिगम्बरसिद्धान्तेऽङ्गुष्ठपरिमाण एवात्मा हृत्पुण्डरीककोशमध्ये दीपवज्ज्वलतीति गृहाभ्यन्तरदीपप्रभावदङ्गुष्ठमात्रस्यैव पुरुषस्य सर्वदेहव्याप्तेः सुखदुःभोगाय भवतीति । अयमर्थः । सर्वो हि जनोऽहमिति प्रत्ययं हस्तेन हृदये परिमिनोति परिमाणतया दर्शयति । यस्तु विभुत्वेनात्मानं वदति तेनाप्ययं प्रत्ययो न बाध्यत इति कदाचिदप्यस्य बाधाभावात्प्रामाण्यमिति विज्ञेयम् । तस्मात्परिच्छिन्नपरिमाण आत्मास एवानादिवासनादिभिः सुखदुःखभोगार्थं शरीरे निक्षिप्य बध्यते । तन्निवृत्तिश्च भगवतार्हता दर्शितैर्धर्मैः केशोल्लुञ्चनतप्तशिलारोहणादिभिर्जायते । तथा च दिगम्बरश्रुतिः—'पञ्जरस्थः शुको यद्वद्विमुक्तो बन्धनाद्व्रजेत् । त्वरितं तद्वदे-

---

विवरान्नरककुण्डादुत्तीर्णो निर्गतः ।—आः ज्ञातमिति । महामोहप्रवर्तितो महामोहप्रेषितः । [करुणा—सखि, मुहूर्तकं तिष्ठ । यावदत्र श्रद्धामन्वेषयामि ।] यथानिर्दिष्टो य एष इत्यादिना पूर्वमुक्तो दिगम्बरः । अस्य भाषा मागधी । भिक्षुक्षपणकराक्षसान्तःपुरवासिचेटकादीनां मागधीत्युक्तमन्यत्र । [दिगम्बरः—नमो नमोऽर्हद्भ्योऽर्हद्भ्यः । नवद्वारगृहमध्ये आत्मा दीप इव मन्तव्यः । एष जिनवरभाषितः परमार्थो मोक्ष-

---

१ 'णमो णमो अलिहन्ताणं अलिहन्ताणं—अप्पा दीवव्व मन्तव्वो ।—जिणवलभासिदे पलमत्थे मोक्खसुखदे । (आकाशे) लेले सावका, सुणाध सुणाध–लिसिपलिच्चलणेहि' इति पाठः ।

जं मोक्खसुखदो (इति परिक्रामति)। (आकाशे) अलेले सावका, सुणुद्धं—

मलमअपुग्गलपिण्डे सअलजलेहिं वि केरिसी सुद्धी।
अप्पा विमलसहाओ रुसिपलिचलणेहिं जाणव्वो ॥ ५ ॥

---

एष जिनवरभाषितः परमार्थोऽयं मोक्षसुखदः । अरेरे श्रावकाः, शृणुध्वम्—

मलमयपुद्गलपिण्डे सकलजलैरपि कीदृशी शुद्धिः।
आत्मा विमलस्वभावः ऋषिपरिचरणैर्ज्ञातव्यः ॥

---

वात्मा विमुक्तश्चोर्ध्वगो भवेत् ॥' इति परिक्रामति। **आकाश इति**। आकाशे कर्णं दत्त्वेति शेषः । 'अप्रविष्टैः सहालापात्स एवाकाशभाषितः । एष प्रयोज्य आकाशे लक्ष्यं बद्ध्वेत्यनन्तरम् ॥ किमात्थेति वचोऽनूद्य पश्चात्कार्यं तदुत्तरम्॥' पूर्वमाकाशे लक्ष्यं बद्ध्वेत्युक्त्वानन्तरमाकाशभाषितं प्रयोज्यम् । पूर्वं किमात्थेत्युक्त्वा पश्चात्तस्य प्रविष्टपात्रस्य वचसोऽनुवादं कृत्वा तस्योत्तरं दातव्यम्। अत्राकाशभाषितं नामोपसन्धिः । 'प्रश्नो दूतश्च लेख्यं च नेपथ्योक्तिस्तथैव च । आकाशभाषणं चेति विज्ञेयाः पञ्च सन्धयः ॥' इति ॥—**मलमयेति**। पुद्गलपिण्डे परमाणुपुञ्जरूपे शरीरे । इयं ध्रुवा चान्तरी नाम । तथोक्तं वसन्तराजीये—'सूचने पात्रभेदानां तत्स्वभावार्थसूचनी । या गीतिः सा ध्रुवा तुल्यसंविधानविशेषणे ॥ प्रावेशिक्याक्षेपिकी च तथा प्रासादिकीति च । नैष्क्रामिक्यान्तरी चेति तासां लक्षणमुच्यते ॥ प्रवेशसूचकादौ तु ध्रुवा प्रावेशिकी मता । प्रसङ्गमध्येऽन्यार्थस्याक्षेपादाक्षेपिकी मता ॥ प्रासादिकी तु पात्राणां व्याकुलानां प्रसादनात् । निष्क्रामसूचिका यान्ते ध्रुवा नैष्क्रामिकी भवेत् ॥ विषादे विस्मृतौ क्रोधे प्रमादे संभ्रमे मदे । दोषप्रच्छादनादौ च गीयते या तु सान्तरी॥' इति । अत्र दोषप्रच्छादनार्थत्वादान्तरी

---

सुखदः । रे रे श्रावकाः, शृणुत शृणुत—मलमयपुद्गलपिण्डे सकलजलैरपि कीदृशी शुद्धिः । आत्मा विमलस्वभावः ऋषिपरिचरणैर्ज्ञातव्यः ॥५॥ श्रावकाः शिष्याः । पुद्गलं शरीरम् । 'पुद्गलं वपुरात्मनः' इति धरणिः । तस्य श्लेष्ममूत्रादिपूर्णत्वात्कथमपि न शुद्धिरिति भावः । परिचरणैः सेवनैः । अयमभिप्रायः । आत्मा दीप इवेत्युक्तं तत्रायमात्मा परिच्छिन्नपरिमाणः । गृहमध्ये इत्युक्तत्वात् । यथा दीपो घटगृहप्रासादोदरप्रकाशकः परिमितप्रकाशकत्वात् एवमयमात्मा शरीरान्तःप्रकाशकत्वात्ततोऽपि स्वल्पपरिमाण इति । उक्तं च जिनैः । स्वल्प आत्मा । स्वल्पपरिमाण इत्यर्थः ।

किं भंणत्थ केलिसं लिसिपरिचलणं ति । ता सुणुध—

दूले चलणपणामो, किदसक्कालं च भोअणं मिट्ठम् ।

इस्सामलं ण कज्जं, लिसिणं दालाणं लमन्ताणम् ॥ ६ ॥

(नेपथ्याभिमुखमवलोक्य) सद्धे, इदो दाव । (उभे सभयमालोकयतः ।)

(ततः प्रविशति तदनुरूपवेषा श्रद्धा ।)

श्रद्धा—*किं आणवेदि लाउलम् । (शान्तिर्मूर्च्छिता पतति ।)

दिगम्बरसिद्धान्तः—†सावकाणां कुलं मुहूत्तमेकं वि मा पैलिहलिस्सदि भवदी ।

श्रद्धा—‡जं आणवेदि लाउलम् । (इति निष्क्रान्ता ।)

---

किं भणथ कीदृशमृषिपरिचरणमिति । तच्छृणुध्वम्—

दूरे चरणप्रणामः कृतसत्कारं च भोजनं मिष्टम् ।

ईर्ष्यामलं न कार्यं ऋषीणां दारान्रममाणानाम् ॥

श्रद्धे, इतस्तावत् ।

* किमाज्ञापयति राजकुलम् ।

† श्रावकाणां कुटुम्बं मुहूर्तमात्रमपि मा परिहरिष्यति भवती ।

‡ यदाज्ञापयति राजकुलम् ।

---

ध्रुवा ॥ ५ ॥ किं भणत्थेत्यत्र किंशब्दः प्रश्ने । कीदृशमृषिपरिचरणमिति तच्छृणुध्वम् । उत्तरमाह—दूले चलणमिति । रममाणानामनुभुञ्जानानां सतामित्यर्थः । इयं पैशाची भाषा । 'नोणणोः पैशाच्याम्' इति सूत्रेण नकारस्य णकारादेशो भवति । शेषं मागधीवत् । तल्लक्षणमुक्तं प्रागेव ॥ ६ ॥ ततः प्रविशतीत्यादि ।

---

किं भणथ कीदृशमृषिपरिचरणमिति तच्छृणुत—दूरे चरणप्रणामः कृतसत्कारं च भोजनं मिष्टम् । ईर्ष्यामलं न कार्यमृषीणां दारान्रममाणानाम् ॥ ६ ॥ [ श्रद्धे, इतस्तावत् ।] आकाङ्क्षां स्वयमेवोत्थाप्याह—किं भणत्थेति । उभे शान्तिकरुणे । भवतीति शेषः ॥ ६ ॥ [श्रद्धा—किमाज्ञापयति राजकुलम् ।] [दिगम्बरः—श्रावकाणां कुलं मुहूर्तमपि मा परिहरिष्यति ।] [श्रद्धा—यदाज्ञापयति राजकुलम् ।]

---

१ 'किं भणाध—ता सुधाण' इति पाठौ । २ 'दालं' इति पाठः । ३ 'पलिहलिस्सदि' इति पाठः । ४ 'लाअउलं' इति पाठः ।

**करुणा**—*समस्ससदु पिअसही। णं खु णाममेत्तकेण पियसहीए भेदव्वं। जदो सुदं मए हिंसासआसादो जं अत्थि पासण्डाणं वि तमसः सुदा सद्धेति। तेण एसा तामसी सद्धा भविस्सदि।

**शान्तिः**—(समाश्वस्य) सखि, एवमेवैतत्। तथाहि—

दुराचारा सदाचारां दुर्दर्शा प्रियदर्शनाम्।
अम्बामनुसरत्येषा दुराशा न कथंचन॥ ७॥

तद्भवतु तावत्। सौगतालयेष्वप्यसावन्विष्यताम्।

(शान्तिकरुणे परिक्रामतः।)

---

* समाश्वसितु प्रियसखी। न खलु नाममात्रेण प्रियसख्या भेतव्यम्। यतः श्रुतं मया हिंसासकाशाद्यदस्ति पाषण्डानामपि तमसः सुता श्रद्धेति। तेनैषा तामसी श्रद्धा भविष्यति।

---

सहसैवार्थसंपत्त्या प्रवेशः। **नाममात्रेणेति** । नामसाम्यश्रवणमात्रेणेत्यर्थः। समाश्वस्य मूर्च्छातः प्रतिबुध्य।—**एवमेवैतदिति**। एतत्करुणोक्तमेव निश्चितमेव। तदाह—**तथाहीत्यादि**। **दुराचारेति**। दुष्ट आचारो यस्याः सा दुराचारा। पापाचारेत्यर्थः। सन् प्रशस्त आचारो यस्याः सा ताम्। 'सन् प्रशस्ते विद्यमाने सत्याभ्यर्हितसाधुषु' इत्यमरः। दुर्दर्शा दुःप्रेक्ष्या। भयंकरीत्यर्थः। प्रियं शोभनं दर्शनं प्रेक्षणं यस्याः सा ताम्। शान्तामित्यर्थः। अम्बां सात्त्विकीं श्रद्धाम्। एषा तामसी श्रद्धानुसरत्यनुकरोति। रूपनामभ्यामेव साम्यं भजते न गुणैः। अतश्च दुराशा न कथंचनाम्बामनुतिष्ठतीति॥ ७॥ अम्बा सर्वथा नास्त्येव तथापि यावत्सामर्थ्यं मार्गितव्येत्याह। तद्भवतु। तदपि

---

[करुणा—समाश्वसितु प्रियसखी। न खलु नाममात्रेणापि प्रियसख्या भेतव्यम्। यतः श्रुतं मया हिंसासकाशात् यदस्ति पाखण्डानामपि तमसः सुता श्रद्धेति। तेनैषा तामसी श्रद्धा भविष्यति।] **दुराचारेति**। कीदृशी एषा। दुःखद आचारो यस्याः सा। कीदृशीमम्बाम्। सन् आचारो यस्याः सा ताम्। पुनः कथंभूता। दुःखदः दर्शो दर्शनं यस्याः सा। प्रिये आत्मनि दर्शनं यस्यास्तामित्यम्बाविशेषणम्। अम्बेवाम्बा मातेव हितकारिणी तामेषा दुराशा कथंचन कथमपि नानुसरति। अतिवि-

---

१ 'मत्तकेणावि— अहिंसा—पाहण्डाणं—तमस्स—हुविस्सदि' इति पाठः।

(ततः प्रविशति भिक्षुरूपः पुस्तकहस्तो बुद्धागमः।)

**भिक्षुः**—(विचिन्त्य) भो भो उपासकाः,

सर्वे क्षणक्षयिण एव निरात्मकाश्च
यत्रार्पिता बहिरिव प्रतिभान्ति भावाः।
सैवाधुना विगलिताखिलवासनत्वा-
द्धीसन्ततिः स्फुरति निर्विषयोपरागा ॥ ८ ॥

(परिक्रम्य पुनः सश्लाघम्।) अहो, साधुरयं सौगतधर्मो यत्र सौख्यं मोक्षश्च। तथाहि—

---

भवत्वित्यर्थः। सौगतेषु बौद्धेषु ॥ ततः प्रविशतीत्यादि सहसैवार्थसंपत्त्या प्रवेशः। स्वकीयमतनिरूपणपूर्वकस्वमतिसिद्धां मुक्तिमाह—सर्वे इत्यादि। सर्वे भावाः क्षणक्षयिणः क्षणभङ्गुराः निरात्मका असन्त एव। प्रतिभासमानशरीरा इत्यर्थः। तत्कथं तेषां विषयत्वेन प्रतिभानं तत्राह—यत्रार्पिता इति। यत्र संविदि अर्पिता आरोपिताः। तदुक्तं धर्मकीर्तिना—'स्वाभाविकमेव संविदः स्वप्रकाशत्वं विषयास्तत्र विष्वक्प्रकाशन्त' इति। भाव्यन्ते संविदा स्वाभिन्नत्वेनेति भावा नीलादयो बहिरिव बाह्या इत्यर्थः। सैव धीसन्ततिरधुनेदानीं विगलिताखिलवासनत्वाद्विनष्टाखिलविषयसन्ततित्वात्। अत एव निर्विषयोपरागा विषयोपरक्तिशून्या धीसन्ततिः सन्तन्यमाना धीः स्फुरति। स्वेनैव प्रकाशत

---

लक्षणविशेषवेषत्वादिति भावः ॥ ७ ॥ सौगतेषु बौद्धविशेषेषु। बुद्धागमो बुद्धशास्त्राभिमानिदेवतारूपः। उपासका नास्तिकदर्शनविचारनिरताः।—साक्षादिति। सैव धीसन्ततिः। अधुना इदानीं निर्गतो विषयोपरागो विषयसंबन्धो यस्याः। नीलपीताद्यनेकविधविषयोपप्लवशून्या स्फुरत्यनुपहता प्रकाशते। अत एवाहं सर्वज्ञोऽस्मीति मन्तव्यम्। कस्मात्। विगलिताखिलवासनत्वाद्विशेषेण गलिता नष्टा अखिलाः समस्ता वासनाः संस्कारास्तेषां भावस्तत्त्वं तस्मात् संसारकारणीभूतवासनोच्छेदाद्विज्ञानसन्ततिः समुल्लसतीत्यर्थः। सा का। यत्र यस्यां धीसन्ततावर्पिताः संपादिता भावा घटादयो विषयाः बुद्धौ कल्पितत्वादन्तर्वर्तिनोऽपि बहिरिव बाह्या इव प्रतिभान्त्यभिज्ञायन्ते। भ्रान्त्येत्यर्थः। साक्षान्निःसंदिग्धं। क्षणक्षयिणः स्वेतरकालनाशिनः। न केवलं क्षणिकाः। निरात्मकाश्च निरस्त आत्मा स्थितिर्येषां ते। इदं विशेषणद्वयं भावानामेव। अयमेव प्रामाणिको मार्गो भवद्भिरप्यनुसर्तव्य इति तात्पर्यम् ॥ ८ ॥ यस्मिन्सौ-

---

१ 'साक्षात्क्षणक्षयिण' इति पाठः।

आवासो लयनं मनोहरमभिप्रायानुरूपा वणिङ्-[1]
नार्यो वाञ्छितकालमिष्टमशनं शय्या मृदुप्रस्तराः ।
श्रद्धापूर्वमुपासिता युवतिभिः क्लृप्ताङ्गदानोत्सव-[2]
क्रीडानन्दभरैर्व्रजन्ति विलसज्ज्योत्स्नोज्ज्वला रात्रयः ॥९॥

करुणा—*सहि, को एसो तरुणतालतलुप्पलम्बो लम्बन्त-

---

* सखि क एष तरुणतालतरुप्रलम्बो लम्बमानकषायपिशङ्ग-

---

इत्यर्थः ॥ ८ ॥ बौद्धपक्षे जीवन्मुक्तिरेतादृशीत्युक्तं भवति । **आवासो लय-नमिति** । लयनं भूगृहारोपगृहं कुट्टिमगृहं मनोहरं मनःप्रीतिकरम् । विभक्तिव्यत्ययेन क्लृप्तमित्यर्थः । अभिप्रायस्याशयस्यानुरूपा अनुकूला यथेच्छव्यवहारानुकूला वणिङ्नार्यः श्रेणीवध्वः क्लृप्ता इत्यन्वयः । वाञ्छितकालं यथाक्षुदिष्टमशनं मिष्टान्नं क्लृप्तम् । शय्या मृदवः प्रस्तराः प्रच्छदपटा यासां ताः । श्रद्धापूर्वमिति । अत्र श्रद्धा नाम शाक्यमुनिमतविश्वासः । क्रियाविशेषणमेतत् । श्रद्धाप्रधानं यथा भवति तथा युवतिभिरारूढयौवनाभिरुपासनासाधनभूताभिरुपासना बुद्धदेवस्य सेवा तत्कर्तृका वा क्लृप्ता सिद्धा । अतश्च अङ्गदानोत्सव आलिङ्गनादिकं स एव क्रीडा तस्यामानन्दभरास्तैः करणभूतैर्ज्योत्स्नोज्ज्वला रात्रयो व्रजन्ति गच्छन्ति । अत्र बौद्धमते बौद्धपरिव्राजकलिङ्गपूजां स्वपत्यनुमत्यैव कुर्वन्ति ते परिव्राजकास्तेषां मन्मथछत्राणि पूजयन्तीति तदागमक्रमः ॥ ९ ॥ तरुणतालवन्नवीनतालवृक्षवत्प्रलम्बः प्रांशुर्लम्बमानः कषायेण रञ्जकद्रव्यविशेषेण

---

गतधर्मे ।—**आवास इति** । मनोहरमतिसुन्दरं लयनं गृहमावासो निवासस्थानम् । अस्तीत्यध्याहारः । न तु क्लेशावहा गुहाः । अभिप्रायानुरूपा अभिलषितवेषानुकूला वणिग्भार्या वारविलासिन्यः सन्ति । न तु सवर्णा विवाहिताः । वाञ्छितकालमभिलषितसमयमिष्टमशनं भोजनमस्ति । न तु आह्निकानन्तरकाल एव । मृदुप्रस्तराः कोमलास्तरणयुक्ताः शय्याः सन्ति । न कन्थादि । विलसन्ती प्रकाशमाना ज्योत्स्ना चन्द्रप्रभा तयोज्ज्वलाः शोभमाना रात्रयः । क्लृप्तः कृतोऽङ्गरागोऽङ्गे कुङ्कुमचन्दनादिलेपो यस्मिन्नेतादृशो य उत्सवः काममहोत्सवः सुरतादिरूपः सैव क्रीडा तस्यामानन्दभराः सुखसमूहास्तैर्व्रजन्ति । सुखेन गच्छन्तीत्यर्थः । कीदृश्यो रात्रयः । युवतिभिस्तरुणीभिः श्रद्धापूर्वमादरपूर्वमुपासिताः सेविताः । अनेनास्माकं भुक्तिमुक्ती सुखसाध्येऽन्येपामतिक्लेशसाध्ये इति भावः ॥९॥ [करुणा—सखि, क एष

---

१ 'वणिग्भार्याः' इति पाठः । २ 'क्लृप्ताङ्गरागोत्सव' इति पाठः ।

कसाअपिसङ्गचिउरो मुण्डिदसचूडमुण्डपिण्डो इदो जेव्व आअच्छदि।

**शान्तिः**—सखि, बुद्धागम एषः।

**भिक्षुः**—(आकाशे) भो भो उपासकाः भिक्षवश्च, श्रूयतां भगवतः सुगतस्य वाक्यामृतम्। (पुस्तकं वाचयति) पश्याम्यहं दिव्येन चक्षुषा लोकानां सुगतिं दुर्गतिं च। क्षणिकाः सर्वे संस्काराः। नास्त्यात्मा स्थायी। तस्माद्भिक्षुषु दारानाक्रमत्सु नेर्षितव्यम्। चित्तमलं हि तद्यदीर्ष्यानाम। (नेपथ्याभिमुखमवलोक्य।) श्रद्धे, इतस्तावत्।

(प्रविश्य श्रद्धा।)

**श्रद्धा**—*आणवेदु लाउलम्।

**भिक्षुः**—उपासकान्भिक्षूंश्च चिरमालिङ्ग्य स्थीयताम्।

---

चिकुरो मुण्डितसचूडमुण्डपिण्ड इत एवागच्छति।

*आज्ञापयतु राजकुलम्।

---

पिशङ्गाः पिङ्गलवर्णाश्चिकुराः कुन्तला यस्य सः। शिरसि चूर्णकुन्तलान्वलयाकारेण स्थापयित्वा मध्यप्रदेशं सर्वं वापितवानित्यर्थः। तादृशी दीक्षा तेषामिति प्रसिद्धिः। मुण्डितकेश इत्यादि। उपासकाः। उपासकशब्दो वेदबाह्यानां तच्छिष्यवाचकः। सौगतस्वरूपमाह—**पश्याम्यहमिति**। अत्र यदुच्यते तत्रानुमानेनाप्यागमेनापि प्रत्यक्षेण दृष्ट्वैवोच्यत इत्यर्थः। **क्षणिका इत्यादि**। सर्वे भावा इति शेषः। भावान्तर्गतत्वादात्मनोऽपि क्षणिकत्वमित्याह—**नात्मा स्थायीति**। देहानां च प्रतिक्षणं विद्यमानत्वात्स्वस्वामिभावसंबन्धो गलितः। अतो भ्रान्त्या नेर्षितव्यम्। इतोऽपि ईर्ष्या न संपादनीयेत्याह—**चित्तेत्यादि**। चित्तमलं हीर्ष्या। अतस्त्याज्या। समं ज्ञानसंततेः संसारत्वादिति भावः॥

---

तरुणतालतरुप्रलम्बो लम्बत्कषायपिशङ्गचीवरो मुण्डितसचूडमुण्डपिण्ड इत एवागच्छति।] तरुणः प्रगल्भश्चासौ तालतरुश्च तद्वत्प्रलम्ब उच्चः। लम्बल्लम्बायमानं कषायं सगन्धं पिशङ्गं रक्तं चीवरं वस्त्रं यस्य। मुण्डितः सचूडः सशिखो मुण्डरूपपिण्डो यस्य। संस्क्रियन्ते विषयीक्रियन्ते ते संस्काराः। भावा इत्यर्थः। स्थायी परलोकभोक्ता। नेर्षितव्यमिति। सर्वस्य क्षणिकत्वाद्द्वेष्येर्ष्ययोः परस्परासंसर्गादिति भावः। [श्रद्धा—आज्ञापयतु राजकुलम्।] [श्रद्धा—यदाज्ञापयति राजकुलम्।] [क-

---

१ 'पिसङ्गचीवलो' इति पाठः। २ 'पश्याम्यहं भिक्षवो दिव्येन' इति पाठः। ३ 'संस्क्रियन्ते क्षणिकाः' इति पाठः। ४ 'लाअउलं' इति पाठः।

श्रद्धा—*जं आणवेदि लाउलम् । (इति निष्क्रान्ता ।)

शान्तिः—सखि, इयमपि तामसी श्रद्धा ।

करुणा—† एवं णेदम् ।

क्षपणकः—(भिक्षुमालोक्योच्चैःशब्दम् ।) ‡अलेले भिक्खुअ, इदो दाव । किंपि पुच्छिस्सम् ।

भिक्षुः—(सक्रोधम् ।) आः पाप पिशाचाकृते, किमेवं प्रलपसि ।

क्षपणकः—§अले, मुञ्च कोहम् । सत्थगदं पुच्छामि ।

भिक्षुः—अरे क्षपणक, शास्त्रकथामपि वेत्सि । भवतु । प्रतीक्षामस्तावत् । (उपसृत्य) किं पृच्छसि ।

क्षपणकः—¶भण दाव क्खणविणासिणा तुए कस्स [3]किदे एदं व्वदं धालीअदि ।

भिक्षुः—अरे श्रूयताम् । अस्मत्संततिपतितः कश्चिद्विज्ञानलक्षणः समुच्छिन्नवासनो मोक्ष्यते ।

---

* यदाज्ञापयति राजकुलम् ।

† एवमेतत् ।

‡ अरेरे भिक्षुक, इतस्तावत् । किमपि पृच्छामि ।

§ अरे, मुञ्च क्रोधम् । शास्त्रगतं पृच्छामि ।

¶ भण तावत्क्षणविनाशिना त्वया कस्य कृते इदं व्रतं धार्यते ।

---

उपासकान्भिक्षूंश्च निर्भरमालिङ्ग्य स्थीयतामित्यनेन तामसीश्रद्धावशादेवोपासकाः कलत्रदानं भिक्षुभ्यः कुर्वन्तीति ध्वनिः । उच्चैःशब्दः क्रियाविशेषणम् । अरेरे भिक्षुक, इतस्तावदित्यादि । आगच्छेति शेषः । अलेले इत्यादि । वेत्सि जानासीत्यत्र काकुः । भण तावत्क्षणेत्यादि । इदं व्रतं धार्यते । अन्यो व्रती अन्यो मुच्यते । अतश्च व्रतिनो मुक्तिर्न स्यादिति भावः । उत्तरमाह—भिक्षुरिति । अस्मत्संततीत्यादि । व्रती मुच्यमानयोरेकसंतत्यारूढत्वाद्व्रतमोक्षयोर्न व्यधिकरणत्वमिति

---

रुणा—एवमेतत् ।] [क्षपणकः—अरे रे भिक्षुक, इतस्तावत् । किमपि पृच्छामि ।] क्षप—अरे, मुञ्च क्रोधं । शास्त्रगतं किमपि पृच्छामि ।] [क्षप—भण तावत्क्षणवि-

---

१ 'किंवि' इति पाठः । २ 'सत्थगदं' इति पाठः । ३ 'किदे वदं' इति पाठः ।

क्षपणकः—*अले मुलुक्ख, कस्सिंवि मण्णन्तले कोवि मुक्को भविस्सदि । तदो दे संपदं णट्ठस्स कीरिसं उवआलं कलिस्सदि । अण्णं च पुच्छामि । केण दे ईरिसो धम्मो उवदिट्ठो ।

भिक्षुः—नूनं सर्वज्ञेन भगवता बुद्धेनोक्तोऽयमेव धर्मः ।

क्षपणकः—†अले, सव्वण्णो बुद्धोत्थि त्ति कधं तुए णादम् ।

भिक्षुः—ननु रे, तदागमैरेव प्रसिद्धो बुद्धः सर्वज्ञ इति ।

क्षपणकः—‡अले, उज्झिअबुद्धअ, जयि तस्स भासिदेण सव्वण्णत्तं पडिवज्जेसि ता अहं वि सव्वं जाणामि । तुमंपि पिदुपिदामहेहिं सद्धं सत्तपुलिसं अह्माणं दासो त्ति ।

---

* अरे मूर्ख, कस्मिन्नपि मन्वन्तरे कोऽपि मुक्तो भविष्यति । ततस्ते सांप्रतं नष्टस्य कीदृशमुपकारं करिष्यति । अन्यच्च पृच्छामि । केन ते ईदृशो धर्म उपदिष्टः ।

† अरे, सर्वज्ञो बुद्ध इति कथं त्वया ज्ञातम् ।

‡ अरे उज्झितबुद्धक, यदि तस्य भाषितेन सर्वज्ञत्वं प्रतिपन्नोऽसि तदहमपि सर्वं जानामि । त्वमपि पितृपितामहैः सह सप्तपुरुषमस्माकं दास इति ।

---

भावः । मुच्यमानक्षणे इति शेषः । मन्वन्तरे कालान्तरे कीदृशमित्याक्षेपः ।

---

नाशिना त्वया कस्य कृते व्रतं धार्यते ।] [क्षप—अरे मूर्ख, यदि कस्मिन्नपि मन्वन्तरे कोऽपि मुक्तो भविष्यति, तदा ते सांप्रतं प्रनष्टस्य कृते कीदृशमुपकारं करिष्यति। अन्यच्च पृच्छामि । केनेदृशो धर्मं उपदिष्टः ।] [क्षप— अरे, सर्वज्ञो बुद्धोऽस्तीति त्वया कथं ज्ञातम् ।] [क्षप—अरे, ऋजुबुद्धे । यदि तस्य भाषितेन सर्वज्ञत्वं प्रतिपद्यसे, तदहमपि सर्वं जानामि, त्वमपि पितृपितामहैः सार्धं सप्तपुरुषैः सह दास इति । क्षपणको दिगम्बरसिद्धान्तः । फलकाले त्वदीयस्थितेरसत्त्वान्मुधा प्रयास इति भावः ।—असत्संतताविति । अस्मत्सन्ततावसद्विज्ञानपरंपरायां पतितः प्रविष्टः कश्चिद्विज्ञानलक्षणः प्रवृत्तिविज्ञानसंतानान्तःपाती संसारी मोक्ष्यते मुक्तो भविष्यति ।

---

१ 'अले मुक्ख, जइप्पणट्ठस्स किदे केलिस—केण ईलिसे धम्मे उवदिट्ठे' इति पाठः । २ 'ननु' इति पाठः । ३ 'उज्जुअबुद्धिआ जइ—तुमं वि पिदुपिदामहेहिं सद्धं सत्तपुलिसेहिं दासे त्ति' इति पाठः ।

भिक्षुः—(सक्रोधम्) आः पाप, पिशाच मलपङ्कधर, कस्तवाहं दासः ।

क्षपणकः—*अले विहालदासीभुअङ्ग दुट्ठपलिवज्जिअ, दिट्ठंदो एसो मए दंसिदो । ता पिअं दे विस्सद्धं भणामि । बुद्धाणुसासणं पलिहलिअ अलिहन्ताणुसासणं जेव्व अनुसलिअ दिअवलमदं जेव्व धालेदु भवम् ।

भिक्षुः—आः पाप, स्वयं नष्टः परानपि नाशयितुमिच्छसि ।

स्वाराज्यं प्राज्यमुत्सृज्य लोके निन्द्यामनिन्दितः ।
अभिवाञ्छति को नाम भवानीव पिशाचताम् ॥ १० ॥

अपिच, आर्हतमपि धर्मवेदनं कः श्रद्दधाति ।

---

* अरे विहारदासीभुजङ्ग दुष्टपरिव्राजक, दृष्टान्त एष मया दर्शितः । तत् प्रियं ते विस्रब्धं भणामि । बुद्धानुशासनं परिहृत्यार्हतानुशासनमेवानुसृत्य दिगम्बरमतमेव धारयतु भवान् ।

---

भिक्षुरित्यादि । सक्रोधम् । क्रियाविशेषणमेतत् । अत्र प्रमाणोपन्यासे कर्तव्ये गालिप्रदानस्यानुचितत्वात्क्रोधोदय इति भावः । अरे विहारदासीभुजङ्ग दुष्टपरिव्राजक, दृष्टान्त एष मया दर्शितः । अत्र मद्वचनं गालिप्रदानं न भवति अपि तु प्रतिवन्धितर्कस्य विपर्यये पर्यवसानप्रदर्शनपरम् । तथा चायमर्थः । यथा त्वं मे दास इति वचनमप्रमाणम् । एवं बुद्धः सर्वज्ञ इति तदीयागमोऽप्य-

---

[क्षप—अरे विहारदासीभुजङ्ग दुष्टप्रव्रजित, दृष्टान्त एष मया दर्शितः । तत् प्रियं ते विस्रब्धं भणामि । बुद्धानुशासनं परिहृत्यार्हदनुशासनमनुसरन् दिगम्बरव्रतमेव धारयतु भवान् ।] विहारदासीभुजङ्ग वेश्याभर्तः । विस्रब्धं सविश्वासम् । स्वाराज्यमिति । को नाम अनिन्दितः सन् । लोकैरिति शेषः । प्राज्यं प्रकृष्टं धातुमूलचिन्तालाभवुद्धिपरमार्थचन्द्रसूर्यग्रहणसंवादभोगादिना दशविधेन सर्वज्ञत्वप्रकर्षस्तद्विशिष्टं स्वाराज्यं स्वातन्त्र्यमुत्सृज्य त्यक्त्वा भवानिव लोकनिन्द्यां शास्त्रविरुद्धां पिशाचतां पिशाचत्वमभिवाञ्छत्यभिलपति । न कोऽपीत्यर्थः ॥ १० ॥ आर्हतमतमनुपादेयमित्याह—आर्हतमपीति । आर्हतमपि धर्मवेदनं धर्मज्ञानं कः श्रद्धत्ते कः स्वी-

---

१ 'दुट्ठप्पव्वजिद, दिट्ठे दे मए एसे दंसिदे— अलिहन्तानुसासणं अणुसलन्ते दिअंबलव्वदं जेव्व धालेदु भवं' इति पाठः ।

**क्षपणकः**—*ग्गहणक्खत्तचालचन्दसूज्जोपंलाअलुप्पलाहपलमत्थाण्णाणसंधाणदंसणेण णिलुविदं सव्वणंतणं भअवदो अलिहन्तस्स।

**भिक्षुः**—अरे, अनादिप्रवृत्तज्योतिषातीन्द्रियज्ञानेन प्रतारितेन भगवतेदमतिकष्टं व्रतमाश्रितम् । तथाहि—

ज्ञातुं वपुःपरिमितः क्षमते त्रिलोकीं
जीवः कथं कथय संगतिमन्तरेण ।
शक्नोति कुम्भनिहितः सुशिखोऽपि दीपो
भावान्प्रकाशयितुमप्युदरे गृहस्य ॥ ११ ॥

---

* ग्रहनक्षत्रचारचन्द्रसूर्योपरागलुप्तलाभपरमार्थज्ञानसंधानदर्शनेन निरूपितं सर्वज्ञत्वं भगवतोऽर्हतः ।

---

प्रमाणमेवेति । तस्मात्, बुद्धागमस्याप्रमाणत्वादिति भावः ॥ १० ॥ **लुप्तभाव इति** । नष्टचिन्तापरमार्थज्ञानं तद्विषयार्थज्ञानम् । **भिक्षुरिति** । अनादिप्रवृत्तज्योतिषा ज्योतिःशास्त्रेणातीन्द्रियज्ञानेन भूतभविष्यद्विषयसाधनवतार्हता प्रतारितेन भगवतेदमतिकष्टं व्रतमाश्रितम् । कथं वञ्चित इति भावः ॥ **ज्ञातुमित्यादि** । वपुःपरिमितः वपुषि गेहे परिमितः परिच्छिन्नः । तदेव सदृष्टान्तमाह—**शक्नोतीत्यादि** । भावान्घटपटादिपदार्थान् 'अङ्गुष्ठमात्र आत्मा' इत्युक्तं प्राक् । जीवस्त्रिलोकीं ज्ञातुं संगतिमन्तरेण स्वान्वयमन्तरेण कथं क्षमते शक्नोति । कथय वद । ब्रह्मणापि

---

करोति । न कोऽपीत्यर्थः । [क्षप—ग्रहनक्षत्रवारचन्द्रसूर्योपरागशुक्रराहुपरमार्थज्ञानसंवाददर्शनेन निरूपितं भगवतः सर्वज्ञत्वमर्हतः ।] **अरे, अनादीति** । अनादिप्रवृत्तेनानादिसिद्धेन ज्योतिषा ज्योतिःशास्त्रेण अतीन्द्रियमिन्द्रियागोचरं यज्ज्ञानं तत्प्रतारितेन भवता कष्टमतिदुःखावहं व्रतमाश्रितम् । अङ्गीकृतमित्यर्थः । देहपरिमितत्वमात्मनो न सर्वज्ञत्वमित्याह—**तथा हीत्यादिना** । **ज्ञातुमिति** । वपुःपरिमितः वपुषा परि समन्तान्मितः शरीरमात्रपरिमाणो जीवो विज्ञानरूपस्त्रिलोकीं ज्ञातुं कथं क्षमत इति कथय । न कथमपि समर्थो भवतीत्यर्थः । त्रिलोक्यज्ञाने हेतुमाह—संगमतिन्तरेणेति । संबन्धं विनेत्यर्थः । तन्मते ज्ञानादिसंबन्धे मानाभावादिति भावः । उक्तमर्थं दृष्टान्तेन द्रढयति—**सुशिखोऽपीति** । अपिशब्दात्सुस्नेहोऽपि कुम्भनिहितः कुम्भान्तः क्षिप्तो दीपो गृहस्योदरे मध्ये विद्यमानान्भावान्पदार्थान्प्रकाशयितुं न शक्नोति यथा, तथा स्वप्रकाशोऽप्यात्मा शरीरमध्ये वर्तमानः परिच्छिन्नो भुवनान्तरं-

---

१ 'सुलेपलाअसुक्कलाहुपलमत्थण्णाणसंवाददंसणेण णिलूविदं भअवदो सव्वणत्तणं' इति पाठः । २ 'ज्ञानप्रतारितेन' इति पाठः । ३ 'परिमितं' इति पाठः ।

तस्माल्लोकद्वयविरुद्धादार्हतमताद्दूरं [1]सुगतमतमेव साक्षात्सुखावहमतिरमणीयं पश्यामः।

**शान्तिः**—सखि, अन्यतो गच्छावः।

**करुणा**—* एवं भोदु। (इति परिक्रामतः।)

**शान्तिः**—([2]पुरो विलोक्य) एष पुरस्तात्सोमसिद्धान्तः। भवतु। अत्रापि तावदनुसरावः।

(ततः प्रविशति कापालिकरूपधारी सोमसिद्धान्तः।)

**सोमसिद्धान्तः**—(परिक्रम्य)

* एवं भवतु।

वक्तुं न शक्यत इत्यर्थः॥ ११॥ **तस्मादिति**। लोकद्वयमागमिकानागमिकजनविरुद्धम्। यद्वा लोकद्वयमिहलोकपरलोकौ। इहलोको नास्ति तावत्पिशाचत्वात्। परलोको नास्ति सततोर्ध्वगमनरूपक्लेशानुभवात्। ऐहिकामुष्मिकदूरमार्हतमतमित्यर्थः। एवमार्हता मन्यन्ते। जीवोऽजीवश्चेति द्वौ पदार्थौ। जीवश्चेतनः शरीरपरिमाणः सावयवः। अत्र जीवः षड्विधः। अभ्रभूभूधरादिरेकः। आश्रवसंवरणनिर्जरबन्धमोक्षाख्याः पञ्च। आश्रवत्यनेन जीवो विषयेष्विति आश्रव इन्द्रियसंघातः। संवृणोति विवेकमित्यविवेकादिः संवरणः। निःशेषेण जीर्यतेऽनेन कामक्रोधादिः केशोल्लुञ्चनतप्तशिलाधिरोहणादिकं ततो निर्जरः। कर्माष्टकेन जन्मपरम्पराबन्धः। कर्माष्टकं तु—चत्वारि घातिकर्माणि चत्वारि शुभानि तेभ्योऽष्टाभ्यः कर्मभ्यो विनिर्गतस्य जीवस्य सततोर्ध्वगमनं मुक्तिः। एते च सप्त पदार्थाः सप्तभङ्गीलक्षणेन शास्त्रवादेन समर्थनीयाः। अस्ति बहुवक्तव्यम् ग्रन्थविस्तरभयान्नेह प्रपञ्च्यते॥ **शान्तिरित्यादि स्पष्टम्**॥—**सोमसिद्धान्त इति**। उमया सहितः सोमः सोमो यथा पार्वत्या सह कैलासे मोदते तद्वद्भक्तः पार्वतीतुल्यकान्तया सहितः सन् ईश्वरवेषधारी कैलासे मोदते सैव मुक्तिः। शरीरिणोऽपि मुक्तिर्न विरुध्यते तपोमहिम्ना नित्यशरीरावलम्बनात्। औषधादिसेवया

वर्तिनो बहिःस्थान्सूर्यादीन्नैव प्रकाशयेदित्यर्थः। एवं विरुद्धमुपपादयतार्हता भवन्तो वञ्चिता इति भावः॥ ११॥ आर्हतमतदूषणमुपसंहरति—तस्मादिति। लोकद्वयविरुद्धादिहलोकपरलोकयोर्विरुद्धाद्दुःखदादिहलोकः सुखरूपः। षोडशवर्षाः स्त्रियश्चन्दनं सुमनसां माला अयमेव स्वर्गः, इह लोक एव नरकरूपा आधयो व्याधयश्च, एतद्भिन्नलोके प्रमाणाभावादिति भावः। साक्षात्सुखावहं धर्मनिरपेक्षतया सुखजनकम्।

१ 'सुगतदर्शनमेव' इति पाठः। २ 'पुरोऽवलोक्य' इति पाठः।

नरास्थिमालांकृतचारुभूषणः[1]
स्मशानवासी नृकपालभोजनः ।
पश्यामि योगाञ्जनशुद्धचक्षुषा[2]
जगन्मिथो भिन्नमभिन्नमीश्वरात् ॥ १२ ॥

क्षपणकः—*को[3] एसो कावालिअव्वदं पुलिसो धालेदि । ता णं वि पुच्छिस्सम् । (उपसृत्य) अलेले कावालिअ, णलात्थिमुण्डमालाधारिअ, किलिसो तुह्म धम्मो, किलिसो तुह्म मोक्खो ।

---

* क एष कापालिकं व्रतं पुरुषो धारयति । तदेनमपि पृच्छामि । अरेरे कपालिक, नरास्थिमुण्डमालाधारक, कीदृशस्तव धर्मः कीदृशस्तव मोक्षः ।

---

कार्यसिद्धिर्लोके दृष्टेति नात्र कार्यानुमानमवतरति । तत्र स्त्रीसंभोगादिव्यतिरेकेण सुखान्तरं नास्ति । सदाशिवप्रसादमहिम्ना तादृशसुखस्य दुःखानभिभूतत्वान्नित्यसुखत्वमिति सोमसिद्धान्तरहस्यम् । कापालिकदीक्षादीक्षितानामेव शिवाद्वैतसाक्षात्कारो नान्येषाम् । तद्दीक्षावशादेव आत्मनोऽपि शिवाद्वैतसाक्षात्कारः संपन्न इति प्रकटीकरोति—**नरास्थिमालेति** । नरास्थिमालया कृतं चारु भूषणं येन सः । स्मशाने वसतीति स्मशानवासी । नृकपाले भोजनं यस्य सं नृकपालभोजनः । 'सप्तमीविशेषणे बहुव्रीहौ' इति ज्ञापकात्सप्तमीव्यधिकरणबहुव्रीहिः । 'अवर्ज्यो बहुव्रीहिर्व्यधिकरणो जन्माद्युत्तरपदः' इति वामनसूत्रम् । जन्मादेराकृतिगणत्वात्प्रायिकाभिप्रायाद्वा नेयम् । यद्वा समानाधिकरणसमासः । भुज्यतेऽत्रेति भोजनं भोजनपात्रम् । 'करणाधिकरणयोश्च' इत्यधिकरणे ल्युट् । नृकपाले भोजनं यस्य सः नृकपालभोजनः । एवंविधका-

---

[करुणा—एवं भवतु ।] नरास्थिमालेति । अहं जगत् पश्यामि । कीदृशं जगत् । मिथोऽन्योन्यं भिन्नं पुनरीश्वरादभिन्नं यथा मुद्रिकाकङ्कणादेः परस्परभेदेऽपि सुवर्णादभिन्नता तथेत्यर्थः । कीदृशोऽहम् । नरास्थिमालया महाशङ्खाक्षमालया कृतं संपादितं भूरि भूषणं येन सः । श्मशाने काश्यां वसतितच्छीलः । नृकपाले भोजनं यस्य सः । योग एवाञ्जनं तेन शुद्धमभ्रान्तं दर्शनं ज्ञानं यस्य सः । एतेन स्वीयव्रतधारणं दर्शितम् ॥ १२ ॥ [क्षप—अरे, एष पुरुषः कापालिकव्रतं धारयति, तदेनमपि पृच्छामि । अरेरे कापालिक, नरास्थिमुण्डधारक, कीदृशस्तव धर्मः कीदृशस्तव मोक्षः ।]उपसृत्य समीपं

---

१ 'कृतभूरि' इति पाठः । २ 'योगाञ्जनशुद्धदर्शनो' इति पाठः । ३ 'अले' एसो पुलिसो कावालिअव्वदं धालेदि ।—णरास्थिमुण्डधालअ, केलिसे तुह्म धम्मे, केलिसे तुह्म मोक्खे' इति पाठः ।

कापालिकः—अरे क्षपणक, धर्मं तावदस्माकमवधारय ।

मस्तिष्कान्त्रवसाभिपूरितमहामांसाहुतीर्जुह्वतां
वह्नौ ब्रह्मकपालकल्पितसुरापानेन नः पारणा ।
सद्यःकृत्तकठोरकण्ठविगलत्कीलालधारोज्ज्वलै-
रर्च्यो नः पुरुषोपहारबलिभिर्देवो महाभैरवः ॥ १३ ॥

---

पालदीक्षादीक्षितः सन् अहं । योगाञ्जनदिव्यचक्षुषा । योगः समाधिः स एवाञ्जनं तेन दिव्यमलौकिकं चक्षुर्दृष्टिस्तेन साधनेन मिथोऽभिन्नं परस्परव्यावृत्तं जगदीश्वरादभिन्नं पश्यामि । अयमभिप्रायः । हे लोकाः, ईश्वरादभिन्नं जगद्द्रष्टुकामाश्चेन्मदीयं नरास्थिमालाधारणादिरूपं व्रतमाचरतेति ॥ १२ ॥ मस्तिष्केत्यादि । मस्तिष्कं मेदः, अन्त्राणि शिराविशेषाः, वसा मज्जास्ताभिरभिपूरितं महामांसं महापशोर्नरस्य मांसं तेनाहुतीर्वह्नौ जुह्वतां नः ब्रह्मकपालं ब्रह्मणो नरस्य कपालं तत्र कल्पितं सुरापानं तेन पारणा तृप्तिः सद्यस्तदानीमेव कृत्तात्खण्डितात्कठोरकण्ठाद्विगलन्तीभिः कीलालधाराभी रक्तप्रवाहैरुल्बणैरधिकैः पुरुषोपहारबलिभिर्महाभैरवो देवो नोऽर्च्यः । मस्तिष्कान्त्रेत्यादिना कीदृशस्तव धर्म इत्यस्योत्तरं दत्तम् । सद्यःकृत्तेत्यादिना भैरवोपासनावशायातकैलासवास इति वचनभङ्ग्या कीदृशस्तव मोक्ष इत्यस्योत्तरं दत्तमिति विवेकः ॥ १३ ॥

---

गत्वा । धर्मं तावद्वदति । मोक्षप्रश्नस्यायुक्तत्वाद्धर्मं तावदादावेवावधारय । निश्चिनुहीत्यर्थः । मस्तिष्केति । नोऽस्माकं ब्रह्मकपाले कल्पिता निर्मिता सुरा मद्यं तस्याः पानं तेन पारणा पुष्टिः । भवतीत्यध्याहारः । कीदृशानां नः । वह्नावग्नौ मस्तिष्केण कपालान्तर्वर्तिरसेनाक्ता मिलिता या वसा तयाभिघारितानि महामांसानि मनुष्यमांसानि तेषामाहुतीर्जुह्वतां होमं कुर्वताम् । किं च नोऽस्माकं भैरवो देवोऽर्च्यः पूज्यः कैः साधनैस्तान्याह । पुरुषा एवोपहारा उपक्लृप्ता बलयो बलिदानरूपास्तैः । कथंभूतैः पुरुषोपहारबलिभिः सद्यस्तत्क्षणमेव कृत्तो भिन्नः कठोरो निष्ठुरः कण्ठस्तस्माद्विशेषेण गलत्कीलालं रक्तं तस्य धाराभिरुज्ज्वलाः शोभमानास्तैः । अथवा नोऽस्माकं भैरव उमाकान्तोऽर्च्यः देवः स्वप्रकाशः । कैः । पुरि शेते पुरुषोऽन्तरात्मा तदर्थमुपहाराः समर्पणानि त एव बलयस्तैः । कीदृशैः । सद्यस्तत्क्षणमेवं कृत्तकठोरकण्ठादिवोन्नामितकण्ठादिव विगलदमृतधाराभिः शोभमानैः मस्तकभवं मस्तिष्करूपं तेनाक्ता कान्तिमती या वसा स्नेहस्तेनाभिघारिताः सिक्ता महत्यो विषयेषु प्रवृत्ता बुद्धिवृत्तयस्ता एव मांसानि तेषामाहुतीरग्नौ शिवमूर्तौ जुह्वताम् । शिवार्पणं कुर्वतामित्यर्थः । किं च नोऽस्माकं ब्रह्मरन्ध्रोपलक्षितः कपालो ब्रह्मकपालस्तत्र कल्पिता विद्यमाना सुरा चान्द्री

---

१ 'मस्तिष्काक्तवसा' इति पाठः ।

भिक्षुः—(कर्णौ पिधाय) बुद्ध बुद्ध, अहो दारुणा धर्मचर्या।

क्षपणकः—* अलिहन्त अलिहन्त, अहो घोलपावकालिणा केणावि विप्पलद्धो वलाओ।

कापालिकः—(सक्रोधम्) आः पाप पाखण्डापसद, मुण्डितामुण्ड, चूडालकेश, केशलुञ्चक, अरे, विप्रलम्भकः किल चतुर्दशभुवनोत्पत्तिस्थितिप्रलयप्रवर्तको वेदान्तप्रसिद्धसिद्धान्तविभवो भगवान्भवानीपतिः। दर्शयामस्तर्हि धर्मस्यास्य महिमानम्।

हरिहरसुरज्येष्ठश्रेष्ठान्सुरानहमाहरे
वियति वहतां नक्षत्राणां रुणध्मि गतीरपि।
सनगनगरीमम्भःपूर्णां विधाय महीमिमां
कलयं सकलं भूयस्तोयं क्षणेन पिबामि तत्॥ १४॥

* अर्हन् अर्हन्, अहो घोरपापकारिणा केनापि विप्रलब्धो वराकः।

बुद्ध बुद्धेति। यथा वैदिकाः पापकथाः श्रुत्वा कृष्णकृष्णेति वदन्ति एवं बौद्धा बुद्ध बुद्धेति वदन्ति। अर्हन् अर्हन् बुद्धबुद्धेतिवदार्हतानामुक्तिः। आः पापेत्यारभ्य अरे इत्यन्तं वाक्यं गालिप्रदानपरम्। विप्रलम्भकः किलेत्यारभ्य दर्शयाम इत्यन्तं सुगमम्॥—हरिहरेत्यादि। हरिहरसुरज्येष्ठा विष्णुरुद्रप्रपितामहाः श्रेष्ठाः प्रमुखा येषां तान्देवानानये। आनेष्यामीत्यर्थः। वियति वहतामिति सूर्यचन्द्रग्रहाणां गती रुणध्म्यावृणोमि। सनगनगरीत्यादि। भुत्वं समुद्रे निमज्ज-

कला तस्याः पानेन पारणा व्रतसमाप्तिः। अत एवायमुमया सहितः सोमस्तस्य सिद्धान्तः॥ १३॥ [क्षप—अर्हन्, घोरपापकारिणा केनापि विप्रलब्धो वराकः] विप्रलब्धो धर्माद्व्यावितः। पाखण्डापसद पाखण्डाधम, चण्डावेश केशलुञ्चक केशोत्पाटक। कापालिकं प्रति सतिरस्कारमाह—अरे इति। अरे इत्यत्राकारप्रश्लेषः। अविप्रलम्भकोऽवञ्चकः। सोमसिद्धान्त इति शेषः। यत्र भगवान्कर्तुमकर्तुमन्यथाकर्तुं समर्थो भवानीपतिः, प्रतिपाद्यते। शेषं स्पष्टम्। हरिहरेति। अहं हरिर्विष्णुः, हरो महादेवः, सुरा इन्द्रादयस्तेषां वयसा ज्येष्ठाः सामर्थ्येन श्रेष्ठास्तान्सुरान्देवानाहरे आनये। वियति आकाशे वहतां गच्छतां नक्षत्राणां गतीरपि रुणध्मि। किंच नगाः पर्वताः, नग-

१ 'पिधाय अहो' इति पाठः। २ 'अलिहन्त, घोलो—रवाओ' इति पाठः। ३ 'मुण्डितचूड चण्डालवेष' इति पाठः। ४ 'नगरामम्भः' इति पाठः। ५ 'कलशशकलैर्भूयः' इति पाठः।

**क्षपणकः**—* अले कावालिअ, अदो जेव्व भणामि केणावि इन्दजालिणा माआं दंसीअ विप्पलद्धोसि त्ति ।

**कापालिकः**—आः पाप, पुनरपि परमेश्वरमैन्द्रजालिकमित्याक्षिपसि । तन्न मर्षणीयमस्य दौरात्म्यम् । (खड्गमाकृष्य) तदलमस्य ।

एतत्करालकरवालनिकृत्तकण्ठ-
नालोच्चलद्बहुलफेनिलबुद्बुदौघैः ।
सार्धं डमड्डमरुडांकृतिहूतभूत-
वर्गेण भर्गगृहिणीं रुधिरैर्धिनोमि ॥ १५ ॥

(इति खड्गमुद्यच्छति ।)

---

* अरे कापालिक, अत एव भणामि केनापीन्द्रजालिना मायां दर्शयित्वा विप्रलब्धोऽसीति ।

---

यामीत्यर्थः । कलय । जानीहीत्यर्थः । भूय इत्यादि पुनः समुद्रं पीत्वा भूमिं यथा स्थितां करिष्य इति भावः । तवाग्रत इति सर्वत्रान्वयः ॥ १४ ॥ आः परमेश्वरेत्यादि स्वगतोक्तिः ॥—एतत्करालेति । एतदिति हस्तधृतखड्गनिर्देशः । करालो भीकरः करवालः खड्गस्तेन कृत्तात्कण्ठनालादुच्चलन्ति बहुलाः फेनवन्तो बुद्बुदानामोघा येषु तानि उच्चलन्ति च तानि बहुलफेनिलबुद्बुदौघानीति विशेषणसमासः । तै रुधिरैर्हस्त आपीडयन् । डमन् विजृम्भमाणो डमरुर्वाद्यविशेषस्तस्य डांकृतिः शब्दानुकरणं तया हूत आहूत आकारितो

---

राणि पत्तनानि तैः सहितामिमां महीं पृथ्वीमम्भःपूर्णां विधायोदकपूर्णां कृत्वा तत्तोयं जलं कलशशकलैः क्षणेन शीघ्रमेव पिबामि । भैरवोपासकानामस्माकं सोमसिद्धान्तिनामीदृशः प्रभाव इति भावः ॥ १४ ॥ खड्गमाकृष्य कोशान्निःसार्य ॥ एतदिति । अहं भर्गस्य गृहिणीं महाभैरवीं डमन्शब्दं कुर्वन्यो डमरुर्वाद्यविशेषस्तस्य डांकृतिडांकरणशब्दस्तेन हूत आहूतो यो भूतवर्गः पिशाचसमूहस्तेन सार्धं सह रुधिरैर्धिनोमि प्रीणयामि । कीदृशै रुधिरैः । एषः यः करालो भयावहः करवालः खड्गस्तेन निकृत्तं छिन्नं यत्कण्ठनालं तस्मादुच्छलन्त उद्गच्छन्तो बहलाः फेनिलाः सफेना बुद्बु-

---

१ 'माअं दंसिअ विप्पलद्धेसि' इति पाठः । २ 'तन्नाकर्णनीयं—तदहमस्य' इति पाठः । ३ 'नालोच्छलद्बहल' इति पाठः ।

**क्षपणकः**—(सभयम्) *महाभाअ, अहिंसापलमो[1] धम्मो त्थि।
(भिक्षोरङ्कं प्रविशति।)

**भिक्षुः**—(कापालिकं वारयन्) भो भो महाभाग, कौतुकप्रयुक्तवाक्कलहेनायुक्तमेतस्मिंस्तपस्विनि प्रहर्तुम्।

**कापालिकः**—(खड्गं प्रतिसंहरति।)

**क्षपणकः**—(समाश्वस्य।) † महाभाओ जेदि[2] संहलिदघोललोसावेसो संवुत्तो तदो अहं किंवि पुच्छिदुमिच्छेमि।

**कापालिकः**—पृच्छ।

**क्षपणकः**—‡ सुदो[3] तुह्माणं पलमो धम्मो। अध केलिसो सोक्खमोक्खो।

**कापालिकः**—शृणु—

दृष्टं क्वापि सुखं विना न विषयैरानन्दबोधोज्झिता
जीवस्य स्थितिरेव मुक्तिरुपलावस्था कथं प्रार्थ्यते।

---

* महाभाग, अहिंसा परमो धर्मोऽस्ति।

† महाभागो यदि संहृतघोररोषावेशः संवृत्तस्ततोऽहं किमपि प्रष्टुमिच्छामि।

‡ श्रुतो युष्माकं परमो धर्मः। अथ कीदृशः सौख्यमोक्षः।

---

भूतवर्गः। तेन सह भर्गगृहिणीं धिनोमि प्रीणयामि॥ १५॥ भिक्षोरङ्कं प्रविशतीत्यारभ्याश्वस्येत्यन्तं सुगमम्। श्रुतो युष्माकं परमो धर्मः। मस्तिष्केत्यादिना श्रुत इत्यर्थः। सौख्यमोक्षः सौख्यप्रधानो मोक्षः। दृष्टमिति। दृष्टा क्वापि विषयैर्विना सुखं क्वापि न दृष्टम्। आनन्दबोधोज्झिता सुखविरहिता उपलावस्था

---

दौघा येषु तैः॥ १५॥ उद्यच्छति सकम्पं दर्शयति। [क्षप—महाभाग, अहिंसा परमो धर्मोऽस्ति।] [क्षप—महाभागो यदि संहृतघोररोषावेशः संवृत्तः ततोऽहं किमपि पृच्छामि।] प्रतिसंहरति पुनः कोशे प्रक्षिपति। [क्षप—श्रुतो युष्माकं परमो धर्मः, अथ कीदृशो मोक्षः] इति धर्मं पृष्ट्वा मोक्षं पृच्छति—अथेति। कीदृशं मोक्षसौख्यमित्यर्थः। दृष्टं क्वापीति। मृडस्य पत्नी मृडान्युमा तस्याः पतिः सोम इत्यूचे वदतिस्म। इतीति किम्। चन्द्रचूडं चन्द्रशेखरं वपुर्यस्य तादृशः सन् सानन्दं

---

१ 'पलमे धम्मे त्थि' इति पाठः। २ 'जई—लोसावेसे संवुत्ते—पुच्छिदुमिच्छामि' इति पाठः। ३ 'सुदे तुह्माणं पलमे धम्मे। अध केलिसे मोक्खे' इति पाठः।

पार्वत्याः प्रतिरूपया दयितया सानन्दमालिङ्गितो
मुक्तः क्रीडति चन्द्रचूडवपुरित्यूचे मृडानीपतिः ॥ १६ ॥

भिक्षुः—महाभाग, अश्रद्धेयमेतदवीतरागस्य मुक्तिरिति ।

क्षपणकः—*अले कावालिअ, जइ ण लुससि तदो भणामि। सलीली सलागी मुक्केति विलुद्धम् ।

कापालिकः—(स्वगतम्) अये, अश्रद्धाक्षिप्तमनयोरन्तःकरणम्। भवत्वेवं तावत् । (प्रकाशम्) श्रद्धे, इतस्तावत् ।

---

*अरे कापालिक, यदि न कुप्यसि तर्हि भणामि । शरीरी सरागी मुक्त इति विरुद्धम् ।

---

पाषाणप्राया जीवस्य स्थितिरेव मुक्तिर्दुःखाभावरूपा कथं प्रार्थ्यते पामरैः । पार्वत्या इति । पार्वत्या भवान्याः प्रतिरूपया प्रतिभटं रूपं यस्याः सा प्रतिरूपा तया । तत्सदृशयेत्यर्थः । दयितया प्रियतमया सानन्दं यथा भवति तथालिङ्गितः परिष्वक्तः सन् संसारदुःखान्मुक्तश्चन्द्रचूडस्य वपुरिव वपुर्यस्य सः । क्रीडति रमते । अनेन सारूप्यमुक्तिरुक्ता । एवं मृडानीपतिः परमेश्वर ऊचे उक्तवान् । अत एव कापालिकं तन्त्रं पारमेश्वरमिति व्यवहरन्ति वृद्धाः ॥ १६ ॥ कथमिति जितमिति भावे निष्ठा । दुरात्मान एव सर्वोत्कर्षेण वर्तन्ते । अहो, आश्चर्यमिति । अश्रद्धेयमिति । अवीतरागस्य मुक्तिरित्येतदश्रद्धेयम् । अविश्वसनीयमित्यर्थः । सखि, पश्य पश्य रजसः सुता श्रद्धा । ननु कापालिकस्य श्रद्धा । कथं राजसीत्युक्तं ग्रन्थकारेण । उच्यते । यद्यपि कापालिकस्त्वाचारेण तामसस्तथापि तस्य

---

यथा स्यात्तथा पार्वत्याः प्रतिरूपया सदृशया दयितया कान्तयालिङ्गितो यः स मुक्तः क्रीडतीति सोमेश्वरोपासकानां सरूपा मुक्तिरित्यर्थः । सोमसिद्धान्त इति भावः । कथमीदृशं सुखं मोक्ष इत्यत आह । विषयैः स्त्र्यादिभिर्विना सुखं क्वापि न दृष्टम् । आत्मरूपे सुखे मानाभावादिति भावः । ननु तर्हि दुःखनिवृत्तिरेव वैशेषिकादिसंमता मुक्तिरस्त्वित्यत आह—आनन्देति । आनन्दः सुखं तस्य बोधोऽनुभवस्तेनोज्झिता रहिता जीवस्थितिरेव मुक्तिरुपलावस्था कथं प्रार्थ्यते कथमभिलष्यते । उपलावस्थावदचेतनत्वेनापुरुषार्थत्वादिति भावः । ज्ञानित्वं परित्यज्य पाषाणपदवीप्रार्थनमत्याश्चर्यं वैदिकत्वाभिमानिनाम् ॥ १६ ॥ अश्रद्धेयमनादरणीयम् । [क्षप—अरे कापालिक, यदि न रुष्यसि तदा भणामि, शरीरी सरागी मुक्त इति वेदविरुद्धम् ।] अश्रद्धया क्षिप्तम् । व्याक्षिप्तमित्यर्थः । भिक्षुक्षपणकयोरात्मा परिच्छिन्नः । आवरणस्वभावा च श्रद्धा

---

१ 'वेदविलुद्धम्' इति पाठः ।

(ततः प्रविशति कापालिनीरूपधारिणी श्रद्धा ।)

करुणा—*सहि, पेक्ख पेक्ख रजसस्सुदा सद्धा। जा एसा—

विप्पट्टणीलुप्पललोललोअणा
णरत्थिमालाकिदचालुभूसणा ।
णिअम्बपीणत्थणभालमन्थला
विहादि पुण्णेन्दुमुही विलासिणी ॥ १७ ॥

श्रद्धा—(परिक्रम्य) † एसह्मि । आणवेदु सामी ।

कापालिकः—प्रिये, एनं दुरभिमानिनं भिक्षुं तावद्गृहाण ।

(श्रद्धा भिक्षुमालिङ्गति ।)

भिक्षुः—(सानन्दं परिष्वज्य रोमाञ्चमभिनीय जनान्तिकं) अहो, सुखस्पर्शा कापालिनी । तथाहि—

रण्डाः पीनपयोधराः कति मया चण्डानुरागाद्भुजद्वन्द्वापीडनपीवरस्तनभरैर्नो गाढमालिङ्गिताः ।

---

* सखि, पश्य पश्य रजसः सुता श्रद्धा । या एषा—

विस्पष्टनीलोत्पललोललोचना
नरास्थिमालाकृतचारुभूषणा ।
नितम्बपीनस्तनभारमन्थरा
विभाति पूर्णेन्दुमुखी विलासिनी ॥ १७ ॥

† एषास्मि । आज्ञापयतु स्वामी ।

---

मुक्तिः कैलासे शिवसांनिध्य एव वर्तनमिति सामीप्यमुक्तिः सगुणोपासनाफलमिति तन्मुक्ते राजसत्वात्तदुपयोगिनी श्रद्धा राजसीत्युक्तमिति ध्येयम् ।

---

अतस्तामसी सोमसिद्धान्तस्याभिलापप्रधानत्वाद्राजसी तत्र श्रद्धा । [करुणा—सखि, प्रेक्षस्व प्रेक्षस्व रजसःसुतां श्रद्धां, यैषा—विनिद्रनीलोत्पललोललोचना नरास्थिमालाकृतचारुभूषणा । नितान्तपीनस्तनभारमन्थरा विभाति पूर्णेन्दुमुखी विलासिनी॥१७॥] [श्रद्धा—एषास्मि, आज्ञापयतु स्वामी ।] जनान्तिकं लोकसमक्षम् । रण्डा इति । मया चण्डानुरागादुत्कृष्टप्रीतिवशाद्गाढमतिशये भुजयोर्द्वन्द्वेनापीडितो मर्दितो यः

---

१ 'विणिद्दणीलुप्पल' इति पाठः । २ 'णलात्थिमाला' इति पाठः । ३ 'द्वन्द्वापीडितपीवरस्तनभरं' इति पाठः ।

बुद्धेभ्यः शतशः शपे यदि पुनः कुत्रापि कापालिनी-
पीनोत्तुङ्गकुचावगूहनभवः प्राप्तः प्रमोदोदयः ॥ १८ ॥

अहो पुण्यं कापालिकचरितमहो श्लाघ्यः सोमसिद्धान्तः। आश्चर्योऽयं धर्मः। भो महाभाग, सर्वथा बुद्धानुशासनमस्माभिरुत्सृष्टम्। प्रविष्टाः स्मः पारमेश्वरं सिद्धान्तम्। तदाचार्यस्त्वं शिष्योऽहम्। प्रवेशय मां पारमेश्वरीं दीक्षाम्।

**क्षपणकः**—*अले भिक्खुअ, कावालिणी फ़लसदूसिदं[१] तुमम्। ता दूलं अपसल।

**भिक्षुः**—आः पाप, वञ्चितोऽसि रे कापालिन्या परिरम्भमहोत्सवेन।

**कापालिकः**—प्रिये, क्षपणकं गृहाण। (कापालिनी क्षपणकमालिङ्गति।)

---

* अरे भिक्षो, कापालिनीस्पर्शदूषितस्त्वम्। तद्दूरमपसर।

---

विस्पष्टनीलोत्पलेत्यादि। एषा संबन्धच्छाया ॥ १७ ॥ बुद्धेभ्यः शतशः इति। सब्रह्मचारिबुद्धप्रतिपत्त्यर्थं चतुर्थीबहुवचनम्। यद्वा बुद्धेभ्यः इत्यत्र ल्यब्लोपे पञ्चमी। बुद्धानुद्दिश्य शपथं करोमि। सत्यं वदामीत्यर्थः। यदि पुनरिति कापालिकीकुचालिङ्गनजनितसुखतुल्यं सुखान्तरं यद्यस्ति तर्हि बुद्धेभ्यो द्रुह्यामीत्यर्थः ॥ १८ ॥ अहो इत्यारभ्य क्षपणक इत्यन्तं सुगमम्। आः पापेत्यारभ्य रोमाञ्च इत्यन्तं सुगमम्। अङ्कपालीं परिष्वङ्गम्। किमत्र युक्तम्। म-

---

पीवरयोर्मांसलयोः स्तनयोर्भरो भारः सः यस्यां क्रियायां यथा स्यात्तथा पीनपयोधराः पीनौ मांसलौ पयोधरौ स्तनौ यासां ताः रण्डा भर्तृहीनाः। निरन्तरसुरतहीना इत्यर्थः। एतेन सुखविशेषो ध्वनितः। कतिपयसंख्याका नो आलिङ्गिताः। किंतु बह्वय आलिङ्गिता एव। तावता किं तत्राह। शतशः शतवारं बुद्धेभ्यो गुरुभ्यः शपे गुरुशपथं करोमि। कुत्रापि क्वचिदपि कापालिक्याः पीनौ मांसलावुत्तुङ्गावुच्चौ कुचौ तयोरवगूहनमालिङ्गनं तस्माद्भव उत्पन्नः प्रमोदोदयः प्रकृष्टानन्दाविर्भावो यदि पुनः प्राप्त इत्यन्वयः। एतस्य सुखसंतानस्याल्पकालस्थायित्वादजातप्रायत्वात्पुनरेतादृशस्यानुत्पत्तेर्महाजना वञ्चिता इति भावः ॥ १८ ॥ प्रवेशय देहि। पारमेश्वरीं परमेश्वरसंबन्धिनीम्। [क्षप—अरे भिक्षो, कापालिनीस्पर्शदूषितस्त्वम्। तद्दूरमपसर।] परिरम्भ-

---

१ 'फलसदू सिदे' इति पाठः।

क्षपणकः—(सरोमाञ्चम् ।) * अहो अरिहन्त, अहो अरिहन्त, कापालिनीए फलससुहं। सुन्दलि, देहि देहि[1] पुणोवि अङ्कपालिम् । (स्वगतम् ।) अरे, महन्तो क्खु इन्दिअविआलो उवत्थिदो ता अत्थि कोवि उवाओ । किं एत्थ जुत्तम् । भोदु । पिच्छिआए ढंकिस्सम् ।

अयि पीणघणत्थणसोहणि पलितत्थकुलङ्गविलोअणि ।

जइ लमसि[2] कावालिणीभावेहिं सावका किं कलिस्संदि ॥१९॥

अहो कावालिअदंसवणं[3] ज्जेव्व इक्कं सौक्खमोक्खसाहणम् । भो कावालिअ, हग्गे तुहके सम्पदं दासो संवुत्तो । मंपि महाभैरवानुशासणे दिक्खय ।

---

* अहो अर्हन् ! अहो अर्हन् ! कापालिन्याः स्पर्शसुखम् । सुन्दरि, देहि देहि पुनरप्यङ्कपालीम् । अरे, महान्खल्विन्द्रियविकार उपस्थितः । तर्ह्यस्ति कोऽप्युपायः । किमत्र युक्तम् । भवतु पिच्छिकया छादयिष्यामि ।

अयि पीनघनस्तनशोभने परित्रस्तकुरङ्गविलोचने ।

यदि रमसे कापालिनीभावैः श्रावकाः किं करिष्यन्तीति ।

अहो कापालिकदर्शनमेवैकं सौख्यमोक्षसाधनम् । भो कापालिक, अहं तव सांप्रतं दासः संवृत्तः । मामपि महाभैरवानुशासने दीक्षय ।

---

स्थितः । भवतु पिच्छिकया छादयिष्यामि । लोकदृष्टीरिति शेषः ॥ **अयीति** । कपालिनीभावैः शृङ्गारचेष्टाभिः । श्रावकाः किं करिष्यन्तीति । श्रावकाणां दृष्टिनिरोधाभावेऽपि तेषां नर्मसचिवलान्न लज्जितव्यमिति भावः ॥ १९ ॥

---

आलिङ्गनं स एव महानुत्सवः । [क्षप—अहो अर्हन् अर्हन्, कापालिनीस्पर्शसुखम् । सुन्दरि, देहि तावत्पुनरङ्कपालीम् । अरे, महान्खल्विन्द्रियविकार उपस्थितः, ततोऽस्ति कोऽप्युपायः, किमत्र युक्तं, भवतु, पिच्छिकया च्छादयिष्यामि ।] अङ्कपालीमालिङ्गनम् । अर्हन्निति । देवतास्मरणेन कापालिन्यालिङ्गनजन्यं सुखं भवान्वेद नान्य इत्यसूचि । पिच्छिका मयूरपिच्छनिर्मितः पिच्छगुच्छः ॥१९॥ [क्षप—अयि पीनघनस्तनशोभना परित्रस्तकुरङ्गलोचना यदि रमयसे कापालिनि भावकी तत्किं करिष्यति

---

१ 'देहि दाव पुणो अङ्कपालीं—महन्ते क्खु इन्दिअविआले उवत्थिदे' इति पाठः ।
२ 'जइ लमसि कावालिणि भावकी ता किं कलिस्सदि सावकी' इति पाठः ।
३ 'कावालिअ एकं दंसणं सोक्खक्खसाहणं भो आचलिअ, हग्गे तुज्झ किंकले संपदं संवुत्ते मं वि महाभैलवाणुसासणे दिक्खसद्धणेण' इति पाठः ।

**कापालिकः**—उपविश्यताम् ।

(उभौ तथा कुरुतः ।)

(कापालिको भाजनं समादाय ध्यानं नाटयति ।)

**श्रद्धा**—*[1]भअवं, सुलाए पूलितं भाअणम् ।

**कापालिकः**—(पीत्वा[2] शेषं भिक्षुक्षपणकयोरर्पयति ।)

इदं पवित्रममृतं पीयतां भवभेषजम् ।

पशुपाशसमुच्छेदकारणं भैरवोदितम् ॥ २० ॥

(उभौ विमृशतः ।)

**क्षपणकः**—† अह्माणं अलिहन्ताणुसासणे सुळापाणं णत्थि ।

**भिक्षुः**—कथं कापालिकोच्छिष्टां सुरां पास्यामि ।

**कापालिकः**—(विमृश्य जनान्तिकम् ।) किं विमृशसि श्रद्धे,

---

* भगवन्, सुरया पूरितं भाजनम् ।

† अस्माकमार्हतानुशासने सुरापानं नास्ति ।

---

**कापालिक** इत्यादि नाटयतीत्यन्तं सुगमम् । श्रद्धा कापालिनी ॥—**इदं पवित्र-मिति** । इदं पीतशेषं सुराद्रव्यं पवित्रं स्वयमपि शुद्धमन्यानपि शोधयति । जरामरणयोर्नाशहेतुः । भवभेषजं भवस्य संसारस्य भेषजमौषधमाध्यात्मिकादि-तापत्रयनिवारकम् । पशुपाशसमुच्छेदकारणम् । 'पश बन्धने' इत्यस्माद्धातोः पशुपाशशब्दौ निष्पन्नौ । पशुर्बद्धो जीवस्तस्य पाशो बन्धस्तत्समुच्छेदस्यात्यन्तिक-विनाशस्य कारणं हेतुः । मुक्तिकारणमित्यर्थः । भैरवोदितं भैरवेण सर्वज्ञेनोदित-मुपदिष्टम् । सुराद्रव्यं पातव्यमित्यर्थः ॥ २० ॥ उभौ क्षपकभिक्षू । **श्रद्धे इत्यादि** ।

---

श्रावकी । अहो कापालिकैकं दर्शनं सौख्यमोक्षसाधनम् । भो आचार्य, अहं तव किंकरः सांप्रतं संवृत्तः । मामपि भैरवानुशासने दीक्षस्व ध्यानेन । ] कुरङ्गो मृगः । श्रावकी श्रद्धावती । श्रावकी क्षपणकगोष्ठी । अस्यार्थः । हे कापालिनि, त्वं श्रद्धावती सती यदि रमयसे तर्हि क्षपणकसमुदायः किं करिष्यतीति पदसमुदायार्थः । उभौ भिक्षुक्षपणकौ । [ श्रद्धा—भगवन्, पूरितं सुरया भाजनम् । ] भाजनं सुरापानपात्रम् । अर्पणे मन्त्रं पठति—**इदमिति** । भवस्य संसारस्य निवृत्तौ भेषजमिदं भैरवेणोदितं प्रोक्तम् । प-शूनां जीवानां पाशः संसारजनिका या वासनास्तासां समुच्छेदे नाशे कारणम् । इतरत्सुगमम् ॥ २० ॥ [क्षप—अस्माकमर्हदनुशासने सुरापानं नास्ति । ] किं वि-

---

१ 'भअवं पूरिदं सुराए' इति पाठः । २ 'विलोक्य पीत्वा' इति पाठः ।

पशुत्वमनयोर्नाद्याप्यपनीयते । तेनास्मद्वदनसंसर्गदोषादपवित्रां सुरामेतौ मन्येते । तद्भवती स्ववक्त्रासवपूतां कृत्वाऽनयोरुपनयतु । यतस्तैर्थिका अपि वदन्ति 'स्त्रीमुखं तु सदा शुचि' इति ।

श्रद्धा—*जं [1]भअवं आणवेदि । (पानपात्रं गृहीत्वा पीतशेषमुपनयति)

भिक्षुः—महाप्रसादः (इति चषकं गृहीत्वा पिबति ।) अहो सुरायाः सौन्दर्यम् ।

निपीता वेश्याभिः सह न कतिवारान्सुवदना-
मुखोच्छिष्टास्माभिर्विकचबकुलामोदमधुरा ।
कपालिन्या वक्त्रासवसुरभिमेतां तु मदिरा-
मलब्धां जानीमः स्पृहयति सुधायै सुरगणः ॥ २१ ॥

क्षपणकः—† अले भिक्खुअ, मा सव्वं पिब । कोवालिणी-[2]वअणोच्छिट्टं मइलं मद्[3]त्थंवि धालेसु ।

---

* यद्भगवानाज्ञापयति ।

† अरे भिक्षो, मा सर्वं पिब । कापालिनीवदनोच्छिष्टां मदिरां मदर्थमपि धारय ।

---

अद्याप्यनुभूतभवदालिङ्गनसुखयोरपि पशुत्वं नापनीयते । कर्मकर्तरि यक् । अहो सुरायाः सौन्दर्यं स्वादुत्वम् ॥—निपीतेत्यादि । वक्त्रासवेन गण्डूषमद्येन सुरभिं घ्राणतर्पणां मदिरामलब्ध्वाऽप्राप्यैव सुरगणः सुधायै स्पृहयतीति जा-

---

मृशसि किं विचारयसि । पशुत्वं मूर्खत्वमपनीयते दूरीक्रियते, स्ववक्त्रे आसवं मद्यं तेन पूतां पवित्रां कृत्वा उपनयतु समीपे प्रापयतु । तैर्थिकाः स्मार्ताः । [श्रद्धा—यद्भवानाज्ञापयतीति । ] चषकं पानपात्रम् । अहो इति । सुराया माधुर्यमिति वक्तव्ये सौन्दर्यमिति वदन् मत्तः प्रलपतीति भावः ॥—निपीतेति । अस्माभिर्वेश्याभिः सह कतिवारान्वासरान् । सुरेत्यध्याहारः । न पीता । बहुधा पीतैवेत्यर्थः । कीदृशी सुरा । सुवदनानां सुमुखीनां मुखैरुच्छिष्टा पीतशेषा । पुनः कीदृशी सुरा । विकचं विकसितं यद्वकुलं तस्यामोदेन परिमलेन मधुरा मिष्टा । ततः किं तत्राह । सुरगणः देवगणः एतां सुरामलब्ध्वा सुधायै स्पृहयतीच्छति इति जानीमः । कीदृशीं सुराम् । कपालिन्याः

---

१ 'भवं आणवेदि त्ति' इति पाठः । २ 'कावालिणीवदनसलसं मदिलं मंवि धालेसु' इति पाठः । ३ 'ममवि' इति पाठः ।

(भिक्षुः क्षपणकाय चषकमुपनयति ।)

क्षपणकः—(पीत्वा)* अहो, सुराए महुलत्तणम्, अहो सादो अहो गन्धो, अहो सुलहित्तणम् । चिलं खु अलिहन्ताणुसासणे णिवडिदे पडिवञ्चिदोह्मि ईदिसेण सुलालसेण । अले भिक्खुअ, घोलन्ति मं अङ्गाइं । ता सुविस्सम् ।

भिक्षुः—एवं कुर्वः । (तथा कुरुतः ।)

कापालिकः—प्रिये, अमूल्यक्रीतं दासद्वयं लब्धम् । तन्नृत्यावस्तावत् (उभौ नृत्यतः ।)

क्षपणकः—† अले भिक्खुअ, एसो कावालिओ अहवा आचालिओ कावालिनीए सद्धं सोहणं णच्चेदि । ता एदाए सद्धं अह्मेवि णच्चावः ।

---

* अहो सुराया मधुरत्वम्, अहो स्वादः, अहो गन्धः, अहो सुरभित्वम् । चिरं खलु अर्हदनुशासने निपतितः प्रतिवञ्चितोऽस्मीदृशेन सुररासेन । अरे भिक्षो, घूर्णन्ति ममाङ्गानि । तर्हि स्वप्स्यामि ।

† अरे भिक्षुक, एष कापालिकोऽथवाचार्यः कापालिन्या सार्धं शोभनं नृत्यति । तस्मादेताभ्यां सार्धमावामपि नृत्यावः ।

---

नीमः प्रतीमः । 'स्पृहेरीप्सितः' इति संप्रदानत्वाच्चतुर्थी ॥ २१ ॥ अहो सुरभित्वम् । अत्र माधुर्यस्वादयोरेकार्थत्वेऽपि रसावेशाद्विरुक्तिः । एवं गन्धसुरभित्वयोः । यद्वा मधुरत्वं माधुर्यं गन्धादिनिष्ठम् । स्वादो गुडमरिचादि षड्विधद्रव्यनिष्ठः कश्चन रुचिविशेषः । गन्धः सहजवासना । सुरभित्वमागन्तुकवासना । उभौ तथा कुरुतः । नूतनसुरापानसमायातमूर्च्छाजाताविल्यर्थः । उभौ नृत्यत

---

वक्त्रासवेनाननमयेन सुरभिं सुगन्धाम् ॥ २१ ॥ [क्षप—अरे भिक्षो, मा सर्वं पिब । कापालिनीवदनसरसां मदिरां ममापि धारयस्व ।] वदनसरसां वदनोच्छिष्टाम् । मुखरसयुक्तमित्यर्थः । चषकं पानपात्रम् । [क्षप—अहो सुराया मधुरत्वम्, अहो स्वादः, अहो गन्धः, अहो सुरभित्वम् । चिरं खलु अर्हदनुशासने पतितः प्रतिवञ्चितोऽस्मीदृशेन सुरारसेन । अरे भिक्षुक, घूर्णन्ति ममाङ्गानि । तत्स्वप्स्यामि ।] अहो इत्याश्चर्ये । रसान्तरासदृशत्वमित्यर्थः । [क्षप—अरे भिक्षुक, एष कापालिकः अथवा आचार्यः कापालिन्या

---

१ 'इदिदो पडिवंचिदह्मि—घोणंदि मं अङ्गाणि' इति पाठः । २ 'एसे कावालिए' इति पाठः ।

**भिक्षुः**—आचार्य, महाश्चर्यमेतद्दर्शनम् । यत्राक्लेशमभिमतार्थसिद्धयः संपद्यन्ते ।

(मदस्खलितं नृत्यतः)

**क्षपणकः**—(अयि 'पीणत्थणि' इत्यादि पूर्वमेवोक्ला ।)

**कापालिकः**—कियदेतदाश्चर्यं पश्यसि ।

अत्रानुज्झितचक्षुरादिविषयासङ्गेऽपि सिद्ध्यन्त्यमू-
रत्यासन्नमहोदयाः प्रणयिनाप्यष्टौ महासिद्धयः ।
वश्याकर्षविमोहनप्रशमनप्रक्षोभणोच्चाटन-
प्राया: प्राकृतसिद्धयस्तु विदुषां योगान्तरायाः परम् ॥२२॥

---

इति । नृतिर्नाम केवलं गात्रविक्षेपात्मकोङ्गहारविशेषः । 'नृती गात्रविनामे' इत्ययं धातुर्दैवादिकः । अत्र एष कापालिक इति पूर्वाभ्यासवशात्स्खलितोक्तिः । सावकेभावेहि इति स्खलितोक्तिः । अत्र ध्रुवान्तरी मदप्राययुक्ता । यद्वा प्रासादिकी प्रसादनप्रयोजनत्वाद्ध्रुवाया इति ॥—**अत्रेत्यादि** । अत्र मते प्रणयिनाभिनिविष्टेन योगिनानुज्झितवाञ्छितार्थविषयासङ्गेऽपि । अभीष्टवस्तुविषयाभिलाषापरित्यागेऽपीत्यर्थः । अमूरष्टौ महासिद्धयोऽत्यासन्नमहोदया अतिनिकटवर्तिमहाफलाः सत्यः सिद्ध्यन्ति । अणिमा महिमा गरिमा लघिमा प्राप्तिः प्राकाम्यमीशत्वं वशित्वं चेत्यष्टौ सिद्धयः । येनाणिम्नैश्वर्येणाणुर्भवति साऽणिमा । येन महिम्नैश्वर्येणाकाशवन्महान्भवति सा महिमा । येन गरिम्णा ऐश्वर्येण गुरुः पर्वतादिधुरन्धरेणापि धर्तुमशक्यो भवति सा गरिमा । येन लघिम्नैश्वर्येणातिलघुः सूर्यमरीचिमालम्ब्य सूर्यादिलोकान् गन्तुं शक्नोति सा लघिमा । येनैश्वर्येणाङ्गुल्यग्रादिना चन्द्रादीन्स्प्रष्टुं शक्नोति तत्प्राकाम्यम् । येनैश्वर्येण भूत-

---

सार्धं शोभनं नृत्यति तदेतया सार्धमावामपि नृत्यावः ।] मदस्खलितं मदनं स्खलितं स्खलनं प्राप्तं यथास्यात्तथा नृत्यतः । अइ पीणघणत्थणेति पूर्वोक्तां गाथामित्यर्थः । यत्रेति । अक्लेशं चान्द्रायणादितपसा विना अभिमता अभिलषिता अर्थसिद्धयः । प्रयोजनसिद्धय इत्यर्थः । आश्चर्यमेवाह—अत्रानुज्झितेति । अत्रास्मन्मते अनुज्झितोऽत्यक्तः चक्षुरादीनामिन्द्रियाणां विषयास्तेषामासङ्गः संबन्धस्तस्मिन् सत्यपि अष्टौ महासिद्धयोऽणिमाद्याः सिद्ध्यन्ति । प्राकृताश्च सिद्धयः सिद्ध्यन्ति प्राप्यन्ते । परंतु विदुषां ज्ञानिनां योगान्तरायाः योगविघ्नभूता भवन्तीत्यध्याहारः । कीदृशानां विदुषाम् ।

---

१ 'भिक्षुः —एवं कुर्वः' (इति मदस्खलितं नृत्यतः) इति पाठः । २ 'इत्यादि गायति' इति पाठः । ३ 'महोदयप्रणयिनाम्' इति पाठः ।

क्षपणकः—*अले कापालिअ, (विमृश्य) अहवा आचालिअ, आचालिअलाअ, कुलाचालिअ ।

भिक्षुः—(विहस्य) अयमनभ्यासातिशयपीतया मदिरया दूरमुन्मनीकृतस्तपस्वी । तत्क्रियतामस्य मदापनयनम् ।

कापालिकः—एवं भवतु । (इति स्वमुखोच्छिष्टं ताम्बूलं क्षपणकाय ददाति ।)

क्षपणकः—(स्वस्थीभूय) †आचालिअ, एव्वं पुच्छिस्सम् । जादिसी तुह्माणं सुलाए आहलणसिद्धी किं तादिसी सिद्धी इत्थिआसु पुलिसेसु अत्थि ।

---

* अरे कापालिक, अथवा आचार्य, आचार्यराज, कुलाचार्य ।

† आचार्य, इदं पृच्छामि । यादृशी युष्माकं सुराया आहरणशक्तिः किं तादृशी शक्तिः स्त्रीपुरुषेष्वप्यस्ति ।

---

भौतिकादीनां नियन्ता भवति तदीशित्वम् । येनैश्वर्येणेन्द्रियादीनि वश्यानि भवन्ति तद्वशित्वम् । वश्याकर्षणेति । उच्चाटनप्राया उच्चाटनंप्रभृतयः । प्रायःशब्देनोत्सादनादयो गृह्यन्ते । प्राकृतसिद्धयः प्राकृतजनविषयाः प्राकृतान्राजादीनधिकृत्य प्रवर्तन्ते । अतएव तुच्छास्ताः । किंच विदुषां विवेकिनां परमत्यर्थं योगान्तराया भगवद्ध्यानविघ्नभूताः । वश्यादीनां मन्त्रौषधादिसाध्यत्वादणिमादिवन्नेश्वरानुग्रहसाध्यत्वमिति भावः ॥ २२ ॥ कापालिकेत्यादि । उन्मत्तप्रलापोऽयम् । अनभ्यासेत्यादि । अतिपीतयातिमात्रं पीतया दूरमत्यर्थमुन्मनीकृतः । उद्गतं मनो यस्योन्मनाः । अभूततद्भावे च्विः टिलोपः । उत्सिक्तोऽभूदित्यर्थः ॥

---

अत्यासन्नोऽतिनिकटश्चासौ महोदयश्च मोक्षस्तस्मिन् प्रणयः प्रीतिर्येषां तच्छीलास्तेषाम् । कीदृश्यः प्राकृतसिद्धयः । वश्यं च वशीकरणम्, आकर्ष आकर्षणं, मोहनं भ्रान्त्युत्पादनं, प्रशमनं सकलज्ञानभ्रंशः, प्रक्षोभणं प्रक्षोभः, उच्चाटनं स्थानभ्रंशः, तत्प्रायास्तत्प्रधाना इत्यर्थः ॥ २२ ॥ [क्षप—अरे कापालिक, अरे आचार्य, अथवा आचार्यराज, कुलाचार्य ।] अयमिति । सातिशयपीतया मदिरया अयमनभ्यासस्तपस्वी दूरमुन्मनीकृत इति योजना । अतिभ्रान्तः संपादित इत्यर्थः । [क्षप—आचार्य, एवं पृच्छामि । यादृशी युष्माकं सुरायामाहरणसिद्धिः किं तादृशी स्त्रीपुरुषे-

---

१ 'मनभ्यासः सातिशय' इति पाठः । २ 'पुच्छामि—तादिसी इत्थिआपुलिसेसु' इति पाठः ।

कापालिकः—किं विशेषेण पृच्छ्यते[1] । पश्य—

विद्याधरीं वाथ सुराङ्गनां वा
नागाङ्गनां वाप्यथ यक्षकन्याम् ।
यद्यन्ममेष्टं भुवनत्रयेऽपि
विद्याबलात्तत्तदुपाहरामि ॥ २३ ॥

क्षपणकः—*भो, एदं मए गणिदेण ण्णादं । जं सव्वेवि अह्मे[2] महामोहस्स किंकले त्ति ।

उभौ—यथाज्ञातमायुष्मता । एवमेतत् ।

क्षपणकः—† ता लाअकज्जं किंवि मन्तिदव्वम् ।

कापालिकः—किं तत् ।

क्षपणकः—‡सत्तस्स[3] सुदा सद्धा महालाअस्स अण्णाए आहलिअदु त्ति ।

कापालिकः—कथय क्वासौ दास्याः पुत्री । एष तामचिरमेव विद्याबलादुपाहरामि ।

---

* भो, इदं मया गणितेन ज्ञातम् । यत्सर्वेऽपि वयं महामोहस्य किङ्करा इति ।

† तर्हि राजकार्यं किमपि मन्त्रितव्यम् ।

‡ सत्वस्य सुता श्रद्धा महाराजस्याज्ञयाह्रियतामिति ।

---

यथा योगमहिम्नैव सुराया आहरणशक्तिर्दृश्यते मया एवं स्त्रीपुरुषाहरणशक्तिरिति किमिति प्रश्नः । विद्याधरीमित्यादि । उपाहराम्यानेष्यामि ॥ २३ ॥ उभौ भिक्षुकापालिकौ । सत्वस्येत्यारभ्याहरामीत्यन्तेन निरोधो नाम प्रतिमुख-

---

स्त्वप्यस्ति]—विद्याधरीमिति । विद्याधरीं गन्धर्वकन्यां, सुराङ्गनां देवपत्नीं, नागाङ्गनां नागपत्नीं, अथ यक्षकन्यामकृतविवाहां स्वयंवरादुपाहरामीति न चित्रं, किंतु कृतविवाहा देवपत्न्योऽप्यानेतुं शक्यन्त इति सुराङ्गनेत्यनेनोक्तम् । नागाः क्रूरास्तेषामप्यङ्गनां स्त्रियं, यक्षास्ततोऽप्यतिकठिनास्तेषामपि कन्याम् । किं बहुना भुवनत्रयेऽपि यद्यन्ममेष्टं तत्तदुपाहरामीति योजना ॥ २३ ॥ [क्षप—भोः, इदं मया गणितेन ज्ञातम् । यत्सर्वे वयं महामोहस्य किंकराः ।] [क्षप—तद्राजकार्यं किमपि मन्त्र-

---

१ 'पृच्छसि' इति पाठः । २ 'सव्वे अह्मे' इति पाठः । ३ 'धम्मस्स' इति पाठः ।

(क्षपणकः खटिकामादाय गणयति ।)

**शान्तिः**—सखि, अम्वागतमिव हताशानामालपं शृणोमि तदवधानेन तावदाकर्णयावः ।

**करुणा**—*सहि एव्वं करेह्म । (उभे तथा कुरुतः ।)

**क्षपणकः**—([१]गाथां गणयित्वा ।)

†णत्थि जले णत्थि थले, णत्थि[२] गिलिगव्हलेसु णत्थि पाआले ।
सा विण्णुभत्तिसहिदा, वसदि हिअए महम्माणम् ॥ २४ ॥

**करुणा**—(सानन्दम्) ‡सहि, दिट्ठिआ वड्ढसि[३] विण्णुभत्तिए देवीए पास्सवरितणी सद्धेत्ति ।

(शान्तिः हर्षं नाटयति ।)

---

* सखि, एवं कुर्मः ।
† नास्ति जले नास्ति स्थले नास्ति गिरिगह्वरेषु नास्ति पाताले ।
सा विष्णुभक्त्या सहिता, वसति हृदये महात्मनाम् ॥
‡ सखि, दिष्ट्या वर्धसे विष्णुभक्त्या देव्याः पार्श्ववर्तिनी श्रद्धेति ।

---

संधेरष्टममङ्गम् । लक्षणं तु 'निरोधो हितरोही स्यात्' इति । **सखीत्यादि**। अम्वागतमम्वाविषयमिव ॥—**नास्ति जले इत्यादि** । इयं ध्रुवा नैष्क्रामिकी 'निष्क्रामसूचिकान्ते या ध्रुवा नैष्क्रामिकी मता' इति । अस्या ध्रुवाया मृग्यमाणसात्विकश्रद्धा विष्णुभक्त्या सह महात्महृदये वर्तत इति । महामोहस्याज्ञापयति । उद्युक्तजनानां निष्क्रामसूचनत्वान्नैष्क्रामिकी । निष्क्रामः प्रयोजनमस्या इति नैष्क्रामिकी । 'प्रयोजनम्' इति ठक् ॥ २४ ॥ **दिष्ट्या वर्धस इत्यादि** ।

---

यतु । [क्षप—धर्मस्य सुता श्रद्धा महाराजस्याज्ञयाह्रियतामिति ।] खटिकामादायेति। खटिका अङ्कलिखनसाधनम् । अम्बागतं श्रद्धाविषयम् । हताशानां हता गता आशा येषां तेषाम् । आलापं संभाषणम् । [करुणा—सखि, एवं कुर्वः ।] [क्षप—नास्ति जले नास्ति स्थले नास्ति गिरिवरे नास्ति पाताले । सा विष्णुभक्तिसहिता वसति हृदये महात्मनाम् ॥ २४ ॥] [करुणा—सखि,दिष्ट्या वर्धसे विष्णुभक्त्या देव्याः पार्श्वपरि-

---

१ 'गाथां गणयित्वा' इति मुद्रितपुस्तके नास्ति । २ 'णत्थि गिलिव्हले' इति पाठः । ३ 'वड्ढसे—पस्सपरिवत्तणी' इति पाठः ।

भिक्षुः—अथ धर्मस्य कामादपक्रान्तस्य कुत्र प्रवृत्तिः ।

क्षपणकः—(पुनर्गणयित्वा)

*णत्थि जले णत्थि वणे; णत्थि गिलिगव्हलेसु णत्थि पाआले ।
विण्णुभत्तीए सहिदो, वसदि हिअए, महम्माणम् ॥ २५ ॥

कापालिकः—(सविषादम्) अहो महत्कष्टमापतितं महाराजस्य । तथाहि—

मूलं देवी सिद्धये विष्णुभक्ति-
स्तां च श्रद्धानुव्रता सत्वकन्या ।

---

* नास्ति जले नास्ति वने नास्ति गिरिगह्वरेषु नास्ति पाताले ।
स विष्णुभक्त्या सहितो, वसति हृदये महात्मनाम् ॥

---

अतिसुगमम् । अहो महत्कष्टमित्यादि । अत्र पर्युपासनं नाम प्रतिमुखसंधेर्नवममङ्गम् । श्रद्धाक्षेपप्रतिपादकवाक्येन सान्त्वनात् । तल्लक्षणम् 'सांत्वनं पर्युपासनम्' । धर्मस्य कामादपक्रान्तस्य कुत्र वृत्तिरित्यनेन श्रद्धास्थितिज्ञानानन्तरं तदीयस्य धर्मस्य कुत्र वृत्तिरिति विशेषवचनात्पुष्पं नाम प्रतिमुखसंधेर्दशममङ्गम्। 'पुष्पं विशेषवद्वाक्यम्' इति लक्षणात् । नास्ति जले इति । इति नैष्कामिकी ध्रुवा ॥ २५ ॥ अहो महत्कष्टमित्यारभ्य विवेकसाध्यमित्यन्तेन निष्ठुरवचनेन वज्रं नाम प्रतिमुखसंधेरेकादशमङ्गम् । तल्लक्षणं तु 'वज्रं प्रत्यक्षनिष्ठुरम्' । तावदसुव्ययेनापि स्वामिनः प्रयोजनमनुष्ठेयम् । तन्महाभैरवीं विद्यां धर्मश्रद्धयोराहरणाय प्रस्थापयाम इति उपपत्तिमद्वाक्योपन्यासादुपन्यासाख्यं प्रतिमुखसंधेर्द्वादशमङ्गम्। लक्षणं तु—'उपपत्तियुतं वाक्यमुपन्यासं प्रचक्षते' । इति निष्क्रान्ताः पाषण्डाः । आवामप्येवं हताशानां व्यवसायं देव्यै विष्णुभक्त्यै निवेदयाव इत्यत्र 'वर्ण्यस्य कथायां वर्णसंहृतिः' इत्यभिनवगुप्तपादैरुक्तम् । प्रधानकथानुसारेणैवास्माभिस्तु बहुपात्रादीनामङ्गयोजना कृता । दशरूपके तु 'चातुर्वर्ण्यसमाहारो वर्णसंहार इष्यते' इत्युक्तम् । नान्यभूपतिप्रभृतिभिस्तु 'बहुपात्रसमावेशो वर्णसंहार उच्यते' इत्यु-

---

वर्तिनी श्रद्धेति ।] [करुणा—दिष्ट्या भाग्येनेत्यर्थः । सहर्षं नाटयति हर्षयुक्तं नाट्यं प्रकाशयति । णत्थि जले इति पूर्वोदाहृतां गाथां पठति ॥२५॥ मूलमिति । विष्णुभक्तिर्देवी । सिद्धये बोधोत्पत्तये मूलं प्रथमं कारणं सत्त्वकन्या श्रद्धा सात्त्विकी श्रद्धा ।

---

१ 'कापालिकः—कुत्र वृत्तिः' इति पाठः ।

कामान्मुक्तस्तत्र धर्मोऽप्ययभूत्से-
तिसद्धं मन्ये तद्विवेकस्य कृत्यम् ॥ २६ ॥

तथापि तावदसुन्व्ययेनापि स्वामिनः प्रयोजनमनुष्ठेयम् । तन्म-

---

क्रम् । अयमाशयः । अङ्गानि प्रधानकथानुरोधीन्येवेति नियमो नास्तीत्यत्र प्रधानकथानुरोधेनाप्यङ्गनिरूपणं कर्तुं युज्यत एव । रसप्रधानत्वे नाटकस्य रसानुगुण्यमेव प्रधानं प्रयोजनमङ्गानामिति । अत एवायं ग्रन्थकारः प्रधानकथानुरोधीन्यङ्गान्युदाहृतवानिति विज्ञायते । निष्क्रान्ताः सर्वे इत्युक्त्वा पुनरपि शान्त्यादिष्वाक्रमणोक्तेरप्रधानं कथानुरोधेनाप्यङ्गनिर्णयं कृतवानिति विज्ञायते । वर्णसंहारशब्दस्य बहुपात्रसमावेशलक्षणार्थस्वीकारेण क्षपणकभिक्षुकापालिककापालिनीरूपबहुपात्रसमावेशस्य कृतत्वात्तदनुसारेणाप्यस्माभिरङ्गनिर्णयः क्रियते । अत्र कश्चिद्विशेषो विन्दुप्रयत्नसाधनात्प्रतिमुखसन्धिः । अत्र वर्णसंहाराख्यप्रयत्नादङ्गमपि भवति । मुखसन्धावारम्भवदिति विलासपरिसर्पयोर्बीजानुगुण्येनैव निरूपणीयत्वात् । तदुभयं पूर्वमेव निरूपितम् । विधूतादिकमङ्गजातं निरूप्यते । ततः प्रविशति पत्रहस्तः पुरुष इति सक्रोधमित्यन्तेनार्तिनिरूपणाद्विधूतमङ्गम् । आः किमेतदित्यारभ्य मिथ्यादृष्ट्या सह प्रविशतीत्यन्तेनार्तिशान्तेः प्रतिपादनाच्छमाख्यमङ्गम् । सखि, त्वद्दर्शनेनात्मानमेव महाराजो गवेषयति । अतः किमुपालभिष्यतीतित्यनेन परिहासवचनान्नर्माख्यमङ्गम् । ननु कामस्य रतिरितीत्यारभ्य मुहूर्तमपि न तुष्यतीत्यनेनेर्ष्यालक्षणदोषप्रच्छादनान्नर्मद्युतिर्नामाङ्गम् । एवं निद्राकुलनयनेत्यारभ्य कीदृशं भयमित्यन्तेनोत्तरोत्तरोत्कर्षावहवाक्यविन्यासात्प्रगमनम् । भट्टारकेत्यारभ्य प्रविशाव इत्यन्तेन प्रकाशे संभोगनिरोधनेन मुखनिरोधनान्निरोधाख्यमङ्गम् । 'ज्ञातुं वपुः परिमितं क्षमते' इत्यादिश्लोकेन हेतुविशेषवद्वाक्येन पुष्पं नामाङ्गं निरूपितम् । आः परमेश्वरमैन्द्रजालिकमित्याक्षिपतीत्यनेन प्रत्यक्षनिष्ठुरत्वप्रतीतेः वज्रं नामाङ्गं निरूपितम् । भो भो महाभाग, कौतुकप्रयुक्ते वाक्कलहे न युक्तमेतत्तपस्विनि प्रहर्तुमित्युपपत्तिमद्वाक्यन्यासादुपन्यासमङ्गम् । खड्गं प्रतिसंहरतीत्यारभ्य यत्सर्वेऽस्मिन्महामोहस्य किंकरा इत्यन्तेन बहुपात्रसमावेशप्रतिपादनाद्वर्णसमाहारो नामाङ्गं त्रयोदशं निरूपितमिति ध्येयम् । तर्हि राजकार्यं मन्त्रितव्यमित्यादि प्रस्थापयाम इत्यन्तं गर्भसंधेरुपक्षेपमिति विज्ञेयम् । अतः परं गर्भसंधिः प्रस्तूयते । 'गर्भस्तु दृष्टनष्टस्य बीजस्यान्वेषणं मुहुः' । अस्यार्थः । मुखसंधेस्तोकोद्दिष्टतया लक्ष्यालक्ष्यस्य प्रतिमुख-

---

सा च विष्णुभक्तिमनुव्रतानुगता । तत्र तयोः समीपे कामान्मुक्तः कामरहितो धर्मोऽप्य-

ह्यभैरवीं विद्यां धर्मश्रद्धयोराहरणाय प्रस्थापयामः । (इति निष्क्रान्ताः सर्वे ।)

**शान्तिः**—आवामप्येवं हताशानां व्यवसायं देव्यै विष्णुभक्त्यै निवेदयावः ।

(इति निष्क्रान्ते ।)

इति श्रीकृष्णमिश्रविरचिते प्रबोधचन्द्रोदयनाम्नि नाटके तृतीयोऽङ्कः ॥ ३ ॥

---

संधौ सम्यग्व्यक्तस्य तत्रैव पुनर्नष्टस्य बीजस्यान्वेषणं गर्भसंधिः । अतश्चानिर्धारितैकान्त्यफलप्राप्त्याशात्मको गर्भसंधिः । पताकाप्राप्त्याशयोः संवन्धादय उत्पद्यन्ते । 'उपायापायशङ्काभ्यां प्राप्त्याशा प्राप्तिसंभवः' । अस्यार्थः । उपायस्य तदभावशङ्कायाश्चाभावान्निर्धारितैकान्त्यफलप्राप्तिः । प्राप्त्याशानाम पताकाव्यापिनी कथा । अयमर्थः । नाटकवस्तु द्विविधम् । प्रासङ्गिकमाधिकारिकं चेति । वस्तु कथा इतिवृत्तमिति पर्यायाः । 'तत्राधिकारिकं मुख्यमङ्गं प्रासङ्गिकं विदुः' । प्रधानभूतमाधिकारिकम् । यथा रामायणे रामसीतावृत्तान्तः । तदङ्गभूतं प्रासङ्गिकं यथा सुग्रीवविभीषणवृत्तान्त इति । अधिकारः फलं तत्स्वाम्यधिकारी तन्निर्वर्त्यमाधिकारिकम् । तदुक्तम्—'फलेन स्वामिसंवन्धोऽधिकारः 'फलस्वामी चाधिकारी,तेन निर्वर्त्यं फलपर्यन्तं नियुज्यमानमितिवृत्तमाधिकारिकमित्यर्थः। प्रासङ्गिकं परार्थस्य स्वार्थोऽयं प्रसङ्गतः स्वेतिवृत्तस्य परप्रयोजनानुषङ्गेण स्वप्रयोजनसिद्धिः । तदितिवृत्तं प्रासङ्गिकं प्रसङ्गनिर्वृत्तेः प्रासङ्गिकमिति । तदपि पताका प्रकरीति भेदाद्द्विविधम् । तदुक्तं दशरूपके—'सानुवन्धा पताका स्यात्प्रकरी च प्रदेशभाक्' । दूरं यदनुवर्तते सा पताका, सुग्रीवादिवृत्तान्तवत् । यदल्पं सा प्रकरी, मातलिवृत्तान्तवत् । अत्र विष्णुभक्तिर्विवेकस्य साहाय्यं कुर्वती सती स्वकार्यं महामोहनिरासं कुर्वाणा प्रबोधोदयं करोतीति तद्वृत्तान्तः पताका । प्राजापत्या सरस्वती स्वकार्यमनुषङ्गतया सत्वदर्शनविजयं कुर्वाणा महामोहनिरासं कुर्वती प्रबोधोदये उपकरोतीति प्रकरी अल्पविषया । विष्णुभक्तिवृत्तान्तस्य प्रबोधोदयपर्यन्तमनुवृत्तेः पताकात्वमिति भेदः । प्राप्तिसंभव इति । प्राप्तिः प्राप्त्याशा, संभव उत्पत्तिस्थानं यस्य गर्भसंधेः प्राप्तिसंभवः । अयमर्थः । गर्भसंधिः पताकाप्राप्त्याशासंभवादुत्पद्यते । क्वचित् पताकां विना प्राप्त्याशामात्रमवलम्ब्यैवोत्पद्यत इति पताकोपक्षेपकः कथ्यते । 'मूलं देवीसिद्धये विष्णुभक्ति'रित्यारभ्य यद्यप्य-

---

भूचेद्, तदा तद्विवेकस्य कृत्यं कार्यं सिद्धं मन्ये । जातमित्येव मन्य इत्यर्थः । निष्कामं कर्मानुतिष्ठतां सात्विकश्रद्धावतां विष्णुभक्त्यान्तःकरणशुद्धिद्वारा विवेकेन विद्योत्पद्यत

भ्युदयः प्रमाणादवधार्यते कामं, तथापि सुहृदामनिष्टाशङ्किमानमित्यन्तो गर्भसंधिः। तस्याङ्गानि द्वादश। अभूताहरणं, मार्गः, रूपं, उदाहरणम्, क्रमसंग्रहः, अनुमानं, तोटकं, अधिकं, बलं, उद्वेगः, संभवः, आक्षेपश्चेति। एतेषां लक्षणमुदाहरणसमये वक्ष्यामः। तन्महाभैरवीं विद्यां धर्मश्रद्धयोराहरणाय प्रस्थापयाम इत्यनेन कपटोपायप्रतिपादनात् अभूताहरणं गर्भसंधेः प्रथममङ्गम्। यथोक्तम्—'यत्तूदाहरणं प्रायः कपटोपायकल्पनम्' इति ॥ २६ ॥

इति श्रीमद्राजाधिराजपरमेश्वरश्रीवीरप्रतापश्रीकृष्णरायमहाराजसाम्राज्यधुरन्धरश्रीसाल्वतिम्मदण्डनायकभागिनेयनाण्डिल्लगोपमन्त्रिशेखरविरचितायां प्रबोधचन्द्रोदयव्याख्यायां चन्द्रिकासमाख्यायां तृतीयोऽङ्कः ॥ ३ ॥

---

इति भावः ॥ २६ ॥ असुव्ययेनापि प्राणनाशेनापि। व्यवसायमुद्योगम् ॥ इति प्रबोधचन्द्रोदयव्याख्याने तृतीयोऽङ्कः समाप्तः ॥ ३ ॥

## चतुर्थोऽङ्कः ।

(ततः प्रविशति मैत्री ।)

**मैत्री**—*सुदं मए मुदिताए सआसादो जधा महाभैरवी-सङ्गसणसम्भामादो भअवदीए विण्णुभत्तीए परित्तादा प्पिअसही सद्धेति । ता उक्कण्ठिदेण हिअएण पिअसहीं सद्धां कदा पेक्खिस्सम्[1] । (परिक्रामति ।)

(ततः प्रविशति श्रद्धा ।)

**श्रद्धा**—(सभयोत्कम्पम्[2])

घोरां नारकपालकुण्डलवतीं विद्युच्छटां दृष्टिभि-
र्मुञ्चन्तीं विकरालमूर्तिमनलज्वालापिशङ्गैः कचैः ।

---

* श्रुतं मया मुदितायाः सकाशाद्यथा महाभैरवीसङ्ग्रसनसंभ्रमाद्भगवत्या विष्णुभक्त्या परित्राता प्रियसखी श्रद्धेति । तदुत्कण्ठितेन हृदयेन प्रियसखीं श्रद्धां कदा प्रेक्षिष्ये ।

---

ततः प्रविशतीत्यादि । **श्रुतं मयेति** । अत्र मार्गनामकं गर्भसन्धेरङ्गं द्वितीयम् । श्रुतं मया मुदितायाः सकाशादिति तत्त्वार्थकीर्तनात् । लक्षणं तु—'तत्त्वार्थकीर्तनं मार्गः' इति । परिक्रमणमभिनयविशेष इत्युक्तं प्राक् । चतुर्दिशमिति टावन्तोऽयं दिक्शब्दः । 'टापं चैव हलन्तानां यथा वाचा निशा दिशा' इति स्मरणात् । चतस्रो दिशः समाहृताश्चतुर्दिशम् । 'तद्धितार्थ–' इत्यादिना समासः । पात्रादित्वान्न ङीप् ॥—**घोरामिति** । नाराणि नरसंबन्धीनि कपालानि करोटयस्तान्येव कुण्डले तद्वतीं, विद्युच्छटां विद्युद्वल्लीं दृष्टिभिर्मुञ्चन्तीं, अनलज्वालापिशङ्गैः कचैश्च विकरालमूर्तिं भयंकरस्वभावाम्, दंष्ट्रा

---

तृतीयेऽङ्के पाखण्डतिरस्कृतिं विधायेदानीं चतुर्थेऽङ्के पाखण्डिप्रेरितमहाभैरवीतः सावधानया विष्णुभक्त्या श्रद्धाधर्मौ रक्षिताविति संसूचयन्नाह—तत इति । [मैत्री—श्रुतं मया मुदितायाः सकाशात्, यथा महाभैरवीग्रसनसंभ्रमाद्भगवत्या विष्णुभक्त्या परित्राता प्रियसखी श्रद्धेति । तदुत्कण्ठितेन हृदयेन प्रियसखीं श्रद्धां कुत्र प्रेक्षिष्ये ।] ग्रसनसंभ्रमाद्गिलनभयात् । उत् उत्कटः कम्पो यत्र यस्यां क्रियायां यथा स्यात्तथा ॥—घोरामिति । अहो इत्याश्चर्ये । मे मनोऽद्यापि कदलिकेव वेपते कम्पते । कथंभूताया इव मे । महाभैरवीं पश्यन्त्या इव आलोकयन्त्या इव । कीदृशीं महाभैरवीम् । घोरां महाभ-

---

१ 'पिअसही कहिं प्रेक्खिस्सं' इति पाठः । २ 'सभयोत्कम्पं पठति' इति पाठः ।

दंष्ट्राचन्द्रकलाङ्कुरान्तरललज्जिह्वां महाभैरवीं
पश्यन्त्या इव मे मनः कदलिकेवाद्याप्यहो वेपते ॥१॥

मैत्री—(स्वगतम्[१]) * अए, एसा मे पिअसही सद्धा भअसमुम्भान्तहिअआकलिदकम्पतरलेहिं अङ्गेहिं किंवि मन्तअन्ती संमुहागदंवि मं ण लक्खेदि। ता आलविस्सं दाव। (प्रकाशम्) पिअसहि सद्धे, किंति तुमं उक्कलिदहिअआ मंवि ण विलोएदि।

श्रद्धा—(विलोक्य सोच्छ्वासम्) अये, मे प्रियसखी मैत्री।

---

* अये, एषा मे प्रियसखी श्रद्धा भयसमुद्भ्रान्तहृदयाकलितकम्पतरलैरङ्गैः किमपि मन्त्रयन्ती संमुखागतामपि मां न लक्षयति। तस्मादालपिष्यामि तावत्। प्रियसखि श्रद्धे, किमिति त्वमुत्कलितहृदया मामपि न विलोकयसि।

---

एव चन्द्रकलाङ्कुराश्चन्द्ररेखास्तदन्तरे ललन्ती खेलमाना जिह्वा यस्याः सा ताम् ॥ १ ॥ भयसमुद्भ्रान्तमिति। भयेन भीत्या समुद्भ्रान्तमनवस्थितम्। आक्रान्तमिति यावत्। तच्च तच्च तद्धृदयं च तस्मिन्नाकलित उत्पन्नो यः कम्पस्तेन तरलानि चञ्चलानि तैरङ्गैरवयवैरुपलक्षिता किमपि मन्त्रयन्ती विचारयन्ती सुखागतां संमुखमागतामपि मां न लक्षयति न पश्यति। भयाक्रान्तचित्तत्वेन पराक्तयेति भावः। अत्र किमिति न लक्षयसीत्यनेन, किमपि मन्त्रयन्तीत्यनेन च वितर्कप्रतीते रूपाख्यं

---

यावद्दाम्। पुनः कीदृशीम्। नुः इमे नारे ते च ते कपाले च ते एव कुण्डले विधेते यस्याः सा ताम्। पुनः कीदृशीम्। दृष्टिभिर्विद्युच्छटां विद्युन्मालां मुञ्चन्तीम्। दृष्टिभिरिति बहुवचनं त्रिनेत्रत्वेन। पुनः कथंभूताम्। कचैर्विकराला मूर्तिर्यस्यास्ताम्। किंभूतैः कचैः। अनलोऽग्निस्तज्ज्वालावत्पिशङ्गाः कपिशास्तैः। पुनः कीदृशीम्। दंष्ट्रा एव चन्द्रकलाङ्कुरास्तदन्तरे मध्ये ललन्ती खेलन्ती जिह्वा यस्यास्ताम् ॥ १ ॥ [मैत्री—अये, एषा मे प्रियसखी श्रद्धा संभ्रमोद्भ्रान्तहृदया कदलिकाकम्पतरलैरङ्गैः किमपि मन्त्रयन्ती संमुखागतामपि मां न प्रेक्षते। तत आलपिष्यामि तावत्। प्रियसखि श्रद्धे, किमिति त्वमुत्तापितहृदया मामपि न विलोकयसि।] श्रद्धा स्व-

---

१ 'स्वगतं' इति मुद्रितपुस्तके नास्ति। २ 'भअसंभमुब्भन्तहिअआ—कअलिआकम्पतरलेहिं— मं ण पेक्खदि—उत्ताविअहिअआ—विलोएसि' इति पाठः।

काळरात्रिकरालास्यदन्तान्तर्गतया मया ।
दृष्टासि सखि सैव त्वं पुनरत्रैव जन्मनि ॥ २ ॥

[1]तदेहि गाढं परिष्वजस्व माम् ।

**मैत्री**—(तथा कृत्वा) *सहि, तधा [2]विण्णुभत्तिणिब्भत्थिदप्पभावाए महाभैरवीए कहं दे अज्जवि वेवन्दि अङ्गाइं ।

(श्रद्धा घोरामित्यादि पठति ।)

**मैत्री**—(सत्रासम्) † अहो, हदासा घोळदंसणा । अध ताए आगदाए किं किदम् ।

**श्रद्धा**—

श्येनावपातमवपत्य पदद्वये मा-
मादाय धर्ममपरेण करेण घोरा ।

---

* सखि, तदा विष्णुभक्तिनिर्भर्त्सितप्रभावाया महाभैरव्याः कस्मात्तेऽद्यापि वेपन्तेऽङ्गानि ।

† अहो, हताशा घोरदर्शना । अथ तयागतया किं कृतम् ।

---

तृतीयमङ्गम् । 'रूपं वाक्यं वितर्कवत्' इति तल्लक्षणात् । **कालरात्री**त्यादिश्लोकः स्पष्टार्थः ॥ २ ॥ **अहो हताशा घोरदर्शना** । दृश्यत इति दर्शनं घोरं दर्शनं यस्याः सा । दुर्निरीक्ष्येत्यर्थः ॥—**श्येनावपातमिति** । श्येनावपातं श्येनेन तुल्यमवपत्य । 'कर्तर्युपमाने' इति णमुल् । कषादिषु यथाविध्यनुप्रयोग इति सोपसर्गस्याप्यनुप्रयोग इति ध्येयम् । मां पदद्वये आदाय गृहीत्वा । एकेन करेण

---

दुःखं निवेदयति—**कालरात्रीति** । कालरात्रेरिव करालं भयावहमास्यं मुखं तस्मिन्मुखे ये दन्तास्तदन्तर्गतया तदन्तःप्रविष्टया मया हे सखि, या त्वं पूर्वं दृष्टा सैव त्वमत्रैव जन्मनि पुनर्दृष्टासि ॥ २ ॥ तथा कृत्वा । परिष्वज्येत्यर्थः । [मैत्री—सखि, तथा विष्णुभक्तिनिर्भर्त्सितप्रभावाया महाभैरव्याः कथं तेऽद्यापि वेपन्तेऽङ्गानि ।] घोरामित्यादीति पूर्वोक्तं पद्यमिति शेषः । [मैत्री—अहो, हताशा घोरदर्शना । अथ तयागतया किं कृतम् ।] **श्येनावपातमिति** । सा भैरवी श्येनवदव उपरि पातः पतनं यत्र यस्यां क्रियायां यथा भवति तथा । श्येनावपातमवपत्यास्मदुपरि पतित्वा पदद्वये मामा-

---

१ 'तदेहि परिष्वजस्व' इति मुद्रितपुस्तकपाठः । २ 'विण्णुभत्तीणिब्भच्छिअप्पहावाए' इति पाठः ।

वेगेन सा गगनमुत्पतिता नखाग्र-
कोटिस्फुरत्पिशितपिण्डयुतेव[1] गृध्री ॥ ३ ॥

मैत्री—*हद्धी हद्धी । (इति मूर्च्छति ।)

श्रद्धा—सखि, समाश्वसिहि समाश्वसिहि ।

मैत्री—(आश्वस्य) †तदो तदो ।

श्रद्धा—ततः परमस्मदीयार्तनादोपजातदयोर्द्रचित्तया[2] देव्या—

भ्रूभङ्गभीमपरिपाटलदृष्टिपात-
मुद्गाढकोपकुटिलं च तथा[3] व्यलोकि ।
सा वज्रपातहतशैलशिलेव भूमौ
व्याभुग्नजर्जरशिरास्थि[4] यथा पपात ॥ ४ ॥

---

* हा धिक् हा धिक् ।

† ततस्ततः ।

---

मम पदद्वये धृत्वेत्यर्थः । अत्र कर्मैकदेशस्य पदद्वयस्य क्रियाधारत्वविवक्षया सप्तमी । 'ललाटे भर्तारं चरणकमलेन ताडयति' इति वत् । अपरेणान्येन करेण धर्मं गृहीत्वा गृध्रीव गगनमुत्पततीत्यन्वयः । गृध्रीति 'जातेरस्त्रीविषयादयोपधात्' इति ङीप् । शिष्टं स्पष्टम् । अत्रोत्प्रेक्षालंकारः । 'संभावनमदुत्प्रेक्षा प्रकृतस्य परेण यत्' इति लक्षणात् ॥ ३ ॥ हा धिक् हा धिक् । निर्वेदे प्राकृतभाषायां हद्धीति निपातो हा धिक् शब्दवदित्याह वृत्तिकारः ॥—भ्रूभङ्गेत्यादि । भ्रूभङ्गो भ्रुकुटी भङ्गस्तेन भीमो भयंकरः स चासौ कोपवशात्पाटलः शोणश्च दृष्टिपातो यस्मिन्विलोकनकर्मणि तत् । उद्गाढश्चासौ कोपश्च तेन कुटिलं यथा तथा तेन प्रकारेण

---

दाय चरणयोर्मा धृत्वा अपरेण वामेन करेण धर्ममादाय वेगेन शीघ्रं गगनमुत्पतितोड्डीय गता । केव गृध्रीव । कीदृशी गृध्री । नखानामग्राणि तेषां कोट्यो वक्रभागास्तेषु स्फुरत्प्रकाशमानं पिशितस्य मांसस्य पिण्डयुगं पिण्डद्वयं यस्याः सा ॥३॥ [मैत्री—हा धिक् हा धिक् ।] [मैत्री—ततस्ततः ।] ततः परमिति । अस्मदीय आर्तो यो नादस्तस्मादुपजाता या दया तया आर्द्रया कोमलया देव्येत्यर्थः ॥—भ्रूभङ्गेति । तया विष्णुभक्त्या भ्रुवो भङ्गो वक्रता तया भीमो भयानकः सक्रोधो वा परि समन्तात्पाटलः श्वेतरक्तो दृष्टिपातो यत्र यस्यां क्रियायां यथा स्यात्तथा । उद्गा-

---

१ 'पिशितपिण्डयुगेव' इति पाठः । २ 'दयार्द्रया देव्या' इति पाठः । ३ 'तया' इति पाठः । ४ 'व्याभग्नजर्जर' इति पाठः ।

**मैत्री**—*दिट्ठिआ मए दिट्ठा कुद्धसाद्दूलमुहादो विब्भट्टा मिईव क्खेमेण संजीविदा पिअसही।

**श्रद्धा**—ततो देव्या समुपजाताभिनिवेशमुक्तमेवमस्य[2] दुरात्मनो महामोहहतकस्य मामप्यवज्ञाय प्रवर्तमानस्य समूलमुन्मूलनं करिष्यामीति। आदिष्टा चाहं देव्या। यथा गच्छ श्रद्धे, ब्रूहि विवेकम्। कामक्रोधादीनां निर्जयायोद्योगः क्रियताम्। ततो वैराग्यं

*दिष्ट्या मया दृष्टा क्रुद्धशार्दूलमुखाद्विभ्रष्टा मृगीव क्षेमेण संजीविता प्रियसखी।

व्यलोकि दृष्टा सा भैरवी यथा येन प्रकारेण वज्रपातहतशैलशिला वज्रायुधखण्डितपर्वतखण्डमिव व्याभुग्नजर्जरतरास्थि। क्रियाविशेषणमेतत्। भुवि पपात। ततः परमित्यारभ्य पपातेत्यनेन विष्णुभक्तेरुत्कर्षप्रतिपादनादुदाहरणाख्यं चतुर्थमङ्गम्। तल्लक्षणमुक्तम्—'उत्कर्षेणान्वितं वाक्यमुदाहरणमिष्यते' इति॥ ४॥ दिष्ट्या दैववशात्। **तत इति**। समुपजाताभिनिवेशं अभिनिवेशः समुपजातस्तदानीमेवोत्पन्न इत्यर्थः। अभिनिवेश आग्रहः। क्रियाविशेषणमेतत्। एवमस्येत्यारभ्य क्रियतामित्यन्तेन महामोहवधूरूपचिन्त्यमानार्थसंप्राप्तेः प्रतिपादनात्क्रमाख्यं पञ्चममङ्गम्। लक्षणं तु 'चिन्त्यमानार्थसंप्राप्तिः क्रम इत्यभिधीयते'। अत्रैव प्रधानकथानुरोधेन गर्भसंधेरङ्गमभूताहरणमप्युक्तम्। एवमस्य दुरात्मनो

ढोऽति कठिनो यः कोपस्तेन कुटिलं यथास्यात्तथा तेन प्रकारेण व्यलोक्यवलोकितम्। तथा कथम्। यथा येन प्रकारेण सा भैरवी भूमौ विशेषेण आ समन्ताद्भग्नं जर्जरं विशीर्णं शिरोऽस्थि शिरःकपालं यस्यां क्रियायां यथास्यात्तथा पपात। केव। वज्रपातेन विद्युत्पातेन हता पतिता शैलस्य पर्वतस्य शिलेव॥ ४॥ [मैत्री—दिष्ट्या मृगीव शार्दूलमुखाद्विभ्रष्टा क्षेमेण संजीविता प्रियसखी।] शार्दूलमुखाद्व्याघ्रमुखात्। 'शार्दूलद्वीपिनौ व्याघ्रे' इत्यमरः। देव्या विष्णुभक्त्या समुपजात उत्पन्नोऽभिनिवेशोऽभिमानो यत्र यस्यां क्रियायां यथा स्यात्तथा एवमुक्तम्। एवं कथं तत्राह—**महाराजस्येत्यादि**। दुरात्मनः पापिष्ठस्य महामोहहतकस्य महामोहप्रेतस्य। अवज्ञाय तिरस्कृत्य। उन्मूलनमुत्पाटनम्। आदिष्टेति। आज्ञप्तेत्यर्थः। देव्या विष्णुभक्त्या। किं विवेकं प्रति वक्तव्यमित्याह—कामक्रोधादीनामिति। ततोवैराग्यमिति। तेषु कामादिषु जितेषु वैराग्यमुत्पद्यते। अहं यथासमयं यथोदिष्टकालं

१ 'दिट्ठिआ मिइव्व सद्दूलमुहादो विब्भट्टा क्खेमेण संजीविदा' इति पाठः।
२ 'मेवं महाराजस्य दुरात्मनो—वर्तमानस्य—सेनामनुग्रहिष्यामि' इति पाठः।

प्रादुर्भविष्यति । अहं च यथासमयं प्राणायामाद्यनुप्राणनेन युष्मत्सैन्यमनुग्रहीष्यामि । ऋतंभरादयश्च देव्यः शान्त्यादिकौशलेनोपनिषद्देव्या संगतस्य भगवतः प्रबोधोदयमनुविधास्यन्तीति । तदहमिदानीं विवेकसंनिधिं प्रस्थिता । त्वं पुनः किमाचरन्ती दिवसानतिवाहयसि ।

मैत्री—*अह्मेवि विण्णुभत्तीए अण्णाए चतस्सो वहिणीओ विवेअसिद्धिकालणेण महाप्पणं हिअए अहिवट्टह्मो । (संस्कृतमाश्रित्य ) तथाहि—

* वयमपि विष्णुभक्तेराज्ञया चतस्रो भगिन्यो विवेकसिद्धिकारणेन महात्मनां हृदयेऽभिवर्तामहे ।

महामोहहतकस्य मामप्यवज्ञाय प्रवर्तमानस्येति वाक्येन मामपि सर्वकपटोपायध्वंसिनीमपि तिरस्कृत्य कपटोपायकल्पनरूपमहाभैरव्या श्रद्धाकर्षणे प्रवर्तमानत्वोक्तेन चाभूताहरणस्य गर्भसन्धेः प्रथमाङ्गतया पञ्चमत्वं न युज्यत इति वाच्यम् । 'अङ्गानां च विपर्यासो रसानुगुणवर्णने' इति वचनाद्विपर्यस्ततयाङ्गवर्णनं न विरुध्यते । चतुर्थाङ्गस्य प्रधानाप्रधानकथावलम्बनेन प्रवर्तमानत्वादङ्गान्युभयसाधारण्येन प्रतिपादितानि । तत्र प्रधानकथानुरोधेन पताकाया अभावात्तृतीयाङ्कान्तपर्यन्तं प्रतिमुखसन्धिः । तत्रान्तिममङ्गवर्णसंहारः । तदनन्तरं पताकां विनैव मार्गमेवाङ्गमूरीकृत्य प्रवर्तते गर्भसन्धिः । अत्र प्रधानकथावलम्बनमेवाङ्गे लेखक्षेपपताकमङ्गोल्लेखनमिति सर्वमनवद्यम् । अतिवाहयसि । यापयसीत्यर्थः । संस्कृतमाश्रित्येति । अत्र संस्कृताश्रयणं श्रद्धायाः शीघ्रप्रति-

प्राणायामादिभिः । आदिशब्दान्नामकीर्तनैरनुप्राणनेन युष्मत्सैन्यं तत्त्वविचारादिरूपमनुग्रहीष्यामि । ऋतं सत्यं भरति बिभर्ति सा ऋतंभरा प्रज्ञा । पतञ्जलिनाप्युक्तम् 'ऋतंभरा तत्र प्रज्ञा' इत्यादि । ऋतंभरादयश्च देव्यः शान्त्यादिरूपेण कौशलेन समीचीनसाधनेन भगवतः परमात्मनोऽनुविधास्यन्तीति । अनु अज्ञानजन्यावरणनाशानन्तरं विधास्यन्ति करिष्यन्ति । विपूर्वको धाञ् करणार्थे वर्तते । अहं श्रद्धा । मैत्री—वयमपि विष्णुभक्तेराज्ञया चतस्रो भगिन्यो विवेकसिद्धिकारणेन महात्मनां हृदये वसामः ।] संस्कृतमाश्रित्य । मैत्री ब्रूते इति शेषः । महात्मनां हृदये वसाम इत्युक्तं

१ 'बहिणीआ—विवेकसिद्धि—हिअए वसामो' इति पाठः ।

ध्यायन्निमां सुखिनि दुःखिनि चानुकम्पां
पुण्यक्रियासु मुदितां कुमतावुपेक्षाम् ।
एवं प्रसादमुपयाति हि रागलोभ-
द्वेषादिदोषकलुषोऽप्ययमन्तरात्मा ॥ ५ ॥

तदेवं चतस्रोऽपि भगिन्यो वयं तदभ्युदयकारणेनैव वासरान्न-यामः । कुत्रेदानीं प्रियसखी महाराजमालोकयति ।

श्रद्धा—देव्या एतदेवमुक्तम् । अस्ति राढाभिधानो जनपदः । तत्र भागीरथीपरिसरालंकारभूते चक्रतीर्थे मीमांसानुगतया मत्या कथंचिद्धार्यमाणप्राणो व्याकुलेनान्तरात्मना विवेक उपनिषद्देव्याः संगमार्थं तपस्तपस्यतीति ।

---

पत्त्यर्थम् । चतसृणां भगिनीनां महानुभावहृदये निवासस्य फलमाह—ध्याय-न्नित्यादि । अन्तरात्मा जीवः । इमामिति । इमां मैत्रीमित्यर्थः । अनुकम्पां दयाम् । मुदितां मुदम् । मुदपुण्यक्रियाशब्दाः क्रियावत्युपचारात्प्रयुज्यन्ते । उपेक्षामौदासीन्यं ध्यायन्भावयन् । कुर्वन्निति यावत् । प्रसादमुपयातीत्यर्थः । अयमर्थः । अन्तरात्मा रागद्वेषलोभादिकलुषोऽपि चतसृभिर्मैत्र्यादिभिर्युक्तः सन् कतकरजोमिश्रितजलवत्प्रसन्नो भवतीत्यर्थः । एतदुक्तं भवति । उपेक्षया कुमति-संसर्गनिरासात् रागादयः परास्ताः । पुण्यवत्सु सज्जनेषु मुदितासंबन्धात्संगतिव-शान्मोहनिरासः । दुःखिनीचानुकम्पया क्रोधादिनिरासः । सुखिनि मैत्र्या द्वेषा-दिनिरासः । मैत्र्यादिभिश्चित्तधर्मैरन्तःकरणे निर्मलीकृते सति तत्संवलित आत्मा नि-र्मलो भवतीत्यर्थः ॥५॥ तदेवमित्यारभ्य तपस्यतीत्यन्तं सुगमम् । तपस्यति तपश्च-

---

तदाह । तथाहि—ध्यायन्तीति । ते महात्मानः सुखिनि जीवे मां मैत्रीं ध्यायन्ति चि-न्तयन्ति । दुःखिनि चानुकम्पां कृपां ध्यायन्ति । पुण्यक्रियेषु मुदितां संतुष्टतां ध्यायन्ति । कुमतौ कुबुद्धावुपेक्षामुदासीनतां ध्यायन्ति । एवं संपादिते तेषां किं कार्यं सिद्धमत आह । एवं सत्ययमन्तरात्मा प्रसादं प्रसन्नत्वमुपयाति । ननु स्वरसनिर्मलस्य की-दृशी प्रसन्नता नामेत्याशङ्क्याह—रागेति । रागलोभद्वेषादिदोषैः कलुषः । स्वभाव-तस्तु निर्मल इति भावः ॥ ५ ॥ तदेवमित्याद्यालोकयतीत्यन्तं सुबोधम् । प्रियसख्यु-पनिषत् । महाराजं विवेकम् । राढा इत्यभिधानं नाम यस्य तादृशो जनपदो देशः । परिसरो निकटप्रदेशः । मीमांसानुगता भाट्टमतानुरोधिनी बुद्धिर्व्याकुलेनान्तरात्मना ।

---

१ 'ध्यायन्ति मां' इति पाठः । २ 'पुण्यक्रियेषु' इति पाठः । ३ 'तदभ्युदय-व्यापारेणैव' इति पाठः ।

मैत्री—*ता गच्छदु पिअसही । अहंवि स्सकं णिओअं[1] अणुचिट्ठामि ।

श्रद्धा—एवं भवतु । (इति निष्क्रान्ते ।)

(विष्कम्भकः ।)

(ततः प्रविशति राजा प्रतीहारी च ।)

राजा—आः पाप महामोहहतक, सर्वथा हतस्त्वयायं महाजनः । तथाहि—

शान्तेऽनन्तमहिम्नि निर्मलचिदानन्दे तरङ्गावली-
निर्मुक्तेऽमृतसागराम्भसि मनाङ्मग्नोऽपि नाचामति ।

* तद्गच्छतु प्रियसखी ! अहमपि स्वकं नियोगमनुतिष्ठामि ।

रति । 'कर्मणो रोमन्थ–' इत्यादिना क्यच् । विष्कम्भक इति । विष्कम्भको निर्दिष्ट इत्यर्थः । ततः प्रविशतीति । उपनिषत्संगमार्थं तपस्यतीत्यनेन पात्रसूचनम् । शान्तेऽनन्तमहिम्नीति । शान्तेऽविद्याविक्षेपरहिते निर्मले निर्विकारे । उदासीन इति यावत् । अनन्तमहिम्नि । अनन्तश्चासौ महिमा चेति विशेषणसमासः । तस्मिन् । अनन्तोऽपरिच्छिन्नः देशतः कालतो वस्तुतश्च परिच्छेदरहितः सर्वदेशकालव्यापित्वाद्देशकालपरिच्छेदरहितो वस्त्वन्तराभावात् । वस्तुतः परिच्छेदरहिते महिम्नि भूम्नि विभुस्वरूपे 'यो वै भूमा तत्सुखम्' इति श्रुतेः । शान्तेऽनन्तमहिम्नि जीवे । अविद्यायातं संसर्गं निवारयति । निर्मले 'निर्मलं निष्कलं शान्तम्' इति श्रुतेः । जडरूपतां व्यावर्तयति चिदिति । दुःखरूपतां व्यावर्तयति आनन्देति । शीतोष्णवद्विशेषणसमासः । तरङ्गावलीनिर्मुक्ते निस्तरङ्गे षड्-

उपनिषदो विरहादिति भावः । [मैत्री—तद्गच्छतु प्रियसखी, अहमपि स्वकं नियोगमनुतिष्ठामि ।] विष्कम्भको नाम पूर्वकथासंक्षेपः । प्रतीहारी दौवारिका । शान्ते इति । अयं जनः अमृतं नास्ति मृतं मरणं यत्र तदमृतं ब्रह्म तदेव समुद्रजलं तत्र मग्न आप्लुतो मनागपि स्वल्पमपि नाचामति न पिबति । नानुभवतीत्यर्थः । अन्यसागरजलापेक्षया विशेषमाह । कीदृशेऽमृतसागराम्भसि । शान्ते निरुपद्रवे । अन्यत्तु न तथा नक्रशिशुमाराद्युपद्रुतत्वात् । अनन्तो निःसीमा महिमा सामर्थ्यं यस्य तस्मिन् । अन्यत्तु गणनीयसामर्थ्यम् । निर्मलदेहेन्द्रियादिविषयमलरहितः चिन्मात्रो ज्ञानरूप आनन्दः सुखं यस्मिन् । तरङ्गा उच्चावचविकारास्तेषामावलिः पङ्क्तिस्तया निर्मुक्ते रहिते ।

[1] 'णिओगं' इति पाठः ।

निःसारे मृगतृष्णिकार्णवजले श्रान्तोऽपि मूढः पिब-
त्याचामत्यवगाहतेऽभिरमते मज्जत्यथोन्मज्जति ॥ ६ ॥

अथवा संसारचक्रवाहकस्य महामोहस्याबोधो मूलम् । तस्य च तत्त्वावबोधादेव निवृत्तिः । यतः—

अमुष्य संसारतरोरबोधमूलस्य नोन्मूलविनाशनाय ।
विश्वेश्वराराधनबीजजातात्तत्त्वावबोधादपरोऽभ्युपायः ॥ ७ ॥

---

र्निरहितेऽमृतसागराम्भसि ब्रह्मामृताम्बुधौ स्वतो मग्नोऽपि मनागपि किंचिदपि नाचामति नानुभवति । स्वरूपानन्दं नानुसंधत्त इत्यर्थः । अपि तु निःसारेऽतितुच्छे मृगतृष्णिकार्णवजले मिथ्याभूतसंसारे विमूढः स्वस्वरूपमजानानः श्रान्त आयस्तः पिबति, आचामति, अवगाहते, अभिरमते, मज्जति, उन्मज्जति च । महाजन इति शेषः । पिबतीत्यनेनातितृष्णावशात्पानम्, आचामतीत्यनेनाल्पपानम्, अवगाहनमन्तःप्रवेशः, अभिरमणं बालक्रीडा, मज्जनोन्मज्जने स्पष्टे । अयं भावः । सत्यज्ञानानन्तानन्दात्मकं स्वस्वरूपमजानानो जीवः संसारदशामापन्नोऽविद्यावशादन्तःकरणधर्मान्दुःखदुरितादीन्, प्राणधर्मान्क्षुत्पिपासादीन्, देहधर्माञ्जरामरणादीन्, ममाहमित्यभिमानमूलकान् पुत्रमित्रकलत्रादिगतसाकल्यवैकल्यादीनात्मन्यध्यस्य विनश्यतीति ॥६॥—अथवेत्यादि । संसारचक्रे वाहकस्य प्रापकस्य । प्रवर्तकस्येत्यर्थः । महामोहस्याहंममाभिमानरूपस्य कार्याज्ञानस्याबोधः कारणरूपमनाद्यज्ञानं मूलम् । तत्त्वबोधादेव ब्रह्मात्मसाक्षात्कारादेव ॥—अमुष्येति । अमुष्य परिदृश्यमानस्य संसारतरोः संसारवृक्षस्य । संसारवृक्षत्वनिरूपणं श्रौतम्—'ऊर्ध्वमूलमवाक्शाखं वृक्षं यो वेद संप्रति' इत्यादिश्रुतिभ्यः । अनेन संसारस्य वृक्षत्वनिरूपणेन बीजाङ्कुरत्वप्रतीतेस्तद्वदनादित्वं संसारस्य गम्यते । तद्बीजं तावदाह । अबोधमूलस्येति । अबोधो भावरूपाज्ञानं स एव मूलं बुध्नो बीजमा-

---

अन्यस्य तरङ्गत्वान्निःसारे निस्तत्त्वे कार्यासमर्थत्वात् । मृगतृष्णिका मरुमरीचिका तदेवार्णवजलं सागरपानीयं तत्र श्रान्तो मूढोऽज्ञः पिबति, आचामति, अवगाहते, अभिरमते, मज्जति, उन्मज्जति । मृगतृष्णारूपसंसारनिपतितो वञ्चित इति भावः । मृगतृष्णायामिदं जलमिति मत्वा मनसैव पानाचमनावगाहनाभिरमणमज्जनोन्मज्जनान्याचरतीति । यद्वा पिबतीत्यादौ पानाद्यनुकूलयत्नवानित्यर्थः । तथाच स्थले च जलभ्रान्त्या युधिष्ठिराधिष्ठितसभायां दुर्योधनस्य पानावगाहनाद्यभावेऽपि तदनुकूलयत्नेऽपि नानुपपत्तिरुत्तरार्धे इत्यर्थः ॥ ६ ॥ पूर्वफक्किकायामुक्तं श्लोकेनाह—यतः—अमुष्येति । अमुष्य इदानीमुपलभ्यमानस्य संसारतरोः संसारवृक्षस्याबोधोऽभावरूपाज्ञानं तदेव मूलमारम्भकं यस्य तादृशस्य उन्मूलविनाशनाय सवासनाज्ञानविनाशनाय तत्त्वाव-

'प्रायः सुकृतिनामर्थे देवा यान्ति सहायताम् ।
अपन्थानं तु गच्छन्तं सोदरोऽपि विमुञ्चति ॥'

इति तत्त्वविदो व्याहरन्ति । तथा तु देव्या विष्णुभक्त्या संदिष्टं 'उद्योगः कामादिविजयविषये क्रियताम्' इति । अहमपि भवदर्थे गृहीतपक्षेति । तत्र कामस्तावत्प्रथमो वीरो वस्तुविचारेणैव जीयते । तद्भवतु । तमेव तावद्विजयार्थमादिशामि । वेदवति, आहूयतां वस्तुविचारः ।

---

दिकारणं यस्य तस्येति यावत् । विमूलनायोन्मूलनाय विश्वेश्वरस्य जगदीश्वरस्य जगन्नाथस्याराधनमुपासनं तदेव बीजमुत्पत्तिकारणं तस्माज्जातात्तत्त्वप्रबोधात् तत्त्वं स्वयाथात्म्यं तस्य बोधो ज्ञानं तस्मात् । भक्तियोगानन्तरभावित्वाज्ज्ञानयोगस्येति भावः । तद्व्यतिरेकेण संसारवृक्षोच्छेदकोऽन्योऽभ्युपायो नास्ति । अबोधतत्कार्ययोर्बोधैकनिवर्त्यत्वादिति भावः । अत्र 'अन्यारात्–' इत्यादिसूत्रेऽन्यशब्दार्थग्रहणादपरशब्दयोगेऽपि पञ्चमी । अत्र संसारस्य बोधान्निवृत्त्या अबोधकार्यत्वमनुमानतयैव नापरोऽभ्युपाय इत्युक्तेरनुमानाख्यमङ्गमुक्तम् । तल्लक्षणं तु–'अभ्यूहो लिङ्गतः सम्यगनुमानमुदीरितम्' इति ॥ ७ ॥ प्राय इत्यादि । व्यवसित उद्युक्ते कर्मणि । भावे निष्ठा व्यवसाये । अथवा आभाषकमेतत् । गृहीतपक्षा गृहीतसाहाय्यका । कृतपक्षपातेत्यर्थः । यद्देव आज्ञापयतीति । कामहतक इति । हत इव हतकः । उपमार्थे कः । तुच्छ इति यावत् । 'कुत्सितानि कुत्सनैः' इति समासः । तत्कथमित्यत आह । विचाराभावनिबन्धनः कान्तादिषु योऽयं सौन्दर्याभिमानस्तेन वर्धिष्णुर्वर्धनशीलः अहमेव सुन्दर इति वृथाभि-

---

बोधात्तत्त्वसाक्षात्कारादपरोऽन्योऽभ्युपायः साधनविशेषो नैवास्ति । यतो ज्ञानमज्ञानस्य घातकमित्युक्तत्वात् । किंभूतात्तत्त्वसाक्षात्कारात् । विश्वेश्वरस्याराधनं सेवनं मननादिरूपं तदेव बीजं कारणं तस्माज्जातस्तस्मात् । तच्च 'ईश्वरचोदनाभिव्यक्ताद्धर्मादेव' इति कणादमुनिनाप्यमाणि ॥ ७ ॥ अस्मिन्नर्थे देवा अपि सहकारिणो भवन्तीत्याह—प्राय इति । तथा च देव्येति । देव्या विष्णुभक्त्या संदिष्टमाज्ञप्तम् । उद्योगः प्रयत्नः । अहमपि । विष्णुभक्तिरपीत्यर्थः । तमेव वस्तुविचारमेव । निर्जयार्थमिति । कामस्येति शेषः । तावदादौ निर्जयार्थमादिशाम्याज्ञापयामि । या वेदवती

---

१ 'प्रायश्च सुकृतिनां व्यवसितेऽर्थे देवा यान्ति सहायताम्' इत्येव पाठो मुद्रितपुस्तकेऽस्ति । अत्र तु पद्यरूपेण निर्दिष्टः ।

**प्रतीहारी**—*जं देवो आणवेदि । (इति निष्क्रम्य वस्तुविचारेण सह प्रविशति ।)

**वस्तुविचारः**—अहो निर्विचारसौन्दर्याभिमानवर्धिष्णुना कामहतकेन वञ्चितं जगत् । अथवा दुरात्मना महामोहेनैव । तथाहि—

कान्तेत्युत्पललोचनेति विपुलश्रोणीभरेत्युन्नम-
त्पीनोत्तुङ्गपयोधरेति सुमुखाम्भोजेति सुभ्रूरिति ।
दृष्ट्वा माद्यति मोदतेऽभिरमते प्रस्तौति विद्वानपि
प्रत्यक्षाशुचिपुत्तिकां स्त्रियमहो मोहस्य दुश्चेष्टितम् ॥ ८ ॥

---

* यद्देव आज्ञापयति ।

---

मानात्प्रगल्भमानेनेति च गम्यते । 'अलंकृञ्—' इत्यादिनेष्णुच् । अथवा दुरात्मन महामोहेनैव वञ्चितमित्यनुषज्यते । अतः स एव हन्तव्य इति भावः ॥—कान्तेति । सुन्दरीति उत्पललोचनेति इन्दीवराक्षीति विपुलश्रोणीभरेति उन्नमत्पीनोत्तुङ्गपयोधरेति । उन्नमन्तौ प्रतिक्षणे वर्धमानौ पीनौ पृथुलावुत्तुङ्गावुन्नतौ पयोधरौ कुचौ यस्याः सा । बहुचकत्वात् 'न क्रोडादिबहुचः' इति न ङीप् । सुमुखाम्भोजेति चारुमुखारविन्देति सुभ्रूरिति । एवंप्रकारेण दृष्ट्वा विमुह्यतीत्यर्थः । अत्र इतिना कर्मणोऽभिहितत्वात्प्रातिपदिकार्थमात्रे प्रथमा । तदुक्तं वामनेन 'निपातेनाप्यभिहिते कर्मणि न कर्मविभक्तिः परिगणनस्य प्रायिकत्वात्' इति । अनभिहितमात्रे तिङ् । कृत्तद्धितसमासैरित्यत्र संभवदभिप्राया परिगणनेति व्याचकार न्यासकारः । माद्यति मदवशादवशो भवति, मोदते हृष्यति, अभिरमते परिक्रीडति, स्तौति तद्गुणान्कीर्तयति, विद्वानपि विवेकवानपि प्रत्यक्षेणाशुचिपुत्रि-

---

सां प्रतीहारी । वेदविद्याभिमानिनी देवता वेदवती । [प्रतीहारी—यद्देव आज्ञापयतीति ।] विचारान्निर्गतो निर्विचारो विचारशून्यो यः सौन्दर्याभिमानस्तेन वर्धिष्णुना वृद्धिशीलेन कामहतकेन कामप्रेतेन जगद्विश्वं निहतं भ्रंशितम्[1] । अथवेति । अतिकुत्सिते सौन्दर्यबुद्धिर्महामोहसाध्येति तात्पर्यम् ॥—कान्तेति । अहो आश्चर्ये । मोहस्य दुश्चेष्टितमेतत् । एतत्किम् । विद्वानपि पण्डितोऽपि प्रत्यक्षमशुच्यपवित्रं मांसादि तस्य पुत्तिकां स्त्रियं दृष्ट्वा संभाव्य कान्तेत्यादि विशेषणैरिति प्रस्तौति । इतीति किम् । कान्तेत्यादि । कान्ता मनोहरा, उत्पललोचना कमलनयना, विपुलः स्थूलः श्रोणीभरो नितम्बभारो यस्याः, उन्नमन्तौ मिलन्तौ पीनौ मांसलावुत्तङ्गावुच्चौ पयोधरौ स्तनौ यस्याः सा, सुष्ठु मुखमम्भोजमिव यस्याः सा, सुष्ठु भ्रुवौ यस्याः

---

१ 'निहतं जगत्' इति पाठः ।

अपिच यथावस्तु विचारयताममन्दमतीनामपि पिशितपङ्कावनद्धास्थिपञ्जरमयी स्वभावदुर्गन्धिर्वीभत्सवेषा नारीति नास्ति विरतिः। तदत्र विस्पष्ट एवेतरगुणाध्यासः । तथाहि—

मुक्ताहारलता रणन्मणिमया हैमास्तुलाकोटयो
 रागः कुङ्कुमसंभवः सुरभयः पौष्पा विचित्राः स्रजः ।
वासश्चित्रदुकूलमल्पमतिभिर्नार्यामहो कल्पितं
 बाह्यान्तःपरिपश्यतां तु निरयो[1] नारीति नाम्ना कृतः ॥ ९ ॥

---

काममेध्यपुत्तलीं स्त्रियं स्त्रीव्यक्तिम् । अहो आश्चर्यम् । मोहस्य दुरात्मनो दुश्चेष्टितं दुर्विलसितमेतत् । पूर्वोक्तमेवेत्यर्थः ॥ ८ ॥ न केवलं विदुषां दोषज्ञानां मोहोऽपि तु विचारकारिणामित्याह—अपि चेति । अपि च यथावस्तु वस्तुयाथात्म्यम् । वस्तुनि यथार्थस्वरूपं विचारयतामित्यर्थः । अमन्दबुद्धीनामपि विवेकशालिनामपि । पिशितपङ्केन मांसकर्दमेनावनद्धानि खचितान्यस्थीनि वंक्र्यादीनि कीकसानि तान्येव पञ्जरं तन्मयी । प्रकृतवचने मयट् । पञ्जरात्मिका स्वभावतः स्वभावेन दुर्गन्धिवीभत्सवेषा । सुप्सुपेति समासः । भिन्नपदं वा । दुर्गन्धिर्वीभत्सवेषा । दुष्टश्चासौ गन्धश्च दुर्गन्धः सोऽस्यास्तीति दुर्गन्धिनी सा च सा । वीभत्सः । कश्मलो वेषो यस्याः सा । 'स्त्रियाः पुंवत्–' इत्यादिना दुर्गन्धिशब्दस्य पुंवद्भावाण्णिज्लोपः । तादृशी व्यक्तिर्नारीति विचारयतामपीत्यन्वयः । ज्ञात्वा विरतिर्नास्तीत्यर्थः । तत्र हेतुमाह । तत्र विस्पष्ट एवेति । इतरत्र इतरगुणाध्यास इत्यर्थः ॥—मुक्ताहारेति । मुक्ताहारलता मौक्तिकहाराः रणन्मणिमयाः रणन्माणिक्यप्रचुराः । प्राचुर्ये मयट् । हैमाः हेममय्यः । विकारार्थेऽण् । तुलाकोटयो नूपुराणि । कुङ्कुममिलितो रागोऽङ्गरागः सुरभयो घ्राणतर्पणाः पौष्पाः पुष्प-

---

सा इति । न केवलं प्रस्तौति किं तु माद्यति मत्तो भवति, मोदते संतुष्यति, अभिरमते क्रीडति च ॥ ८ ॥ यथेति । वस्तुरूपं यथास्ति तथा विचारयताम् । अमन्दमतीनां तीक्ष्णबुद्धीनां पिशितं मांसं तस्य पङ्केन कर्दमेनावनद्धः संबद्धो योऽस्थिपञ्जरस्तन्मयी तत्प्रधाना स्वभावेन दुर्गन्धिः बीभत्सः कुत्सितो वेषो यस्याः सा नारीति नास्ति विरतिः वैराग्यम् । अन्यगुणारोपात्तत्र गुणबुद्धिरित्याह—तदत्रेति । अत्र नार्यामितरगुणाध्यासोऽन्यगुणारोपः । आरोपहेतुं दर्शयति—तथाहि । मुक्ताहारेति । अहो इति महाविनोदे । अल्पमतिभिः स्वल्पधीभिरेतन्नार्यां कल्पितमिति संबन्धः । एतत्किं तदाह । मुक्तानां हार एव लताः, रणन्त्यः शब्दं कुर्वन्त्यो मणिमया रत्नप्रधाना हेम्ना स्वर्णेन निर्मिता हैमास्तुलाकोटयश्चरणभूषणानि, कुङ्कुमोत्पन्नो रागो-

---

१ 'निरयं नारीति नाम्ना कृतम्' इति पाठः ।

(आकाशे) आः पाप कामचण्डाल, किमनालम्बनमेवं भवता व्याकुलीक्रियते जनः। तथा ह्ययमेवाभिमन्यते—

बाला मामियमिच्छतीन्दुवदना सानन्दमुद्वीक्षते
नीलेन्दीवरलोचना पृथुकुचोत्पीडं परीरम्भते।

अरे मूढ,

का त्वामिच्छति का च पश्यति पशो मांसास्थिभिर्निर्मिता
नारी वेद न किंचिदत्र स पुनः पश्यत्यमूर्तः पुमान्॥१०॥

---

संबन्धिन्यो विचित्रा विविधाः स्रजो मालिकाः। वासो वस्त्रं चित्रदुकूलं नार्यां योषिति अल्पमतिभिर्दुर्बुद्धिभिः कल्पितं आरोपितम्। मुक्ताहारादिगतं रामणीयकं नार्यामारोपितमिति भावः। बाह्यान्तःपरिपश्यतां बाह्यमभ्यन्तरं च विविक्ततया परिपश्यताम्। तुशब्दः पूर्वव्यवच्छेदार्थः। निरयो नरकः नारीतिनाम्ना नारीव्यपदेशेन कृतः। निर्मित इत्यर्थः॥ ९॥ अनालम्बनं निर्विषयम्। क्रियाविशेषणम्। अर्थाभावेऽव्ययीभावो वा। आः पाप कामचण्डालेत्यादि संरब्धवचनात्तोटकम्। 'संरब्धवचनं यत्तु तत्तोटकमुदाहृतम्' इति लक्षणात्। आकाश इत्युपसन्धिः॥—बालेत्यादि। सुगममेतत्। अरे मूढेत्यादि। वस्तुविचारवाक्यमेतत्। वसामांसास्थिनिर्मिता नारीति न किंचिद्वेद। इच्छोद्वीक्षणपरिरम्भादिकं दूरत एव न जानातीत्यभिप्रायः। पृथुकुचावुत्पीड्य पृथुकु-

---

ऽङ्गरागः, सुरभयः परिमलबहुलाः पुष्पैर्विरचिताः पौष्पा विचित्रा नानावर्णाः स्रजः, वासो वस्त्रं चित्रं नानावर्णं दुकूलं पट्टवस्त्रम्। एतदीयं सौन्दर्यं नार्यामारोपितमित्यर्थः। अपूर्वमिदं यद्विशेषादर्शिनामयमारोपो न विशेषं पश्यतामित्याह—बाह्येति। बहिः अन्तरभ्यन्तरे निरयं परिपश्यतां समन्तादवलोकयतां पुरुषाणां नारीति नाम्ना कृतमलम्॥ ९॥ अनालम्बनमेव निराधारमेवाविर्भवता प्रकटीभवता। कामावेशवशादतिव्याकुलो भवतीत्याह—तथाहीति। अयं कामाविष्ट एवमभिमन्यते। एवं कथं तदाह—बालेति। इयं बाला मामिच्छति। इयमिन्दुवदना चन्द्रवदना सानन्दं यथा स्यात्तथोद्वीक्षतेऽवलोकयति, इयं नीलेन्दीवरलोचना नीलकमलनयना मां पृथुकुचयोरुत्पीड उन्मर्दनं यस्यां क्रियायां यथा स्यात्तथा परीरप्सत आलिङ्गितुमिच्छति। तं तिरस्करोति—अरे मूढ, का त्वामिति। अरे मूढ पशो, का त्वामिच्छति, का च पश्यति। न कापीत्यर्थः। तत्र कारणमाह। यतो मांसास्थिभिर्निर्मिता नारी न किंचिद्वेद जडत्वात्। तर्हि कथं चैतन्योपलम्भ इत्याशङ्क्याह। अत्रास्यां नार्यां प्र-

---

१ 'मेवाविर्भवता भवता' इति पाठः। २ 'परीरप्सते' इति पाठः।

प्रतीहारी—*इंदो आगच्छेदु महाभाओ।

(इत्युभौ परिक्रामतः।)

प्रतीहारी—†एसो महाराओ उववि‍ट्ठो चिट्ठदि। ता उवसप्पदु भवम्।

वस्तुविचारः—(उपसृत्य।) जयतु जयतु देवः। एष वस्तुविचारः प्रणमति।

राजा—इहोपविश्यताम्।

वस्तुविचारः—(उपविश्य।) देव, एष ते किंकरः संप्राप्तः, आज्ञयानुगृह्यताम्।

राजा—महामोहेन सहास्माकं संप्रवृत्तः सङ्ग्रामः। तदत्र कामस्तस्य प्रथमो वीरः। तस्य च प्रतिवीरतयास्माभिर्भवान्निरूपितः।

वस्तुविचारः—धन्योऽस्मि। येन स्वामिनाहमेव संभावितः।

राजा—अथ कया शस्त्रविद्यया भवान्कामं जेष्यति।

वस्तुविचारः—आः पञ्चशरः कुसुमधन्वा कामो जेतव्य इत्यत्रापि शस्त्रग्रहणापेक्षा। पश्य—

* इति आगच्छतु महाभागः।

† एष महाराज उपविष्टस्तिष्ठति। तदुपसर्पतु भवान्।

चोत्पीडम्। 'द्वितीयायां च' इति णमुल्। परीप्सायामित्यनुवर्तनात् परिरम्भणे त्वरत इत्यर्थः। परिरप्स्यत इति कर्तरि लृट्। 'उपसर्गस्य' इति सूत्रे बहुलग्रहणात्त-

सिद्धेऽमूर्ते मूर्तेरहितः पुमान् साक्षी पश्यति, इच्छति चेत्यपि योजनीयम्। इच्छति पश्यतीत्यत्रेच्छादर्शनयोर्द्रष्टृधर्मत्वान्नारी अप्रयोजिकेति यद्यपि, तथापि साक्षिणेक्षणात्तस्यां चैतन्यादिकं सर्वं संभाव्यत इति तात्पर्यम्॥ १०॥ [प्रतीहारी—इत एतु महाभागः।] [प्रतीहारी—एष महाराज उपविष्टस्तिष्ठति। तदुपसर्पतु भवान्।] संप्रवृत्त उपक्रान्तः। प्रतिवीरतया प्रतिस्पर्धिवीरतया निरूपितो मनस्यानीतः। आः इत्याश्चर्ये। पञ्चशर इति वीप्सोपहासार्थम्। पञ्चैव शरा बाणा यस्य सः। संमोहनास्त्रसमन्विताः पञ्चापि शराः सकलविजयायालमित्याशङ्क्याह। कुसुमं धनु-

१ 'इदो एदु' 'इदो इदो' इति पाठौ। २ 'पञ्चशरः पञ्चशरः' इति पाठः।

दृढतरमपिधाय द्वारमारात्कथंचि-
त्स्मरणमपरिवृत्तौ[1] दर्शने योषितां च ।
परिणतिविरसत्वं देहवीभत्सतां वा
प्रतिमुहुरनुचिन्त्योन्मूलयिष्यामि कामम् ॥ ११ ॥

राजा—साधु साधु ।

वस्तुविचारः—अपिच—

विपुलपुलिनाः कल्लोलिन्यो नितान्तपतज्झरी-
मसृणितशिलाः शैलाः सान्द्रद्रुमा वनभूमयः[2] ।

---

स्वाभावेऽपि दीर्घः ॥१०॥ वस्तुविचार इत्यारभ्य शस्त्रग्रहणापेक्षेत्यन्तं सुगमम् ॥—**दृढतरमिति** । आरान्निकटे । द्वित्रिदिनमध्य इत्यर्थः । द्वारं मन्मथप्रवेशद्वारं कान्तास्मरणतद्दर्शनरूपमपिधाय काममुन्मूलयिष्यामि । किं तद्द्वारापिधानं त-दाह—परिणतीत्यादि । परिणतौ संभोगान्ते विरसत्वम् । यद्वा वार्धके विरसत्वम् । देहवीभत्सतां पूर्वोक्तामस्थिपञ्जरमयीमित्यादिना प्रतिपादिताम् । अत्र वाशब्दो हेतुद्वयं वार्धक्येनासामर्थ्येन द्योतयति । प्रतिमुहुरनुचिन्त्य प्रतिक्षणमालोच्य कामं मन्मथं समूलं घातयिष्यामीत्यर्थः ॥ अत्र संरब्धवचनात्मकत्वादधिबलं नाम गर्भसन्धेरङ्गम् । तल्लक्षणं तु—'तोटकस्यान्यथा वाचं ब्रुवतेऽधिबलं बुधाः' इति ॥ ११ ॥—**विपुलेति** । विपुलपुलिनेत्यादिना तपसो विजनस्थानमुक्तम् । यदि शमगिरो वैयासिक्यो व्यासप्रोक्ताः । 'तेन प्रोक्तम्' इति शैषिकश्छक् ।

---

र्थस्य एतादृशस्यापि जये कथा शस्त्रविचयेति प्रश्ने आश्चर्यमिति भावः । कामविजयो-पायमाह—**दृढतरमिति** । कथंचित्केनापि विहितमार्गेण काममहमुन्मूलयिष्यामीति योजना । किं कृत्वा । द्वारं जीवस्य विषयानुध्यानमार्गं जीवो मृगयत्यनेनेति मार्गस्तं मार्गम् । अन्तःकरणमिति यावत् । आराद्विषयानुध्यानात्पूर्वं दृढतरं कथंचित्केनापि वि-हितमार्गेणापिधाय निरुध्य । पुनः किं कृत्वा । योषितां स्त्रीणां स्मरणमेव विपरिवृत्तिः स्वभावपरावृत्तिस्तस्यां सत्यां वा, दर्शने इन्द्रियजन्यज्ञाने सति वा, परिणतौ विरसत्वं वा, देहस्य शरीरस्य बीभत्सतां कुत्सिततां वा, प्रतिमुहुः प्रतिक्षणमनुचिन्त्यानुध्याय एवं कामजयः सुकर इत्यर्थः ॥ ११ ॥ कामजयोपायमान्तरमुक्त्वा बाह्यमाह—अ-पि च । **विपुलेति** । यदीदं सर्वं वर्तते तदा नार्यः क, क च तदधीनो मन्मथः

---

१ 'विपरिवृत्तौ' इति पाठः । २ 'वनराजयः' इति पाठः ।

यदि शमगिरो वैयासिक्यो बुधैश्च समागमः
क्व पिशितवसामय्यो नार्यस्तथा क्व च मन्मथः ॥१२॥

नारीति नाम प्रधानमस्त्रं कामस्य। तेन तस्यां जितायां तत्सहायाः सर्व एव विफलारम्भा भङ्गमासादयिष्यन्ति। तथाहि—

चन्द्रश्चन्दनमिन्दुधामधवला रात्रिर्द्विरेफावली-
झङ्कारोन्मुखरा विलासविपिनोपान्ता वसन्तोदयः।
मन्द्रध्वानघनोदयाश्च दिवसा मन्दाः कदम्बानिलाः
शृङ्गारप्रमुखाश्च कामसुहृदो नार्यां जितायां जिताः ॥१३॥

---

नैवान्या(?)मित्यच् 'टिड्ढाणञ्–' इत्यादिना ङीप्। अयमर्थः। जुगुप्सानन्तरं वैराग्यमुत्पद्यते, तदनन्तरं शमः, तदनन्तरमेकान्तवासः। तत्र कुतस्त्याः स्त्रियः तन्निबन्धनमन्मथवार्ता दूरतोपास्तेति ॥ १२ ॥ तदेवाह—**नारीति**। नामेति प्रसिद्धौ। अरविन्दादिपञ्चबाणव्यतिरिक्तो नारीति षष्ठः शरः कविसमयसिद्ध इति नामपदं प्रयुञ्जानस्य भावः। अतएवारोप्यमाणप्राधान्यं विहायारोपविषयस्यैव प्रधानोक्तिः। **तस्यामिति**। अतएव पञ्चशराणामुपसर्जनत्वं नारीरूपस्यास्त्रस्य प्राधान्यमित्यभिसंधाय प्रधानमस्त्रं कामस्येत्युक्तमिति ध्येयम् ॥ **चन्द्रश्चन्दनमित्यादि** स्पष्टम्। आलम्बनविभावे जिते उद्दीपनविभावस्य वार्ता दूरत

---

कंदर्पः। इदं किं तदाह। विपुलपुलिनाः विपुलानि प्रशस्तानि पुलिनानि तीराणि यासां ताः कल्लोलिन्यो नद्यः। नितान्तमतिशयेन पतन्त्यो झर्यो निर्झरास्ताभिर्मसृणिताश्चिक्कणाः शिला येषां ते। शैलाश्च सान्द्रा निबिडा द्रुमास्तरवो यासु ताः तादृश्यो वनराजयस्तपोभूमय एताः, एतासूपविश्य वैयासिक्यो व्यासप्रणीताः शमगिरः शान्तिप्रतिपादिका वाचो बुधैर्ज्ञातृभिः। 'ज्ञातृचान्द्रिसुरा बुधाः' इति कोशः। समागमः संगतिश्च एतत्सत्त्वे नार्यो मन्मथश्चेत्येतद्द्वयमपि न प्रभवतीत्यर्थः। कीदृश्यो नार्यः। पिशितवसामय्यो मांसवसाप्रधानाः ॥ १२ ॥ भङ्गं पराजयम्। प्रधानाभावे सहायवैफल्यं दर्शयति—**चन्द्र इति**। इन्दुधाम्ना चन्द्रकान्त्या धवला रात्रयः, गुञ्जन्ती शब्दायमाना या द्विरेफावली षट्पदपङ्क्तिस्तस्या झङ्कारेण शब्देनोन्मुखराः सशब्दाः विलासविपिनस्य क्रीडोपवनस्योपान्ताः प्रान्तप्रदेशाः वसन्तोदयाः वसन्तप्रादुर्भावाः, मन्द्रध्वाना गम्भीरशब्दा ये घना मेघास्तेषामुदयो येषु तादृशा दिवसाः,

---

१ 'तदा' इति पाठः। २ 'गुञ्जद्द्विरेफावली' इति पाठः। ३ 'वसन्तोदयाः' इति पाठः।

तदलमतिविलम्बेन । आदिशतु स्वामी ।

सोऽहं प्रकीर्णैः परितो विचारैः
शरैरिवोन्मथ्य बलं परेषाम् ।
सैन्यं कुरूणामिव सिन्धुराजं
गाण्डीवधन्वेव निहन्मि कामम् ॥ १४ ॥

राजा—(सप्रसादम् ।) तत्सज्जीभवतु भवाञ्शत्रुविजयाय ।

वस्तुविचारः—यदादिशति देवः ।

(इति प्रणम्य निष्क्रान्तः ।)

राजा—वेत्रवति, क्रोधस्य विजयाय क्षमैवाहूयताम् ।

प्रतीहारी—*जं देवो आणवेदि ।

(इति निष्क्रम्य क्षमया सह प्रविशति ।)

क्षमा—

क्रोधान्धकारविकटभ्रुकुटीतरङ्ग-
भीमस्य सान्ध्यकिरणारुणरौद्रदृष्टेः ।

---

* यद्देव आज्ञापयति ।

---

एवापास्तेत्यभिप्रायः ॥ १३ ॥ सोऽहमित्यादि । सोऽहमित्यनेन सर्वप्रकटनम् । परितः प्रकीर्णैर्विचारैर्वेदशास्त्रपुराणेतिहासस्थिताभिर्युक्तिभिः शरैरिव बाणैरिव परेषां शत्रूणां बलमुन्मथ्य कामं निहन्मि । गाण्डीवधन्वार्जुनः कुरूणां सैन्यं सिन्धुराजं सैन्धवमिव । सिन्धुराजदृष्टान्तेनार्थैव । 'एवे चानियोगे' इति पररूपत्वम् । कामं निहन्मीति प्रतीयते ॥ १४ ॥—क्रोधान्धकारेति । क्रोध एवा-

---

वर्षाकालीनदिवसा इत्यर्थः । मन्दाः कदम्बसंबन्धिनश्चानिला वायवः शृङ्गारः प्रमुखो मुख्यो येषां ते आसनपानभोजनादयः कामस्य सुहृदः सहायाः नार्या जितायां सर्वे जिताः ॥ १३ ॥—सोऽहमिति । सोऽहं प्रथमं प्रतिज्ञातकामजयः प्रकीर्णैर्विस्तृतैरनेकरूपैः परितः शरैरिव विचारैः परेषां मोहाज्ञप्रमिथ्यादृष्टिप्रणीतशास्त्रानुरोधेन प्रवृत्तानां शत्रूणां बलं सैन्यमुन्मथ्य निराकृत्य काममभिलापं निहन्मि निश्चयेन नाशयामि । तत्र दृष्टान्तः । यथा गाण्डीवधन्वार्जुनः शरैः कुरूणां सैन्यमुन्मथ्य विद्राव्य सिन्धुराजं जयद्रथं जघ्निवांस्तथेत्यर्थः ॥ १४ ॥ [प्रतीहारी । यद्देव आज्ञापयति ।] क्रोधेति । धीरा विवेकिनः परस्यान्यस्य परिवादगिरो निन्दावचनानि सहन्ते ।

निष्कम्पनिर्मलगभीरपयोधिधीरा[1]
वीराः परस्य परिवादगिरः सहन्ते ॥ १५ ॥
(सश्लाघमात्मानं निर्वर्ण्य) अहो, अहम्[2] ।
क्लमो न वाचां शिरसो न शूलं
न चित्ततापो न तनोर्विमर्दः ।
न चापि हिंसादिरनर्थयोगः
श्लाघ्या परं क्रोधजयेऽहमेका ॥ १६ ॥
(इत्युभे परिक्रामतः ।)

---

न्धकारस्तमः । क्रोधाविष्टस्य तमसीव न प्रकाशते सर्वं सम्यक् । तेन क्रोधान्धकारेण विकटभ्रुकुट्येव तरङ्गास्तैः भीमस्य भयंकरस्य । सान्ध्यकिरणाः सन्ध्याकालसूर्यकिरणास्तद्वदरुणा घोरा भयंकरा दृष्टयो यस्य तस्य परस्य शत्रोः । निष्कम्पेत्यादि निष्कम्पो निस्तरंङ्गः निर्मलः स्वच्छः गभीरोऽत्यन्तगम्भीरः स चासौ पयोनिधिस्तद्वद्धीरा धैर्यवन्तः स्थिरबुद्धयः । तत्र धियं बुद्धिमीरयन्ति प्रेरयन्ति ते धीरा वशीकृतान्तःकरणाः । अयं धीरशब्दो योगरूढः सत्पुरुषवचनः । अतो न पुनरुक्तिः । परिवादगिरो निन्दावचनानि सहन्ते क्षमन्ते ॥ १५ ॥ तदेवाह । सश्लाघम् । क्रियाविशेषणमेतत् । **अहो अहमिति** । 'प्लुतप्रगृह्या अचि नित्यम्' इति प्रकृतिभावः ॥—**क्लम इति** । वाचो वाग्व्यापारात्क्लमो ग्लानिर्नास्ति । शिरसः शूलं तोदो नास्ति । तनोर्विमर्दोऽङ्गभङ्गः । आदिशब्देन हिंसायाः कर्तृप्रयोजकानुग्रहानुमन्तृनिमित्तभावभेदाः संगृहीताः । अनर्थयोगो दुरितादिपूर्वसंबन्धः । क्षान्तस्येति शेषः । एतानि विशेषणानि वैपरीत्येन क्रुद्धे योजनीयानि ।

---

कीदृशा धीराः । निष्कम्पो निश्चलश्चासौ पयोधिश्च तद्वद्गभीरानवगाहनीयमनस एतादृशा वीरा इव वीराः । कीदृशस्य परस्य । क्रोधरूपो योऽन्धकारस्तेन विकटा उच्चावचा या भ्रुकुटिः क्रोधायितभ्रूचेष्टा सैव तरङ्गस्तेन भीमस्य भयानकस्य । पुनः कीदृशस्य । संध्यायां भवाः सांध्या ये किरणाः सूर्यरश्मयस्तद्वदरुणा रक्ता रौद्रा भयावहा दृष्टिर्यस्य तादृशस्येत्यर्थः ॥ १५ ॥ सश्लाघं प्रशंसासहितम् ॥—**क्लमो न वाचामिति** । वाचां क्लमोऽवसादो न, शिरसः शूलं पीडा न, चित्तस्य मनसस्तापः संतापो न, तनोः शरीरस्य विमर्दः परस्परगात्रसंघर्षो न, हिंसादिः प्राणिमारणादिरनर्थयोगोऽनर्थप्राप्तिरपि न । अतोऽहमेव क्रोधजये श्लाघ्या प्रशस्या ॥ १६ ॥

---

१. 'निर्मलपयोधिगभीरवीराः' इति पाठः । २. 'अहो, अहम्' इति मुद्रितपुस्तके नास्ति ।

प्रतीहारी—*एसो देवो । ता उवसप्पतु पिअसही ।

क्षमा—(उपसृत्य ।) जयतु जयतु देवः । एषा देवस्य दासी क्षमा साष्टाङ्गं प्रणमति ।

राजा—क्षमे, अत्रोपविश्यताम् ।

क्षमा—(उपविश्य ।) आज्ञापयतु देवः । किमर्थमाहूतो दासीजनः।

राजा—अस्मिन्सङ्ग्रामे दुरात्मा क्रोधस्त्वया जेतव्यः ।

क्षमा—देवस्याज्ञया महामोहमपि जेतुं पर्याप्तास्मि किं पुनः क्रोधं तनुचरमात्रम् । तदहमचिरादेव—

तं पापकारिणमकारणबाधितारं
स्वाध्यायदेवपितृयज्ञतपःक्रियाणाम् ।
क्रोधं स्फुलिङ्गमिव दृष्टिभिरुद्वमन्तं
कात्यायनीव महिषं विनिपातयामि ॥ १७ ॥

---

* एष देवः । तदुपसर्पतु प्रियसखी ।

---

अतश्चाहमेकैव क्रोधजये परमत्यर्थं श्लाघ्या श्लाघनीया ॥ १६ ॥ उभे परक्रामतः । साष्टाङ्गमिति । अष्टाभिरङ्गैः करद्वयचरणद्वयललाटोरःस्थलभुजद्वयरूपैः पातः प्रणिपातः । अत्राष्टत्वसंख्यायुक्तान्यङ्गानि । यथाह वृत्तिकारः 'वृत्तिस्थः संख्याशब्दो भाववचनः' इति । यद्वा समाहारद्वन्द्वेऽपि पात्रादित्वान्न स्त्रीत्वम् । अतो न ङीप् ॥—तं पापकारिणमिति । अथ क्रियाणामकारणबाधितारं कारणाभावेन कारणं विना बाधितारम् । सुप्सुपेति समासः । 'कर्तृकर्मणोः कृति' इति कर्मणि षष्ठी । दृष्टिभिः स्फुलिङ्गमुद्वमन्तमिव स्थितम् । क्रोधं महिषासुरं कात्यायनीव विनिपातयामि संहरामि । भविष्यति वर्तमानप्रत्ययः । अचिरादेव हनिष्यामी-

---

[प्रतीहारी—एष देवः । तदुपसर्पतु प्रियसखी ।] उपसृत्येत्यादि देवस्यानुग्रहादित्यन्तं सुगमम् । देवस्यानुग्रहादिति । पर्याप्ता समर्था । तनौ शरीरे चरतीति तनुचरः शरीरान्तर्वर्ती स तु स्वल्पप्रयत्नसाध्य इत्यर्थः ॥—तं पापकारिणमिति । अहं तं पापकारिणं क्रोधं विशेषेण निपातयामि । कीदृशं क्रोधम् । स्वाध्यायो वेदाध्ययनं, देवयज्ञो ज्योतिष्टोमादिः, पितृयज्ञः श्राद्धपिण्डपितृयज्ञादिः, तपांसि च चान्द्रायणादीनि, क्रिया नित्यनैमित्तिकाः तासामकारणबाधितारं कारणं प्रयोजनं विना बाधितारं विघट्टितारं विनाशयितारम् । पुनः कीदृशम् । दृष्टिभिर्दृष्टिव्यापारैः स्फुलिङ्गमिवाग्निकणमिव वमन्तम् । का कमिव । कात्यायनी दुर्गा महिषमिव महिषासुरमिव ।

**राजा**—क्षमे, शृणुमस्तावत्क्रोधविजयोपायम् ।

**क्षमा**—देव, विज्ञापयामि ।

क्रुद्धे स्मेरमुखावधीरणमथाविष्टे प्रसादक्रमो
व्याक्रोशे कुशलोक्तिरात्मदुरितोच्छेदोत्सवस्ताडने ।
धिग्जन्तोरजितात्मनोऽस्य महती दैवादुपेता विप-
द्दुर्वारेति दयारसार्द्रमनसः क्रोधस्य कुत्रोदयः ॥ १८ ॥

**राजा**—साधु साधु ।

**क्षमा**—देव, क्रोधस्य विजयादेव हिंसापारुष्यमानमात्सर्यादयोऽपि विजिता एव भविष्यन्ति ।

---

त्यर्थः ॥ १७ ॥ राजेति । क्षमे, शृणुमः श्रोष्यामः । वर्तमानसामीप्ये वर्तमानवत्प्रत्ययः । त्वत्त इति शेषः । त्वत्तः क्रोधविजयोपायः श्रोतव्य इत्यर्थः ॥—क्रुद्ध इत्यादि । क्रुद्धे सति क्रोधाविष्टे सति जन्तौ स्मेरमुखावधीरणं स्मेरमुखमेवावधीरणं तिरस्कारः । अथेति पक्षान्तरे । आविष्टेऽत्यन्तक्रोधाविष्टे प्रसादक्रमः प्रसादपरिपाटी । यादृशः क्रोधस्तादृशं प्रसादावलम्बनं तच्छामकमित्यर्थः । व्याक्रोशे गालिप्रदाने कुशलोक्तिः कुशलप्रश्नः । आस्तां तावदाक्रोशः, भवद्भिः सुखमासितं किमित्यादि । ताडने प्रहारे दुरितोच्छेदोत्सवः । धिग्जन्तोरिति । जन्तोः पामरस्याजितात्मन इन्द्रियवशगतस्य क्रुद्धस्य दुर्वारा महती विपत् दैवाद्विधिवशान्मयि क्रोधविषये सति आगता प्राप्ता इत्येवं तद्दयारसार्द्रमनसः । मनसामिति पाठः । क्रोधस्य

---

कीदृशं महिषम् । पापकारिणम् । पुनः कीदृशम् । स्वाध्यायदेवपितृयज्ञक्रियाणामकारणबाधितारम् । तुल्योऽर्थः । पुनः कीदृशम् । दृष्टिभिः स्फुलिङ्गमिव क्रोधं वमन्तमित्यपि योजना सुसाध्या ॥ १७ ॥ क्रुद्धे स्मेरमुखेति । इति अनेन प्रकारेण दयैव रसः संतोषः । 'रसो जलं रसो हर्षो रसः शृङ्गार इत्यपि' इत्यनेकार्थध्वनिमञ्जरी । तेनार्द्रं मनो येषां ते दयारसार्द्रमनसस्तेषां पुरुषाणां क्रोधस्योदय उत्पत्तिः कुत्र । न कुत्रापीत्यर्थः । इति किम् । अस्याजितात्मनः न जित आत्मा मनो येन तस्य जन्तोः प्राणिनः दैवाददृष्टवशात् दुर्वारा दुःखेन वार्यते दुर्वारा, अतएव महती आपद्विपत्तिरुपेता प्राप्तेति । उपायान्तरमाह । क्रुद्धे उत्पन्नक्रोधे जने स्मेरं हास्यं तद्युक्तं मुखं तेनावधारणं[1] सुखबुद्ध्या निरूपणं धन्योऽहं यन्मय्यसौ कुप्यतीति, अथ आविष्टे क्रोधवशे सति प्रसादक्रमः क्षम्यतां महाप्रसाद इति, व्याक्रोशे गालि-

---

१ 'अवधारणम्' इति पाठः । २ 'रसार्द्रमनसाम्' इति पाठः ।

राजा—तत्प्रतिष्ठतां भवती विजयाय ।

क्षमा—यदाज्ञापयति देवः ।

(इति निष्क्रान्ता ।)

राजा—(प्रतीहारीं प्रति) [1]वेगवति, आहूयतां लोभस्य जेता संतोषः ।

प्रतीहारी—*जं देवो आणवेदि ।

(इति निष्क्रम्य संतोषेण सह प्रविशति ।)

संतोषः—(विचिन्त्य सानुक्रोशम् ।)

फलं स्वेच्छालभ्यं प्रतिवनमखेदं क्षितिरुहां
पयः स्थाने स्थाने शिशिरमधुरं पुण्यसरिताम् ।
मृदुस्पर्शा शय्या सुललितलतापल्लवमयी
सहन्ते संतापं [2]तदिह धनिनां द्वारि कृपणाः ॥ १९ ॥

* यद्देव आज्ञापयति ।

कृत्रोदयः ॥ १८॥ साधु सखित्यारभ्य प्रतीहारीत्यन्तं सुगमम् । प्रतिष्ठतामिति । 'समवप्रविभ्यः स्थः' इत्यात्मनेपदम् । विजयाय विजेतुमित्यर्थः । 'तुमर्थाच्च भाववचनात्' इति चतुर्थी ॥ **सानुक्रोशमिति** । अनुक्रोशो जुगुप्सा । क्रियाविशेषणमेतत् ॥—**फलं स्वेच्छेत्यादि** । प्रतिवनं क्षितिरुहां फलमखेदं स्वेच्छालभ्यम् । स्थाने स्थाने पुण्यसरितां शिशिरं च तन्मधुरं चेति विशेषणसमासः । पयः सलिलमखेदम् । स्वेच्छालभ्यमित्यनुषज्यते । सुललितलतापल्लवमयी मृदुस्पर्शा शय्याप्यखेदं स्वेच्छालभ्येति लिङ्गविपरिमाणेनान्वयः । एवं च सति कृपणाः

प्रदाने कुशलोक्तिराशीर्वादोऽयमेव साधुः, यवमीदृशा एनेत्यादिः, ताडने आत्मनो दुरितस्योच्छेदेन नाशेनोत्सवः संतोषः ॥ १८ ॥ देव क्रोधस्येति हिंसादयः क्रोधमूला एवेति भावः । [ प्रतीहारी—यद्देव आज्ञापयति । ] सानुक्रोशं सदयम् । —**फलमिति** । वनंवनमिति प्रतिवनं क्षितौ रुहन्ति ते क्षितिरुहा वृक्षास्तेषां फलम् । जातावेकवचनम् । बिल्वबदरादि अखेदं यथास्यात्तथा सुखेन स्वेच्छालभ्यम् । इच्छामात्रप्राप्यमित्यर्थः । स्थाने स्थाने स्थले स्थले शिशिरं शीतलं, मधुरं मिष्टं, पुण्याः गङ्गायमुनाद्याः सरितो नद्यस्तासां पयः पानीयं स्वेच्छालभ्यमिति योजनीयम् । मृदुः कोमलः स्पर्शो यस्यास्तादृशी । सुललिताः सुन्दराश्च ता लताश्च तासां पल्लवास्तत्प्रचुरा पल्लवमयी

१. 'वेदवति' इति पाठः । २. 'तदपि' इति पाठः ।

(आकाशे) अरे मूर्ख, लुब्ध, दुरुच्छेदः खल्वयं भवतो व्यामोहः। तथाहि—

समारम्भा भग्नाः कति कति न वारांस्तव पशो
पिपासोस्तुच्छेऽस्मिन्द्रविणमृगतृष्णार्णवजले।
तथापि प्रत्याशा विरमति न ते मूढ शतधा
विदीर्णं यच्चेतो नियतमशनिग्रावघटितम् ॥ २० ॥

इदं च ते लोभान्धस्य चेष्टितं चेतसि चमत्कारमातनोति। यतः—

लभ्यं लब्धमिदं च लभ्यमधिकं तन्मूललभ्यं ततो
लब्धं चापरमित्यनारतमहो [1]लब्धं धनं ध्यायसि।

---

धनिनां द्वारि तदपि तथापि। किमर्थमित्यर्थः। संतापं सहन्ते। किमर्थं संतापमनुभवन्तीत्यर्थः ॥ १९ ॥ तापस्योच्छेदेन नाशेन उत्सवः ॥ **समारम्भा इति**। अस्मिन्परिदृश्यमाने तुच्छेऽस्थिरे द्रविणमृगतृष्णार्णवजले द्रविणमेव मृगतृष्णार्णवजलं यस्मिंस्तत्प्राये। आशापरम्पराजनक इत्यर्थः। तथापि एवं च सति प्रत्याशा दुर्भावनापरम्परा न विरमति न शाम्यति। ते तव चेतोऽपि शतधा न विदीर्णम्। यच्चेतः अशनिग्रावघटितं वज्रशिलानिर्मितं दृढम् ॥ २० ॥ **इदं चेति**। लभ्यं धनं ध्यायसीत्यन्वयः। केन प्रकारेणेति तदाह—**लभ्यमित्यादि**। आदौ तावल्लभ्यं प्राप्तुमर्हं भूरिद्रविणादि लब्धम्, इदं चाधिकं

---

शय्या स्वेच्छालभ्या। अर्थवशाद्विभक्तिव्यत्यासः। एवं यद्यपि पदार्थप्राप्तिसौलभ्यमस्ति तदपि तथापि कृपणा दीना धनिनां द्वारि संतापदुःखं सहन्तेऽनुभवन्तीति महदाश्चर्यम्। अमुमर्थं श्रीमद्भागवते श्रीशुक आविश्चकार 'चीराणि किं पथि न सन्ति' इत्यादिना ॥ १९ ॥ पुनरपि लुब्धं तिरस्करोति—**अरे मूर्खेति**। भवतो लोभासक्तस्य ॥—**समारम्भा इति**। हे पशो विवेकविधुर, तव कति कियत्संख्याकाः समारम्भा उपक्रमाः कतिवारान्न भग्ना न नष्टाः। अपि तु भग्ना एव। पशुत्वमेव विशदयति। कीदृशस्य तव। अस्मिंस्तुच्छेऽतिक्षुद्रे द्रविणरूपं धनरूपं यन्मृगतृष्णा मरिचिका तदेवार्णवजलं सागरजलं यस्मिंस्तादृशे संवादलेशशून्येऽपि जले पिपासोः पातुमिच्छोः। किंच हे मूढ, समारम्भनाशेऽपि ते तव प्रत्याशा प्रचुरेच्छाद्यापि न विरमति नोपरमते। एवं विमर्शे क्रियमाणे इति प्रतिभातीत्याह। यच्चेतोऽन्तःकरणमद्यापि शतधा न विदीर्णं न स्फुटितं, तच्चेतो नियतं निश्चयेनाशनिग्रावभिर्वज्रोपलैर्घटितम्। निर्मितमित्यर्थः ॥ २० ॥ चमत्कारमाश्चर्यम् ॥ **लभ्यमिति**। मुग्धः

---

१. 'मुग्धो धनं' इति पाठः।

नैतद्वेत्सि पुनर्भवन्तमचिरादाशापिशाची बला-
त्सर्वग्रासमियं ग्रसिष्यति महालोभान्धकारावृतम् ॥२१॥

अपि च—

धनं तावल्लब्धं कथमपि तथाप्यस्य नियतो
व्ययो वा नाशो वा तव सति वियोगोऽस्त्युभयथा ।
अनुत्पादः श्रेयान्किमु कथय पथ्योऽथ विलयो
विनाशो लब्धस्य व्यथयतितरां न त्वनुदयः ॥ २२ ॥

---

लभ्यं इदं चाधिकं तल्लब्धं, तदपि मूललभ्यमसंभावितमप्यपरं लभ्यमिति । अहो आश्चर्यम् । इयमाशा विमर्शपरम्परा । तत्र निमित्तमाह—एतदिति । वक्ष्यमाणमचिराच्छीघ्रमियमाशापिशाची महालोभान्धकारावृतं भवन्तं पुनः सर्वग्रासं ग्रसिष्यतीति यत् एतन्न वेत्सि न जानासि ॥ २१ ॥ **धनं तावदित्यादि ।** धनं तावत्साकल्येन कथमपि कृच्छ्राल्लब्धं प्राप्तम् । अस्य धनस्य व्ययो वा नाशो वा नियतः । नियतमिति पाठेऽस्य धनस्य व्ययो वा नाशो वा भवति । नियतं ध्रुवम् । तवोभयथा व्ययनाशरूपप्रकारद्वयेन वियोगे सति धनस्यानुत्पादोऽविद्यमानता किमु श्रेयान्, अथ विलयो वा पथ्यः । अरे, कथय । एवं विकल्प्य विनाशपक्षं दूषयित्वानुदयपक्ष एव श्रेष्ठ इत्याह । विनाशो लब्धस्येत्यादिना । व्यथयतितराम् । अतिशायने तरप् । 'किमेत्तिङ—' इत्यादिना आम्प्रत्ययः ॥२२॥

---

सन् अनारतं निरन्तरं सर्वदैव लभ्यं लब्धुं शक्यं यत् तल्लब्धं प्राप्तम् । इदं चाधिकं लभ्यं लब्धुं शक्यं तस्मादेवं मूलधनाल्लभ्यं प्राप्तव्यं वृद्धिरूपं ततो वृद्धिरूपधनादपरं कालवृद्ध्याख्यं लब्धं प्राप्तमित्येवंप्रकारेण ध्यायसि धनं धनमिति । परंतु त्वमेव तन्न वेत्सि यद्भवन्तमेवेयमाशापिशाची बलाद्धठात्सर्वग्रासं यथास्यात्तथा झटित्येव ग्रसिष्यति गिलिष्यतीति । कीदृशं भवन्तम् । महालोभ एवान्धकारस्तेनावृतं व्याप्तम् ॥ २१ ॥ धनार्जनमतिक्लेशसाध्यमित्युपपाद्य तद्रक्षणमप्यतीव दुष्करमित्याह—**अपि च । धनं तावदिति ।** कथमपि महता कष्टेन तावत्प्रथमतो धनं लब्धं प्राप्तं तथाप्यस्य धनस्य विशेषेण नाशे युगपत्क्षये सति नाशे वा क्रमेणापगमे सति उभयथापि नियतं नियमेन तव वियोगो विरहोऽस्ति । ततः किं तत्राह—अनुत्पाद इति । किमु प्रश्ने । अनुत्पादोऽनुत्पत्तिः श्रेयान् श्रेयस्करी, अथ अथवा विलयो विनाशः पथ्यः श्रेयस्करः । एतत्कथय ब्रूहि । विचारेत्वेवमस्तीत्याह । लब्धस्य प्राप्तस्य विनाशो व्यथयतितराम् । अतिशयेन पीडयतीत्यर्थः । न त्वनुदयोऽनुत्पादः । उत्पत्त्यभावे लोकस्य

---

१. 'नियतं विनाशे ना' इति पाठः ।

किंच—

मृत्युर्नृत्यति मूर्ध्नि शश्वदुरगी घोरा जरारूपिणी
त्वामेषा ग्रसते परिग्रहमयैर्गृध्रैर्जगद्ग्रस्यते ।
धूत्वा बोधजलैरबोधबहुलं तल्लोभजन्यं रजः
संतोषामृतसागराम्भसि मनाङ्मग्नः सुखं जीवति ॥ २३ ॥

प्रतीहारी—*एसो सामी । ता उवसप्पतु महाभाओ ।

(तथा कृत्वा ।)

संतोषः—जयतु जयतु स्वामी । एष संतोषः प्रणमति ।

राजा—इहोपविश्यताम् । (इति स्वसंनिधावुपवेशयति ।)

* एष स्वामी । तदुपसर्पतु महाभागः ।

मृत्युरित्यादि । मृत्युर्मूर्ध्नि मस्तके नृत्यति नर्तनं करोति । शश्वत्सदा मृत्युर्नियतः, आयुरनियतमिति भावः । यदि दैवाच्छतवर्षपर्यन्तं जीवति तथापि घोरा भयंकरी मृत्युतुल्या जरारूपिणी एषा प्रसिद्धोरगी त्वां लोभं ग्रसते एवंच सति यदि धनमर्जयसि तद्धनमात्मभोगाय न भवत्येवेत्याह । परिग्रहमयैः पुत्रमित्रकलत्रादिरूपैर्गृध्रसदृशैर्जगत्कृत्स्नं भवदर्जितमिदं ग्रस्यते भक्ष्यते। भ्राम्यते इति पाठे परिग्रहमयैर्गृध्रैर्गृध्रतुल्यैर्हेतुकर्तृभिः। गर्धनैरित्यर्थः। जगद्भ्राम्यते। ण्यन्ते कर्मणि यक्। जगदिति जगतः कर्मत्वं गन्तव्यविवक्षया । जगति त्वं भ्राम्यस इत्यर्थः । 'देशकालाध्वगन्तव्याः कर्मसंज्ञा ह्यकर्मणाम्' इत्युक्तेर्जगतः कर्मत्वं अबोधनतमोगुणेन बहुलं संवलितं लोभजन्यं रजो रजोगुणं बोधजलैर्विवेकसलिलैः रुद्ध्वा प्रशमय्य यथा लोके धूलिबहले क्षितितले सलिलप्रोक्षणेन धूलिं निरुध्य वर्तन्ते जनास्तद्वदिति भावः। एवं रजोगुणे निरुद्धे सत्त्वगुणस्योद्रेकः स्वतएव स्यादित्याह। संतोषामृ-

न तथा पीडेत्यर्थः ॥ २२ ॥ धनाद्विरक्तस्य कथं सुखमित्याशङ्क्याह—किंच । मृत्युरिति । मृत्युः शश्वन्निरन्तरं मूर्ध्नि मस्तके शिरस्येव माद्यति हृष्यति । घोरा भयावहा जरा वार्धक्यं तद्रूपिण्युरगी सर्पिण्येषातिप्रसिद्धा त्वां ग्रसते गिलति । न केवलं त्वामेव ग्रसते, अपितु परिग्रहाः स्त्रीपुत्रादयस्तन्मयैर्गृध्रैर्मांसभक्षकैः पक्षिभिर्जगद्विश्वं ग्रस्यते । एवं सति किं विधेयं तत्राह । बोधजलैर्ज्ञानजलैरबोधेनाज्ञानेन बहुलं बहु तत्पूर्वोक्तं लोभेन जन्यं रजो धूत्वा प्रक्षाल्य संतोष एवामृतसागराम्भस्तत्र मनाक् क्षणमात्रं मग्न आप्लुतः सुखं जीवति । तिष्ठतीत्यर्थः ॥ २३ ॥ [प्रतीहारी—एष

१. 'मृत्युर्माद्यति' इति पाठः ।

संतोषः—(सविनयमुपविश्य) एष प्रेष्यजनः। आज्ञाप्यतां देवेन ॥

राजा—विदितप्रभाव एव भवान्। तदलमत्र विलम्बेन। लोभं जेतुं वाराणसीं प्रतिष्ठीयताम्।

संतोषः—यदाज्ञापयति देवः। सोऽहम्—

नानामुखं विजयिनं जगतां त्रयाणां
देवद्विजातिवधबन्धनलुब्धवृत्तिम्[1]।
रक्षोधिनाथमिव दाशरथिः प्रसह्य
निर्जित्य लोभमवशं तरसा पिनष्मि ॥ २४ ॥

(इति निष्क्रान्तः।)

(ततः प्रविशति विनीतवेषः पुरुषः।)

पुरुषः—देव, संभृतानि विजयप्रयाणमङ्गलानि। प्रत्यासन्नश्च मौहूर्तिकावेदितः प्रस्थानसमयः।

राजा—यद्येवं सेनाप्रस्थानायादिश्यन्तां सेनापतयः।

---

वेति स्पष्टम् ॥ २३ ॥ एष स्वामी। तदुपसर्पतु महाभाग इत्यारभ्य सोऽहमित्यन्तं सुगमम् ॥—**नानामुखमिति**। नानामुखं नानाप्रकारं दशमुखं च। त्रयाणां जगतां विजयिनं देवद्विजातिवधबन्धनलुब्धवृत्तिम्। लुब्धो लुब्धकः तद्वद्वृत्तिर्यस्य स तम्। विशेषणत्रयं रावणलोभयोस्तुल्यम्। तरसाऽचिरेण पिनष्मि चूर्णयामि ॥ २४ ॥ ततः प्रविशति विनीतवेषः पुरुष इत्यारभ्य भो भोः

---

स्वामी। तदुपसर्पतु महाभागः।] स्वसंनिधौ स्वसमीपे। अनेन वस्तुविचारक्षमयोरन्तरङ्गः संतोष इति ध्वनितम्। सोऽहमित्यन्तं स्फुटार्थम्। राज्ञो निकटे स्वसामर्थ्यं दर्शयति—सोऽहं। नानेति। सोऽहं विख्यातविभवः संतोषस्तरसा बलेन प्रसह्य पराभूय निर्जित्यावशं व्यापारशून्यम्। विकलमिति यावत्। लोभं पिनष्मि संचूर्णयामि। कः कमिव। दाशरथिः श्रीजानकीपतिर्बलेन परिभूय जित्वाऽवशं रक्षोधिनाथं रावणमिव। कीदृशं लोभं रावणं च। लोभपक्षे नाना बहूनि मुखानि द्वाराणि यस्य तम्। रावणपक्षे नानानेकानि मुखानि यस्य तं दशवदनत्वात्। त्रयाणां जगतां विजयिनं जयशीलम्। पक्षद्वये तुल्यं स्पष्टं च। पुनः कीदृशम्। देवाश्च द्विजातयश्च ब्राह्मणास्तेषां वधो मारणं बन्धनं च तेन लब्धा वृद्धिर्येन तम्। अन्यायलब्धधनस्य यादृशी गतिस्तादृशी लोभस्यापि गतिरिति भावः ॥ २४ ॥ सं-

---

१. 'बन्धनलब्धवृद्धिम्' इति पाठः।

पुरुषः—यदाज्ञापयतिदेवः । (इति निष्क्रान्तः ।)

(नेपथ्ये ।)

भो[1] भोः सैनिकाः,

सज्ज्यन्तां कुम्भभित्तिच्युतमदमदिरामत्तभृङ्गाः करीन्द्रा
युज्यन्तां स्यन्दनेषु प्रसभजितमरुच्चण्डवेगास्तुरङ्गाः ।
कुन्तैर्नीलोत्पलानां वनमिव ककुभामन्तराले सृजन्तः
पादाताः संचरन्तु प्रसभमसिलसत्पाणयो[2]ऽप्यश्ववाराः ॥२५॥

सैनिका इत्यन्तं सुगमम् ॥ —सज्ज्यन्तामिति । सज्जयन्ताम् । युद्धसंनद्धाः क्रियन्तामित्यर्थः । कुम्भभित्तिभ्यः कुम्भस्थलेभ्यश्च्युताभिर्मदजलमदिराभिर्मत्तास्तत्पानेन मत्ता भृङ्गा भ्रमरा येषां ते करीन्द्रा गन्धद्विपाः । प्रसभमत्यन्तं जितमरुच्चण्डवेगाः जितो मरुतः पवनस्य चण्डवेगो यैस्ते तुरङ्गाः स्यन्दनेषु रथेषु युज्यन्तां बध्यन्ताम् कुन्तैरायुधविशेषैः ककुभामन्तराले रोदसीकुहरे नीलोत्पलानां वनमिव सृजन्तः पादाताः पदातयः संचरन्त्वग्रे गच्छन्तु । अश्ववारास्तुरङ्गसादिनोऽसिभिः खड्गैर्लसन्त उल्लसन्तः पाणयो हस्ता येषां ते संचरन्त्वित्य-

भृतानि सुसिद्धानि विजयार्थप्रयाणाय मङ्गलानि कन्यादर्शदध्यादीनि । प्रत्यासन्नो निकटवर्ती मौहूर्तिकान्वेदितो ज्योतिर्विदादिष्टः प्रस्थानसमयो विजययात्रासमयः ॥— सज्जयन्तामिति । करीन्द्रा हस्तीन्द्राः सज्ज्यन्तां सपल्याणाः क्रियन्ताम् । कीदृशाः करीन्द्राः । कुम्भभित्तेर्गण्डफलकाच्च्युता सृता चासौ मदमदिरा च मदद्रवश्च तेन मत्ता भृङ्गा येषु ते तुरङ्गा अश्वाः स्यन्दनेषु रथेषु युज्यन्तां बध्यन्ताम् । कीदृशास्तुरङ्गाः । प्रसभमतिशयेन जितो मरुतो वायोश्चण्डोऽतिशयितो वेगो यैस्ते । पादाताः पत्तयः संचरन्त्वग्रे गच्छन्तु । कीदृशाः पादाताः । ककुभां दिशामन्तराले मध्ये कुन्तैः प्रासैरायुधविशेषैर्नीलोत्पलानां वनमिव सृजन्तः कुर्वन्तोऽश्ववाराः प्रसभमतिशयेन संचरन्तु गच्छन्तु । कीदृशा अश्ववाराः । असिभिः खड्गैर्लसन्तः शोभन्तः पाणयो हस्ता येषां ते इति बाह्योऽर्थः । अथाभ्यन्तरः । कुम्भः कुम्भकाख्यप्राणायामः स एव भित्तिरिव भित्तिरिन्द्रियाधारत्वात्तस्याश्च्युतो मद एव मदिरा तया मत्ता लुप्तविषयस्मृतयो भृङ्गा इव भृङ्गा इन्द्रियाणि । विषयरसलुब्धत्वाद्भृङ्गसाम्यमिन्द्रियाणाम् । सज्ज्यन्तां स्वायत्तानि क्रियन्ताम् । करीन्द्राः प्राणादिवायवः सज्ज्यन्तां यत्ताः क्रियन्ताम् । एतदुक्तं भवति । प्राणादिनियमेन दोपक्षय इति ।

१. 'भो भोः सैनिकाः' इति मुद्रितपुस्तके नास्ति । २. 'पाणयोऽथाश्ववाराः' इति पाठः ।

**राजा**—भवतु । कृतमङ्गलाः प्रतिष्ठामहे । (पारिपार्श्वकं प्रति) सारथिरादिश्यतां साङ्ग्रामिकं रथं सज्जीकृत्वानयेति[1] ।

**पारिपार्श्वकः**—यदाज्ञापयति देवः । (इति निष्क्रान्तः ।)

(ततः प्रविशति यथोक्तं रथमादाय सारथिः ।)

**सारथिः**—जीव, सज्जीकृतोऽयं रथः । तदारोहत्वायुष्मान् ।

(राजाकृतमङ्गलेविधिरारोहणं[2] नाटयति ।)

**सारथिः**—(रथवेगं निरूपयित्वा) आयुष्मन्, पश्य पश्य ।

उद्धूतपांसुपटलानुमितप्रबन्ध-
धावत्खुराग्रचयचुम्बितभूमिभागाः ।

---

नुषज्यते ॥ २५ ॥ राजेत्यारभ्य आयुष्मानित्यन्तं सुगमम् । साङ्ग्रामिकः सङ्ग्रामः प्रयोजनमस्य । 'प्रयोजनम्' इति ठक् । नाट्ये रथिनं प्रति सूतेनायुष्मच्छब्दः प्रयोक्तव्यः । 'रथी सूतेन चायुष्मान्पूज्यः शिष्यात्मजानुजैः' इति नाटकपरिभाषा । राजेत्यारभ्य आयुष्मन्पश्य पश्येत्यन्तं सुगमम् ॥—उद्धूतेति । उद्धूतपांसुपटलेनोद्धूतधूलिवितानेनानुमिता तर्किता प्रबन्धेनाविच्छेदेन धावन्ति लोल-

---

तथोक्तम्—'दह्यन्ते ध्मायमानानां धातूनां तु यथा मलाः । तथेन्द्रियाणां दह्यन्ते दोषाः प्राणस्य निग्रहात्' इति । तुरं शीघ्रं गच्छन्ति ते तुरङ्गाः शरीरान्तर्वर्तिमुख्यधमनीसंचारिणो वायवः स्यन्दनेषु देहेषु वर्तमानाः संयुज्यन्तां समाधीयन्तां यथेष्टसंचराविधुराः क्रियन्ताम् । कीदृशा वायवः । प्रसभं हठाज्जितः पराभूतो मुख्यधमनीसंचारिणां मतां चण्ड उग्रो वेगो यैस्ते । एवं जितेषु वायुषु शरीरशुद्धिर्भवतीति भावः । पदं पदमतन्ति सततं गच्छन्तीति पदातयस्तेषां समूहाः पादाता ब्रह्मवासनाविशेषाः । कुन्तैरविद्याप्रहरणैर्नीलोत्पलानां वनमिव ककुभां दिशामष्टदलहृदयपुण्डरीकदलानां मध्ये तत्त्वं प्रकाशयन्तः संचरन्तु । अथेत्यवधारणे । अश्ववारा अश्वाः प्रकाशरश्मयस्तान्वारयन्ति प्रकोष्ठेषु प्रापयन्ति तेऽश्ववाराः सुषुम्नायां संचारमार्गाः संचरन्तु नियम्यन्ताम् । तत्र दृष्टान्तः । असिलसत्पाणय इव । दृष्टं लोके खड्गहस्ता नियन्तारो भवन्तीति । अनेन चित्तस्थैर्यमुक्तम् । उक्तं च सुषुम्नाया एकत्र नियमनं मनसः स्थैर्यहेतुरिति । एवमन्यत्राप्यूह्यम् ॥ २५ ॥ पारिपार्श्वकं पार्श्वचरं सेवकम् । साङ्ग्रामिकं संग्रामे योग्यम् । पारिपार्श्वक इत्याद्यायुष्मन्नित्यन्तं सुगमम् ॥—उद्धूतेति । एते वाहाः वहन्ति ते वाहा अश्वाः गगनसीम्न्यन्तरिक्षे रथं वहन्ति । कीदृशा वाहाः । उद्धूतमुच्चलितं यत्पांसुपटलं धूलिसमूहस्तेनानुमितो ज्ञातो यः

---

१. 'उपनयत्विति' इति पाठः । २. 'विधी रथारोहणं' इति पाठः ।

निर्मथ्यमानजलधिध्वनिघोरहेषा-
मेते रथं गगनसीम्नि वहन्ति वाहाः ॥ २६ ॥

इयं च नातिदूरे दर्शनपथमवतीर्णा त्रिभुवनपावनी वाराणसी नाम नगरी ।

अमी धारायन्त्रस्खलितजलझङ्कारमुखरा
विभाव्यन्ते भूयः शशिकररुचः सौधशिखराः ।
विचित्रा यत्रोच्चैः शरदमलमेघान्तविलस-
त्तडिल्लेखालक्ष्मीं वितरति पताकावलिरियम् ॥ २७ ॥

मानानि खुराग्राणि तेषां समूहश्चयस्तेन चुम्बिता दलिता भूमिभागा येषां ते । दीर्घगगनभागगामिनां तुरङ्गाणां क्वचिद्भूतलस्पर्शो धूलिवितानेनानुमीयत इति भावः । निर्मथ्यमानस्यालोड्यमानस्याम्बुराशेर्ध्वनिवद्धोरा हेषा यस्मिन्कर्मणि । घोरघोषमिति पाठे रथविशेषणम् । एते वाहाः रथं स्यन्दनं गगनभागे वहन्ति । नयन्तीत्यर्थः ॥ २६ ॥ अमी इत्यादि । धारायन्त्रेभ्यः स्खलितानि जलानि येषां ते झङ्करा ध्वनिविशेषास्तैर्मुखराः शब्दायमानाः शशिकररुचश्चन्द्रमण्डलस्पर्धिनः सौधशिखराः प्रासादाग्राणि । शिखरशब्द उभयलिङ्गः । अर्धर्चादिषु पाठात् । यत्र शिखरेषु विचित्रेऽयं पताकावलिरुच्चैरुन्नता शरत्काले अमलानां शुभ्राणां मेघानामन्ते शिरसि विलसन्त्यस्तडिल्लेखास्तासां लक्ष्मीं सौभाग्यं वित-

प्रबन्धो गतिसंतानस्तेन धावता खुराग्रसमुदायेन चुम्बित ईषत्स्पृष्टो भूमिभागो यैस्ते। कीदृशं रथम् । निर्मथ्यमानो यो जलधिः समुद्रस्तस्य यो ध्वनिस्तद्वद्धोरो भयावहो घोषः शब्दो यस्य तम् । आन्तरोऽर्थः । एते प्राणा वहन्ति धारयन्ति रथमिव रथं शरीरं गगनसीम्न्यन्तरिक्षे लघिम्ना घोरो जीवितहारी इत्यादि लुप्तोपमया सर्वं योजनीयम् । विस्तारभयान्नेह प्रपञ्च्यते ॥ २६ ॥ दर्शनपथमवतीर्णा दृष्टिमार्गगोचरा त्रिभुवनपावनीति । मर्त्यानां स्नानदर्शनपानादिभिः देवानां नागानां च मनुष्यशरीरग्रहणेन चेति त्रिभुवनपावनीत्युक्तम् । देवानां नागानां च स्वशरीरग्रहणे धर्मोत्पादकत्वाभावात् । वाराणसीं वर्णयति—अमी धारेति । अमी संमुखेवर्तमानाः सौधशिखरा गृहोपरिभागा भूयो बाहुल्येन विभाव्यन्ते दृश्यन्ते । कीदृशाः सौधशिखराः । धारायन्त्रेभ्यः स्खलन्निर्गच्छद्यज्जलं तस्य यो झङ्कारः शब्दविशेषस्तेन मुखराः सशब्दाः । पुनः कीदृशाः सौधशिखराः । शशिकरान्मुष्णन्ति चोरयन्ति ते इति वा पाठः । सुधाधवला इत्यर्थः । यत्र येषु सौधशिखरेष्वियमुपलभ्यमाना विचित्रा नानावर्णा पताकानामावलिः पङ्क्तिरुच्चैरतिशयेन शरद्यमला निर्मला ये मेघास्ते-

१. 'घोरघोषम्' इति पाठः ।

एताश्च प्रतिमुकुलं लग्नमधुपावलीरणितमुखरा जृम्भभरविगलन्म-करन्दबिन्दुदुर्दिनाः कुसुमसुरभयो नातिदूरे श्यामायमानघनच्छ-दच्छायातरवो नगरपर्यन्तोद्यानभूमयः। यत्रैते मरुतोऽपि गृहीतपा-शुपतव्रता धूलिमुद्धूलयन्तस्तपसा इव लक्ष्यन्ते। तथाहि—

तोयार्द्राःसुरसरितः सिताः परागै-
र्चन्तश्च्युतकुसुमैरिन्दुमौलिम्।
प्रोद्गीतां मधुपरुतैः स्तुतिं पठन्तो
नृत्यन्ति प्रचललताभुजैः समीराः॥ २८

रति। लक्ष्मीमिव लक्ष्मीमिति प्रतिबिम्बाक्षेपात्तदङ्गतो निदर्शनालंकारः॥ २७॥ **एताश्चेति।** जृम्भाभरोऽत्यन्तविकासस्तेन विगलन्मकरन्दबिन्दुभिर्दुर्दिना दु-र्दिनायमानाश्छायातरवो नमेरुवृक्षास्तेषाम्। शिष्टं स्पष्टम्॥—**तोयार्द्रा इति।** सुरसरितो भागीरथ्यस्तोयार्द्राः। स्नाता इत्यर्थः। परागैः सिता भस्मोद्धूलिता इति गम्यते। च्युतकुसुमैः पुष्पोपहारैरिति यावत्। इन्दुमौलिं काशीपतिम-र्चन्तः पूजयन्तः। भौवादिकोऽयमर्चतिः। प्रोद्गीतां प्रकर्षेणोद्गीतां गाथारूपां

यामन्तर्मध्ये विलसन्ती चमत्कारमाविष्कुर्वती या तडिद्विद्युल्लता तस्या लेखा रेखा तस्या लक्ष्मीं शोभां वितरति विस्तारयति। सौधमेघयोस्तडित्पताकयोश्चोपमानोपमेय-भावः॥ २७॥ **एताश्चेति।** एता नगरस्य वाराणसीनाम्नः पर्यन्तेषूद्यानभूमय उपवनप्रदेशा नातिदूरेऽतिनिकटे। दृश्यन्ते इत्यध्याहारः। कीदृश्य उद्यानभूमयः। मुकुलं मुकुलं प्रतीति प्रतिमुकुलं प्रतिकोशं लग्ना ये मधुपास्तेषामावलिः पङ्क्तिस्तस्या रणितेन शब्दितेन मुखरा वाचाला जृम्भो विकासस्तस्यारम्भ उत्पत्तिस्तस्या भरो-ऽतिशयः अर्थात्कुसुमानां विकासातिशयस्तस्माद्विगलन्निःसरन्यो मकरन्दः पुष्परसस्तेन दुर्दिनं यासु ताः। वृष्टिमत्य इत्यर्थः। पुनः कीदृश्यः। कुसुमैः सुरभयः सुपरिमलाः श्यामायमाना नीलवर्णा घनच्छाया निबिडच्छायास्तरवो यासु ताः। मरुतो वायवः' गृहीतं पाशुपतव्रतं यैस्ते सर्वदा धूलिमुद्धूलयन्तः। प्रचण्डा इति भावः। तदेव दर्श-यति—तथा हि। **तोयार्द्रा इति।** समीरा वायवः प्रकर्षेण चलाश्चञ्चला लतास्ता एव भुजास्तैर्नृत्यन्ति, नृत्यं कुर्वन्ति। तापसाः पाशुपता अप्येवं नृत्यतीन्ति भावः। कीदृशा वायवस्तापसाश्च। सुरसरितो गङ्गायास्तोयेनार्द्राः कृतजाह्नवीमज्जनाः। पुनः परागैः कुसुमरजोभिः सिता युक्ता वायवः। 'षिञ् बन्धने' इत्यस्य सिता इति रूपम्। परागैर्विभूतिरजोभिः सिता धवलास्तापसाश्च्युतकुसुमैः स्वयमेव पतितैः पुष्पैरिन्दुमौलिं

१. 'जृम्भारम्भभर' इति पाठः। २ 'श्यामायमाना नवघन' इति पाठः।

राजा—(सानन्दमालोक्य ।)

सैषान्तर्दधती तमोविघटनादानन्दमात्मप्रभं
चेतः कर्षति चन्द्रचूडवसतिर्विद्येव मुक्तेः पदम् ।
भूमेः कण्ठविलम्बिनीव कुटिलामुक्तावलिर्जाह्नवी
यत्रैवं हसतीव फेनपटलैर्वक्रां कलामैन्दवीम् ॥ २९ ॥

सूतः—(परिक्रम्य) आयुष्मन्, पश्य पश्य । तदिदं[1] सुरसरित्परिसरालंकारभूतं भगवतः पावनमनादेरादिकेशवस्य विष्णोरायतनम् ।

---

स्तुतिं मधुपरुतैर्भ्रमरझङ्कारैः पठन्तः प्रचलितलताभुजैः । उपमितसमासः । नृत्यन्ति नर्तनं कुर्वन्ति । अत्र तोयार्द्रा इत्यनेन शैत्यम्, परागैरित्यनेन सौरभ्यम्, प्रचललताभुजैरित्यनेन मान्द्यं च सूचितम् ॥ २८ ॥—**सैषेति** । तमोविघटनादज्ञानविदलनादात्मप्रभं आत्मैव प्रभा प्रकाशो यस्य तमानन्दमन्तरभ्यन्तरे दधती पोषयन्ती । मुक्तेः पदं मुक्तिस्थानं चन्द्रचूडवसतिर्विश्वेश्वरस्य निवासभूमिरेषा काशी विद्येव ब्रह्मविद्येव चेतः कर्षति मनो हरति । यत्र काश्यां भूमेः कण्ठविलम्बिनी कुटिला मुक्तावलिरिव भाति जाह्नवी । इयं फेनपटलैरैन्दवीमिन्दुसंबन्धिनीं कलां हसती स्पर्धते । तत्तुल्यतया प्रकाशत इत्यर्थः ॥ २९ ॥

---

शंकरमर्चन्तः पूजयन्त इव । पुनः मधुपरुतैर्भ्रमरशब्दैः प्रोद्गीतामुच्चैर्गीयमानां स्तुतिं पठन्तो वायवस्तापसाश्च मधुपानामिव रुतानि तैः प्रकर्षेण तालस्वरतानादिरूपेणोद्गीतां गानक्रमवतीं स्तुतिं पठन्त इत्यर्थः । अचाक्षुषे वायाविदं नोपपद्यत इति चेदारोपेणाप्युपपत्तेरिति समाधेयम् । सरन्ति मरुतो यस्यामिति सरित् ब्रह्मनाडीत्याद्यध्यात्ममूह्यम् ॥ २८ ॥ **सैषान्तर्दधतीति** । सैषा चन्द्रचूडस्य महादेवस्य वसतिः काशी चेतो मन आकर्षति । वशीकरोतीत्यर्थः । कीदृशी काशी । अन्तस्तमोविघटनादज्ञानविनाशात्स्वप्रभमात्मप्रकाशमानन्दं दधती प्रकाशयन्ती । पुनः कीदृशी । मुक्तेः पदं पद्यते प्राप्यतेऽनेनेति पदम् । कारणमित्यर्थः । केव । विद्येव ब्रह्मात्मैकत्वज्ञानमिव । तदप्यज्ञानं विनाश्य स्वप्रकाशमानन्दं प्रकटयन्मुक्तिहेतुरिति । तत्र दृष्टान्तः । सा का । यत्र यस्यां काश्यामियं जाह्नवी गङ्गा वक्रामैन्दवीं कलामर्धचन्द्राकारां चन्द्रकलां फेनपटलैः फेनसमूहैर्हसतीव । उत्प्रेक्षते । कथंभूतेव । भूमेः कण्ठविलम्बिनी कण्ठे लम्बमाना कुटिला स्वभावतः मुक्तावलीव मुक्तामालेव । मुक्तावलीसाम्यं स्वच्छतयेति वेदितव्यम् । एपा ब्रह्मनाडी अन्तर्हृदयकमले चेतो वशीकरोतीत्याभ्यन्तरमूह्यम् । शेषं सुगमम् ॥ २९ ॥ सूतः सारथिः । इदं तदिति । सुरसरितो देवनद्याः परिसरस्तीरं तस्यालंकारभूतमायतनं स्थानम् । अनादिरीश्वर

---

१ 'इदं तत्' इति पाठः ।

राजा—(सहर्षम् ।) अरे,

एष देवः पुराविद्भिः क्षेत्रस्यात्मेति गीयते ।
अत्र देहं समुत्सृज्य पुण्यभाजो विशन्ति यम् ॥ ३० ॥

सूतः—आयुष्मन्, पश्य पश्य । एते तावत्कामक्रोधलोभादयोऽस्मद्दर्शनमात्रादितो देशाद्दूरमतिक्रामन्ति ।

राजा—एवमेतत् । तद्भवतु । स्वाभीष्टसिद्धये भगवन्तं नमस्यामः । (रथादवतीर्य प्रविश्यावलोक्य च ।) जय जय भगवन् अमरचयचक्रचूडामणि[2]श्रेणिनीराजितोपान्तपादद्वयाम्भोज राजन्न-

---

एष इत्यादि । एष आदिकेशवः पुराविद्भिर्व्यासादिभिः क्षेत्रस्य काशीक्षेत्रस्यात्मा आत्मभूतः । क्षेत्रशब्देन देहस्थानविषययोरभेदाध्यवसायादात्मेति वक्तुं युज्यते । अत्र केशवायतने पुण्यभाजो योगिनो देहं समुत्सृज्य यं केशवं विशन्ति । काशीखण्डे पूर्वभागे एकतमाध्याये—'आदौ पादोदके तीर्थे विद्धि मामादिकेशवम् । अग्निबिन्दोर्महाप्राज्ञ भक्तानां मुक्तिदायकम् ॥ अविमुक्तेऽमृतक्षेत्रे येऽर्चयन्त्यादिकेशवम् । तेऽमृतत्वं भजन्त्येव सर्वदुःखविवर्जिताः ॥' इति । तादात्म्यतामापन्ना भवन्ति । विश्वनाथकेशवयोरैक्यात् केशवैक्यमापन्ना विश्वेश्वरैक्यमापन्ना इति तात्पर्यार्थः । क्षेत्रस्यात्मेत्यनेन केशवस्य सर्वान्तर्यामित्वमुक्तम् ॥ ३० ॥—आयुष्मन्, पश्येति व्याख्यातं प्राक् । इतःपरं महामोहविजयद्वारा प्रबोधोदयार्थं श्रीविष्णुं प्रस्तुवन् विष्णुभक्त्या सहावलम्बते—जयजयेत्यादिना । मोहच्छिदं बोधोदयं देहि । देव, तुभ्यं नम इत्य-

---

आयतनवाक्यात इत्यर्थः । एष देव इति । एष देवः द्योतनाद्देवः परमात्मा पुराविद्भिः क्षेत्रविद्भिः क्षेत्रमहिमज्ञैर्व्यासादिभिः क्षेत्रस्यात्मा क्षेत्राभिमानिनी देवतेति गीयत उच्यते । पुण्यमीश्वरं भजन्ति सेवन्ते ते पुण्यभाजः शिवभक्ता आदिकेशवसंनिधौ देहं समुत्सृज्य यं विशन्ति प्रविशन्ति । प्राप्नुवन्तीत्यर्थः ॥ ३० ॥ एत इति । अनेन विवेकासक्तिमात्रेण कामादीनां पराभवो दर्शितः । रथादवतीर्येत्यनेन शरीरेन्द्रियेष्वौदासीन्यं सूचितम् । बोधोत्पत्तिरूपस्वाभीष्टसिद्धये भगवन्तमादिकेशवं स्तौति—अमरचयेत्यादिना । भगवान्षड्गुणैश्वर्यसंपन्नः । 'उत्पत्तिं च विनाशं च भूतानामागतिं गतिम् । वेत्ति विद्यामविद्यां च स वाच्यो भगवानिति ॥' जयतु सर्वोत्कर्षेण वर्तताम् । अमरचयेति सर्वाणि संबुद्ध्यन्तानि । अमराणां देवानां चयः समूहस्तस्य चमूचक्रं सेनामण्डलं तस्य चूडामणिश्रेणिभिर्मुकुटमणिपङ्क्तिभिर्नीराजितमुपान्ते समीपे

---

१ 'अये' इति पाठः । २ 'चूडामणिनीराजित' इति पाठः ।

खद्योतखद्योतकिर्मीरितस्वर्णपीठस्फुरद्द्वैतविभ्रान्तिसंतानसंतप्तवन्दारु-संसारनिद्रापहारैकदक्ष क्षमामण्डलोद्धारसंभारसंघट्टदंष्ट्राग्रकोटिस्फुर-च्छैलचक्र क्रमाक्रान्तलोकत्रय प्रबलभुजबलोद्धृतगोवर्धनछत्रनिवा-रिताखण्डलोद्योजिताकाण्डचण्डाम्बुवाहातिवर्षत्रसद्गोकुलत्राणविस्मा-पिताशेषविश्व प्रभो विबुधरिपुवधूवर्गसीमन्तसिन्दूरसन्ध्यामयूख-च्छटोन्मार्जनोद्दामधामाधिप त्रस्तदैत्येन्द्रवक्षस्तटीपाटनाकुण्ठभास्व-न्नखश्रेणिपाणिद्वयस्रस्तविसारिरक्तार्णवामग्नलोकत्रय त्रिभुवनरिपुकै-

---

न्तेन । जयजयेत्यादरान्द्विरुक्तिः । स्फुरद्द्वैतेति । द्वितैव द्वैतम् । प्रज्ञादित्वात्स्वा-र्थेऽण् । स्फुरत्प्रकाशमानं द्वैतं तत्रोत्पन्ना विभ्रान्तिर्देहात्माध्यासः । संतानः संततिरनादिपरम्परा तया संतप्ताः खिन्ना वन्दारवो भक्तास्तेषां संसार एव निद्रा तस्या अपहारैकदक्षोऽपनोदनप्रवीणः । अनेन बुद्धावतार उक्तः । क्षमामण्ड-लेत्यादिना वराहावतार उक्तः । क्रमाक्रान्तेत्यादिना त्रिविक्रमावतार उक्तः ।

---

पादद्वयाम्भोजं चरणयुग्मकमलं यस्य । राजन्तः शोभमाना ये नखास्तेषां द्योताः प्रकाशास्त एव खद्योतास्तैः किर्मीरितं शबलितं स्वर्णपीठं यस्य । स्फुरद्यत् द्वैतं भेदस्तस्य या भ्रान्तिस्तस्याः संतानेन परंपरया संतप्ताः खिन्ना ये वन्दारवो वन्दनशीला भक्तास्तेषां संसाररूपा या निद्रा तस्या अपहारे विनाशे एको मुख्यो दक्षः तस्य संबोधनं हे दक्ष । एवं संबुध्यन्तेषु सर्वत्र ज्ञेयम् । क्षमेति । क्षमामण्डलस्य क्षोणीवलयस्य य उद्धारस्तेन संभाराणां पर्वतादीनां संघट्टः संमर्दो यस्यां तस्यां दंष्ट्राग्रकोटौ दंष्ट्राग्रभागे स्फुरच्छैलचक्रं पर्वतसमूहो यस्य । क्रमेण पादविक्षेपेण आक्रान्तं लोकत्रयं येन । प्रकृष्टबलाभ्यां भु-जाभ्यां बलेनोद्धृतमूर्ध्वं धृतं यद्गोवर्धनरूपं छत्रं तेन निवारितं नितरां वारितम् । आख-ण्डलेनेन्द्रेणोद्योजिता प्रेरिता अकाण्डेऽसमये चण्डाः प्रलयकालीना अम्बुवाहा मेघास्ते-षामतिवर्ष येन, त्रसद्भीतं यद्गोकुलं तस्य त्राणं रक्षणं तेन विस्मापितमाश्चर्ययुक्तं विश्वं येन । प्रभो अव्याहतैश्वर्य, विबुधा देवास्तेषां रिपवो दानवास्तेषां यो वधूवर्गः स्त्रीसमू-हस्तस्य यत्सीमन्तेषु सिन्दूरं तदेव संध्यामयूखच्छटा संध्याकालीना मयूखाः किरणा-स्तेषां छटा भास्तस्या उन्मार्जने प्रोञ्छने उद्दाम प्रसिद्धं यद्धाम तेजः तस्याधिप आश्रयस्तस्य संबोधने हे अधिप, त्रस्तो लीनो यो दैत्येन्द्रो हिरण्यकशिपुस्तस्य वक्ष-स्तट्याः पाटने विदारणेऽकुण्ठाप्रतिहता भास्वती दीप्तिमती नखानां श्रेणिः पङ्क्ति-र्यस्य ताद‍ृशं यत्पाणिद्वयं तस्मात्स्रस्तमधः पतितं विसारि प्रसरणशीलं यद्रक्तं तस्या-र्णवः सागरस्तस्मिन्नासमन्तान्मग्नं लोकत्रयं येन । त्रिभुवनस्य रिपुर्यः कैटभो दै-

---

१ 'काण्डाम्बुवाह' इति पाठः ।

टभोद्दण्डकण्ठास्थिकूटस्फुटोन्मार्जितोद्दामचक्रस्फुरज्ज्योतिरुल्लासितो-द्दामदोर्दण्डखण्डेन्दुचूडाप्रिय प्रौढदोर्दण्डविभ्रान्तमन्थाचलक्षुब्धदुग्धाम्बुधिप्रोत्थितश्रीभुजवल्लीसंश्लेषसंक्रान्तपीनस्तनाभोगपत्रावलीलाञ्छितोरस्थल स्थूलमुक्ताफलोदारहारप्रभामण्डलस्फुरत्कण्ठवैकुण्ठ भक्तस्य लोकस्य संसारमोहच्छिदं देहि बोधोदयं देव तुभ्यं नमः ।

(निर्गमनं नाटयित्वा विलोक्य च) साधुरयमेवास्माकं निवासोचितो देशः । तदत्रैव स्कन्धावारं निवेशयामः । (इति निष्क्रान्तौ ।)

इति श्रीकृष्णमिश्रविरचिते प्रबोधचन्द्रोदयनाम्नि नाटके
विवेकोद्योगो नाम चतुर्थोऽङ्कः ॥ ४ ॥

---

प्रबलभुजबलोद्धृतेत्यत्र प्रकटभुजबलभद्रावतार उक्तः । संत्रस्तेत्यादिना नृसिंहावतार उक्तः । मन्थाचलो मन्दराद्रिस्तेन क्षुब्धः क्षुभितः । अनेन कूर्मावतार उक्तः । क्षुब्धशब्दो महाकविप्रयोगात्साधुः । शेषं सुगमम् ।

इति श्रीमद्राजाधिराजपरमेश्वरश्रीवीरप्रतापश्रीकृष्णरायमहाराजसा-
म्राज्यधुरन्धरश्रीसाल्वतिम्मदण्डनायकभागिनेयनाण्डिल्लगो-
पमन्त्रिशेखरविरचितायां प्रबोधचन्द्रोदयव्याख्यायां
चन्द्रिकासमाख्यायां चतुर्थोऽङ्कः ॥ ४ ॥

---

त्वस्तस्योद्दण्डः स्थूलो यः कण्ठस्तस्यास्थिकूटमस्थिसंघातस्तस्मिन् स्फुटं स्पष्टमुन्मार्जितमुद्दामं ख्यातं यच्चक्रं सुदर्शनं तस्य स्फुरद्दीप्यमानं यज्ज्योतिस्तेनोल्लासितोद्दीप्ता उद्दामाः उद्भटा उद्दण्डाश्चत्वारो दोर्दण्डा बाहवो यस्य । खण्डेन्दुचूडो महादेवः प्रियो यस्य । प्रौढोऽतिप्रबलो यो दोर्दण्डो बाहुदण्डस्तेन विभ्रान्तो भ्रामितो यो मन्थाचलो मन्दराद्रिस्तेन क्षुब्धो यो दुग्धाम्बुधिर्दुग्धसमुद्रस्तस्मिन् प्रोत्थिताविर्भूता या श्रीर्लक्ष्मीस्तस्या या भुजवल्ली तत्संश्लेषेणालिङ्गनेन संक्रान्ता पीनस्तनयोराभोगे विशाले स्थले या पत्रावली पत्रलेखा तया लाञ्छितमुरःस्थलं यस्य । स्थूलानि यानि मुक्ताफलानि तेषामुदारश्चासौ हारश्च तस्य प्रभामण्डलेन स्फुरन् कण्ठो यस्य, वैकुण्ठ परमात्मन्, भक्तस्य लोकस्य भक्तजनस्य यः संसारस्तदुपादानं मोहो भावरूपमज्ञानं छिनत्तीति छिद् तं बोधोदयं ब्रह्माद्वैतसाक्षात्कारोदयं देहि । देव स्वप्रकाश तुभ्यं नमोऽस्तु ॥ नाटयित्वा । भ्रमणविशेषेण दर्शयित्वेत्यर्थः । स्कन्धावारं कटकं निवेशयामः स्थापयामः । इति निष्क्रान्तौ ॥ विवेकसारथिनाविति शेषः ॥

इति श्रीप्रबोधचन्द्रोदयव्याख्याने प्रकाशाख्ये विवेकोद्योगो नाम
चतुर्थोऽङ्कः संपूर्णः ॥ ४ ॥

---

१ 'उल्लासितोद्दामरोद्दण्डदोर्दण्ड' इति पाठः । २ 'स्थलमुक्ता' इति पाठः ।

## पञ्चमोऽङ्कः ।

(ततः प्रविशति श्रद्धा ।)

**श्रद्धा**—(विचिन्त्य ।) [1]प्रसिद्धः खल्वयं पन्थाः । यतः—

निर्दहति कुलविशेषं ज्ञातीनां वैरसंभवः क्रोधः ।
वनमिव घनपवनाहततरुवरसंघट्टसंभवो दहनः ॥ १ ॥

(सास्रम् ।) अहो दुर्वारो दारुणः सोदरव्यसनजन्मा शोकानलः । यो विवेकजलधरशतैरपि न मन्दीक्रियते । तथाहि—

ध्रुवं ध्वंसो भावी जलनिधिमहीशैलसरिता-
मतो मृत्योः शीर्यत्तृणलघुषु का जन्तुषु कथा ।
तथाप्युच्चैर्बन्धुव्यसनजनितः कोऽपि विषमो
विवेकप्रोन्माथी दहति हृदयं शोकदहनः ॥ २ ॥

---

**प्रसिद्धः खल्वयमित्यादि । निर्दहतीति ।** ज्ञातीनां वैरसंभवः परस्परसंघर्षजनितः क्रोधाग्निः सर्वमपि कुलं निर्दहति । झंझावातप्रोज्ज्वलितो दवाग्निः सर्वं वनमदग्ध्वा न शाम्यतीति भावः ॥ १ ॥ **तथाहीत्यादि । ध्रुवमिति ।** अतः मृत्योः पुरोवर्तिनोऽन्तकात्सकाशाज्जलनिधिमहीशैलसरितां ध्वंसो भावी भविता । ध्रुवं निश्चयः । अयमर्थः । भूभूधरादिकं सावयवत्वात्कार्यं, कार्यत्वादुत्पत्तिमत्, उत्पत्तिमत्त्वाद्विनाशीति । तथा च भगवद्वाक्यम्—

---

इत्थं चतुर्थेऽङ्के विवेकोद्योगमुक्त्वा वैराग्योत्पत्तिं वर्णयितुं पञ्चमेऽङ्के श्रद्धायाः प्रवेशं सौति—**ततः प्रविशति श्रद्धेति।** परस्परप्रतिस्पर्धिनोः संग्रामं सूचयन्त्याह—**प्रसिद्ध इति ।** अयमित्यनेनोक्तं पन्थानं विशदयति—**यतः । निर्दहतीति ।** वैरात्संभव उत्पत्तिर्यस्यैतादृशो यः क्रोधः स ज्ञातीनामशेषं समस्तं कुलं निर्दहति । तत्र दृष्टान्तः । घनः प्रचण्डो यः पवनो वायुस्तेनाहता आन्दोलिता ये तरुवराः स्थूलवृक्षास्तेषां संघट्टेन संघर्षेण संभवो जन्म यस्य स तादृशो दहनोऽग्निर्वनमिव ॥ १ ॥ उक्तं च महाभारते—'धूमायन्ते व्यपेतानि संहतानि ज्वलन्ति च । उन्मूलकानीव भान्ति ज्ञातयो भरतर्षभ ॥' इति । सोदराणां बन्धूनां व्यसनं मरणं तस्माज्जन्म यस्य स शोक एवानलोऽग्निः । विवेक एव जलधरा मेघास्तेषां शतानि तैः । एतदेव स्पष्टयति—**ध्रुवमिति ।** जलनिधयश्च समुद्राः मही च शैलाः पर्वताश्च सरितः नद्यश्च तासां स्थिराणामपि ध्रुवं निश्चयेन ध्वंसो भावी भविष्यति । अतो हेतोः शीर्यत्त्रुटितं यत्तृणं तद्वल्लघुष्वतितुच्छेषु जन्तुषु प्राणिषु मृत्योर्मरणस्य का कथा । किं वक्तव्यमि-

---

१ 'खल्वयं प्रसिद्धः' इति विपरीतः पाठः ।

येन तथा कुलप्रकृतिष्वपि भ्रातृषु कामक्रोधादिषु कथाशेषतां गतेषु ।

निकृन्ततीव मर्माणि देहं शोषयतीव मे ।
दहतीवान्तरात्मानं क्रूरः शोकाग्निरुत्थितः ॥ ३ ॥

(विचिन्त्य ।) आदिष्टास्मि देव्या विष्णुभक्त्या । वत्से श्रद्धे, अहमत्र हिंसाप्रायसमरदर्शनपराङ्मुखी । तेन वाराणसीमुत्सृज्य शालिग्रामाभिधाने भगवतः क्षेत्रे कंचित्कालमतिपालयामि । त्वं तु यथावृत्तमागत्य मे निवेदयिष्यसीति । तदहं देव्याः सकाशं गत्वा सर्वमेतत्समरवृत्तान्तमावेदयामि । (परिक्रम्यावलोक्य च ।) ए-

---

'जातस्य हि ध्रुवो मृत्युः' इति । शीर्यत्तणलघुषु जरद्धासाग्रतुल्येषु का कथा किमु वक्तव्यम् । जन्तूनां परिच्छिन्नायुः परिमाणवत्त्वादिति भावः । विवेकं प्रोन्मथ्नातीति विवेकप्रोन्माथी । विवेके विद्यमानेऽपि शोकदहनो न शाम्यति किं कुर्म इति तात्पर्यम् ॥ २ ॥ येनेत्यादि । कुलप्रकृतिषु कुलस्य मूलभूतेषु । संप्रदायप्रवर्तकेष्विति यावत् । निकृन्ततीवेति । अत्रोत्प्रेक्षालंकारः । लोकमान तिङ् (?) तेनेति नियमात् । अतः संभावनैव प्रतीयताम् । आदिष्टास्मीत्यारभ्य संदेहमारोपयतीत्यन्तं सुगमम् ॥ णिजन्ताद्रुहेः 'रुहः पोऽन्यतरस्याम्' इति

---

त्यर्थः । तथाप्येवं विवेके जातेऽप्युच्चैरतिशयेन कोऽप्यनिर्वाच्यो विषमोऽसह्यो विवेके प्रकर्षेणोन्मथ्नाति नाशयति तादृशो बन्धूनां व्यसनेन निधनेन जनितः शोक एव दहनोऽग्निर्हृदयं चेतो दहति ॥ २ ॥ कामादिवधस्य नाट्ये प्रत्यक्षतः कर्तुमशक्यत्वाच्छ्रद्धामुखेन तं सूचयति । कथा वार्ता सैव शेषोऽवशिष्टो भागस्तस्य भावस्तत्ता तां गतेषु प्राप्तेषु । मृतेष्वित्यर्थः ॥—निकृन्ततीति । क्रूरोऽसह्यः शोकाग्निः उदूर्ध्वाः शिखा यस्य उदरकत्वादुच्छिखो मे मम मर्माणि निकृन्ततीव छिनत्तीव । देहं शोषयतीवान्तरात्मानं मनो दहतीव ॥ ३ ॥— कामादिवधं पूर्वसूचितं प्रकटयितुं विष्णुभक्तेः प्रवेशं सूचयति—आदिष्टेत्यादि । विष्णुभक्तिर्नाम जडानृताहंकारादिरहिता ज्ञानसत्यानन्दाद्याकारा प्रत्यक्चेतोवृत्तिः । हिंसाप्रायः वधप्रधानो यः समरः संग्रामस्तद्दर्शनेन पराङ्मुख्युदासीना । शालग्रामाभिधाने चक्रतीर्थे भगवतो विष्णोः क्षेत्रेऽतिपालयाम्यतिक्रमामि । यथावृत्तम् । येन प्रकारेण जातं वृत्तान्तमिति शेषः ।

---

१ 'तथा क्रूर' इति पाठः । २ 'कथावशेषतां' इति पाठः । ३ 'शोकाग्निरुच्छिखः' इति पाठः ।

तच्चक्रतीर्थम् । यत्रासौ संसारसागरोत्तारतरणिकर्णधारो भगवान्हरिः स्वयं प्रतिवसति । (प्रणम्य ।) इयं च महामुनिभिरुपास्यमाना भगवती विष्णुभक्तिः शान्त्या सह किमपि मन्त्रयते । यावदुपसर्पामि । (इति परिक्रामति ।)

(ततः प्रविशति विष्णुभक्तिः शान्तिश्च ।)

**शान्तिः**—देवि, प्रबलचिन्ताकुलहृदयामिव भवतीमालोकयामि ।

**विष्णुभक्तिः**—वत्से, एतस्मिन्वीरवरक्षये महति सांपराये जाते न जाने बलवता महामोहेनाभियुक्तस्य वत्सविवेकस्य कीदृशो वृत्तान्त इति दुःस्थितमिव मे हृदयम् ।

**शान्तिः**—किमत्र विचिन्त्यते । ननु भगवती चेत्कृतानुग्रहा तन्नियतमेव राज्ञो विवेकस्य विजय इति जानामि ।

**विष्णुभक्तिः**—वत्से,

यद्यप्यभ्युदयः प्रायः प्रमाणादवधार्यते ।
कामं तथापि सुहृदामनिष्टाशङ्कि मानसम् ॥ ४ ॥

---

हकारस्य पकारः । जनयतीत्यर्थः । यावदुपसर्पाम्युपसर्पिष्यामि । 'यावत्पुरानिपातयोर्लट्' इति भविष्यति लट् ॥—विवेकस्येति । अचिरोत्पन्नत्वाद्वात्सल्यातिशयाच्च वत्सत्वनिर्देशः ॥ यद्पीति । यदपि यद्यपीत्यर्थः ॥ ४ ॥ प्रायो-

---

आवेदयाम्यावेदयिष्यामि । यत्रेति । यत्र चक्रतीर्थे संसारसागरस्योत्तारे पारगमने तरणिर्नौका । 'स्त्रियां नौस्तरणिस्तरिः' इत्यमरः । ज्ञानरूपा तस्याः कर्णधारो नियामकः महामुनिभिर्नारदशुकपराशरादिभिरुपास्यमाना सेव्यमाना । उपास्यमाने त्यनेनेदमुक्तम् । यन्नानाविधा भक्तिरेव परमार्थसाधनम् । उपायान्तरं नास्त्येव कलौ । विक्षिप्तमनसां तु सुतराम् । भक्त्यैवानेके संतीर्णाः । तथोक्तम् 'विष्णोस्तु श्रवणे परीक्षितिरभूद्वैयासकिः कीर्तने प्रह्लादः स्मरणे तदङ्घ्रिभजने लक्ष्मीः पृथुः पूजने । अक्रूरस्त्वभिवन्दनेऽथ हनुमान्दास्ये च सख्येऽर्जुनः सर्वस्वात्मनिवेदने बलिरभूत्कैवल्यमेषां पदम् ॥' इति । सांपराये संग्रामेऽभियुक्तस्य तिरस्कृतस्य दुःखितमिव सचिन्तमिव मे मम हृदयं मानसम् ॥ नियतमेव निश्चितमेव ॥—यद्यपीति । यद्यपि

---

१ 'एतस्मिन्महति' इति पाठः । २ 'संपराये न जाने' इति पाठः । ३ 'यद्यप्यभ्युदयः' इति पाठः ।

विशेषतश्च श्रद्धायाश्चिरमनागमनं मनसि संदेहमारोपयति ।

श्रद्धा—(उपसृत्य ।) भगवति, प्रणमामि ।

विष्णुभक्तिः—श्रद्धे, स्वागतम् ।

श्रद्धा—देव्याः प्रसादेन ।

शान्तिः—अम्ब, प्रणमामि ।

श्रद्धा—पुत्रि, मां परिष्वजस्व ।

शान्तिः—(तथा करोति ।)

श्रद्धा—वत्से, देव्या विष्णुभक्तेः प्रसादान्मुनिजनचेतःपदं प्राप्नुहि ।

विष्णुभक्तिः—अथ तत्र किं वृत्तम् ।

श्रद्धा— यद्देव्याः प्रतिकूलमाचरतामुचितम् ।

विष्णुभक्तिः—तद्विस्तरेणावेदय ।

श्रद्धा—आकर्णयतु भवति । देव्यामादिकेशवायतनादपक्रान्तायामेव किंचिदुत्सृष्टपाटलिम्नि भगवति भासति, विजयघोषणाहूयमानानेकवरवीरबहुलतरसिंहनादवधिरितदिगन्ते संततरथतुरङ्गखुरखण्डितभूमण्डलोच्छलद्विपुलरजःपटलान्तरितकिरणमालिनि प्र-

---

ऽत्यर्थम् । अत्रैतस्मिन् । महावीरवरसङ्ग्रामे बलवता महामोहेनाभियुक्तस्य वत्सस्य विवेकस्य कीदृशो वृत्तान्त इति न जानामि । दुःस्थितं मे हृदयमित्यनेन शङ्कात्रासयोः प्रतीतेः संभ्रमाख्यं गर्भसन्धेरङ्गम् । लक्षणं तु 'शङ्कात्रासौ च संभ्रमः' इति । किंचिदिति । किंचिदुत्सृष्टपाटलिम्नि ईषन्मृष्टपाटलवर्णे भास्वति सूर्यदेवे सति । सूर्योदयवेलायामित्यर्थः । विजयघोषणाभिर्विजयशब्दादिध्वनिभिराहूयमाना अनेके वरवीरा योद्धृप्रधानरूपास्तेषां बहुलतरसिंहनादैर्बधिरितमन्तरालं यस्य तस्मिन् । संततेति । काशीरजःपटलपिहितसूर्यमण्डले

---

प्रायो बाहुल्येनाभ्युदयो भाग्योत्कर्षः प्रमाणाद्धर्मपक्षपातित्वादवधार्यते तथापि काममत्यर्थं सुहृदां मानसमनिष्टाशङ्कि । अनर्थाशङ्कीत्यर्थः ॥ ४ ॥ देव्या विष्णुभक्तेः । विशेषत इत्यादि विष्णुभक्तेरित्यन्तं सुगमम् । चेतःपदमन्तःकरणरूपं स्थानम् । मोहविवेकयोः संग्राममनुवर्णयिष्यन् विष्णुभक्तिश्रद्धयोः प्रश्नोत्तरे अवतारयति—अथ तत्रेति । देव्यां विष्णुभक्तौ । आदिकेशवायतनाद्गङ्गावरुणासंगमादपक्रान्तायां चक्रतीर्थं प्रति गतायामेव भगवति भास्वत्यतिसमर्थे श्रीसूर्ये ; कीदृशे भास्वति ।

बलतरकर्णतालास्फालनोच्छलत्समदकरिकुम्भसिन्दूरसन्ध्यायमानद-शदिशि प्रलयजलधरध्वानभीषणे तेषामस्माकं संनद्धे सैन्यसागरे महाराजमहामोहस्य महाराजेन नैयायिकदर्शनं दौत्येन प्रहितम्। गत्वा च तेनोक्तो महामोहः।

विष्णोरायतनान्यपास्य सरितां कूलान्यरण्यस्थलीः
पुण्यः पुण्यकृतां मनांसि च भवान्म्लेच्छांन्व्रजेत्सानुजः[1]।

---

प्रलयजलचरध्वानभीषणे तद्वद्भयंकरे। तेषां शत्रूणामस्माकं च सैन्यसागरयोः संनद्धयोः सतोरित्यर्थः। प्रलयजलधरध्वानभीषण इत्यनेन महाभयप्रतीतेरुद्वेगाख्यं गर्भसन्धेरङ्गम्। तल्लक्षणम्—'भीतिरुद्वेगोऽरिनृपादिजा' इति। नैयायिकदर्शनमिति। अयमर्थः। नैयायिकोऽन्यथाख्यातिवादी दूतः सन्नेवमाह—'अरे महामोह, विवेकमहाराजस्यैवमाज्ञा। म्लेच्छादिहृदयानि भवदीयनिवासार्हाणि दत्तानि तत्रैव वस्तव्यम्। विवेकसार्वभौमे विजृम्भमाणे सति सत्पुरुषचित्तेषु भवतोऽवकाशो नास्ति। शुक्तिकायां रजतस्यैव। एतादृशं दूतवचनमन्यथाख्यातिवादिन एव' इति नैयायिकदर्शनस्य दौत्यमुक्तम्। अनेन सामदानोक्तिकथनेन संग्रहाख्यं गर्भसन्धेरङ्गं निरूपितम्। तल्लक्षणं तु—'संग्रहः सामदानोक्तिः' इति। अतःपरं दूताख्य उपसन्धिः प्रस्तुतः। तदुक्तं नाटकचिन्तामणौ—'प्रश्नो दूतश्च लेख्यं च नेपथ्योक्तिस्तथैव च। आकाशभाषणं चेति विज्ञेयाः पञ्च सन्धयः॥' इति। गत्वा च तेनेति। विष्णोरिति। व-

---

किंचिदुत्सृष्टस्त्यक्तः पाटलिमा श्वेतरक्तिमा येन तस्मिन्। च पुनः। तेषां महामोहपक्षे वर्तमानानामस्माकं विवेकपक्षीयाणां सैन्यसागरे सैन्यसमुद्रे संनद्धे संनाहयुक्ते सति। महाराजेन विवेकेन। महाराजमहामोहस्येति कर्मणि षष्ठी। तं प्रति नैयायिकदर्शनं दौत्येन दूतस्य कर्म दौत्यं तेन प्रहितं प्रेषितमिति संबन्धः। कीदृशे सैन्यसागरे। विजयघापेण विजयशब्देनाहूयमाना अनेके बहवो वराः श्रेष्ठा वीरा योद्धारस्तेषां बहलो यः सिंहनादस्तेन बधिरिता बधिराः संपादिता दिशामन्ता येन तस्मिन्। पुनः कीदृशे। सततं निरन्तरं रथाश्च तुरगखुराश्च तैः खण्डितं चूर्णितं यद्भूमण्डलं तस्मादुच्छलदूर्ध्वं पतद्यद्विपुलं रजःपटलं धूलिसमूहस्तेनान्तरित आच्छादितः किरणमाली तरणिर्येन तस्मिन्। पुनः कीदृशे। प्रबलतरं यत्कर्णतालास्फालनं तेनोच्छलद्यत्करिकुम्भसिन्दूरं तेन संध्यायमानाः संध्यातुल्या दश दिशो येन तस्मिन्। पुनः कीदृशे। प्रलयकालीना जलधरास्तेषामिव ध्वानः शब्दस्तेन भीषणे भयानके। दूतेन कथमुक्तस्तदाह—विष्णोरिति। हे महामोहेत्यध्याहारः। भवान्

---

१ 'भवेत्सानुजः' इति पाठः।

नो चेत्सन्तु कृपाणदारितभवत्प्रत्यङ्गधाराक्षर-
द्रक्तस्फीतविदीर्णवक्त्रविसरत्फेङ्कारिणः फेरवाः ॥ ५ ॥

---

क्त्रेभ्यो विसरन्ति निर्गच्छन्ति फेङ्कारा ध्वनिविशेषा येषां सन्तीति फेङ्कारिणः। फेरवाः शिवाः। फे इति रवो येषां ते फेरवा इति व्युत्पत्तिः। अनेन विवेकान्महामोहपलायनेन बीजक्षेपादाक्षेपो नाम गर्भसन्धेर्द्वादशमङ्गम्। तल्लक्षणं तु—'आक्षेपो बीजयोजनम्' इति। अत्र महामोहविवेकयोर्युद्धमभिनेतव्यं न भवतीति कथाक्षेपेण तद्वृत्तान्तः कथितः। तथा चोक्तं सरस्वतीविलासे—'विरसोऽनुचितश्चेति सूच्यः स्याद्वस्तुविस्तरः।' विरसो नाम प्रधानरसपोषकादिभावशून्यः कथासंघट्टनमात्रप्रयोजनो विष्कम्भादिरुच्यते। अनुचितो नाम रङ्गस्थलप्रयोगानर्हो युद्धवधबन्धस्थानभोजनादिरुच्यते। तथा चोक्तम्—'युद्धाध्ववधबन्धांश्च राज्यदेशादिविप्लवान्। संरोधसुरतस्नानभोजनं चानुलेपनम्॥ अम्बरग्रहणादीनि प्रत्यक्षाणि न निर्दिशेत्॥' एतान्युद्वेगकारित्वात्प्रयोगानुचितानीति साङ्गो गर्भसन्धिर्निरूपितः। इतः परं विमर्शसन्धिः प्रस्तूयते—'यत्रावमर्श्यते क्रोधाद्व्यसनाद्वा विमोहनात्। गर्भनिर्भिन्नबीजार्थः सोऽवमर्श इति स्मृतः॥' यत्र प्रकरीनियताप्तिसमन्वयरूपे सन्धौ गर्भनिर्भिन्नो गर्भान्निर्भिन्न आक्षेपनामकेनाङ्गेन निर्भिन्नोऽवमृष्टो यस्मिन्संधौ आनन्दसान्द्रत्वमावहति नियतनिर्निबन्धनाया आक्षेपेण निर्भिन्नत्वाद्गर्भनिर्भिन्नो बीजार्थो विमर्शसन्धावित्यनुसंधेयम्। यत्र बीजार्थः क्रोधाद्व्यसनाल्लोभाद्वावमृश्यते स सन्धिरवमर्शसन्धिरित्युच्यते। अत्र क्रोधादवमर्श्यत इति ध्येयम्। प्रकरीलक्षणं गर्भसन्धावुक्तम्। नियताप्तिर्नाम—'अपायाभावतः प्राप्तेर्नियताप्तिः सुनिश्चिता' इति। एवं नियताप्तिप्रकर्योः संबन्धाद्विमर्शसंधिरुत्पद्यते विकटललाटेत्यारभ्य सहजानन्दसान्द्रत्वमात्मनो ज्ञेयम्। तेन नियताप्तिरुक्ता। अनयोः संधानार्थं त्रयोदशाङ्गानि निरूपणीयानि। तानि च—'अपवादश्च संभेदो विद्रवद्रवशक्तयः। द्युतिः प्रसङ्गश्छलनं व्यवसायो निरोधनम्॥

---

सानुगोऽनुगैः कामक्रोधादिभिः सह म्लेच्छान्म्लेच्छदेशान्व्रजेत् गच्छतु। किं कृत्वा। विष्णोरायतनानि स्थानानि शालग्रामक्षेत्राणि, सरितां गङ्गादीनां कूलानि तीराणि, पुण्याः पावना अरण्यस्थलीर्नैमिषाद्यरण्यभूमीः, पुण्यकृतां याज्ञिकानां मनांस्यपास्य परित्यज्येति सर्वत्र संबध्यते। नो चेन्न गच्छसि चेत् फेत्कारिणः फेत्कारशब्दयुक्ताः फेरवाः सृगालाः कृपाणेन खड्गेन दारितं छिन्नं भवतो यत्प्रत्यङ्गं तस्माद्धारया क्षरन्निर्गच्छद्यद्रक्तं तेन स्फीतानि दीप्तानि वक्त्राणां विवराणि छिद्राणि येषां तादृशाः

---

१ 'वक्त्रविवराः फेत्कारिणः' इति पाठः।

विष्णुभक्तिः—ततस्ततः ।

श्रद्धा—ततो देवि, विकटललाटतटताण्डवितभ्रुकुटिना क्रुद्धेन महामोहेनाभिहितम् । अनुभवत्वस्य दुर्नयपरिपाकस्य विवेकहतकः फलमित्यभिधाय स्वयं पाखण्डागमाः पाखण्डतर्कशास्त्रैः समं समराय प्रथमं समुद्योजिताः । अत्रान्तरेऽस्माकमपि सैन्यशिरसि—

वेदोपवेदाङ्गपुराणधर्मशास्त्रेतिहासादिभिरुच्छ्रितश्रीः ।
सरस्वती पद्मधरा शशाङ्कसंकाशकान्तिः सहसाविरासीत् ॥ ६ ॥

---

प्ररोचना विचलनमादानं च त्रयोदश ॥' इति । एतेषां स्वरूपं सोदाहरणं निरूपयिष्यामः ॥ ५ ॥ विकटेत्यादि । क्रोधाद्विकृते ललाटतटे ताण्डविता संजातताण्डवा भ्रुकुटी भ्रूविक्षेपो यस्य तेन महामोहेन समुद्योजिताः । प्रस्थापिता इत्यर्थः । विवेकहतकः इति गालिप्रदानमेतत् । पाखण्डतर्कशास्त्रैस्तदीयैः शास्त्रैः । अत्रान्तरेऽस्मिन्नवसरे । सैन्यशिरसि नासीरे । अत्र अपवादो नामावमर्शसन्धेः प्रथममङ्गम् । 'अपवादस्तु दोषप्रख्यापनात्मकः' इति तल्लक्षणम् । दुर्नयपरिपाकस्य विवेकहतक इत्यनेन विनयराहित्य(विवेकराहित्य)दोषप्रख्यापनात् । वेदोपवेदाङ्गेत्यादि । वेदा ऋग्यजुःसामाथर्वणाः । उपवेदाः ऋग्वेदस्यायुर्वेद उपवेदः । यजुर्वेदस्य धनुर्वेद उपवेदः । सामवेदस्य गान्धर्व उपवेदः । अथर्वणवेदस्य शास्त्राण्युपवेदः । वाशब्दो विकल्पे । ईकारो लक्ष्मीवाचकः । विविधां स्वर्गापवर्गरूपां लक्ष्मीं ददातीति वेदः । एवमुपवेदशब्दार्थः । अङ्गानि शिक्षादीनि षट् । पुराणानि ब्राह्मादीन्यष्टा-

---

सन्तु । भवन्त्वित्यर्थः ॥ ५ ॥ ततस्ततः । पुनः पुनरित्यर्थः । तत इति । विकटा विषमा ललाटतटे भालफलके ताण्डविता नर्तिता भ्रुकुटिर्भ्रूर्येन तादृशेन महामोहेनाभिहितमुक्तम् । किमुक्तं तदाह । अनुभवत्विति । दुर्नयो दुर्नीतिस्तस्याः परिपाकः फलं तस्य । विवेकहतकः विवेकप्रेतः । पाखण्डागमाः सुगतचार्वाकयोगाचारजैनकापालिकाद्यागमाः तेषां पाखण्डतर्कप्रतिपादकानि शास्त्राणि तैः सह समराय संग्रामाय समुद्योजिताः समुद्योगवन्तः कृताः । अत्रेति । अत्रान्तरे एतस्मिन् समये । सैन्यशिरसि सैन्यमस्तके ॥—वेदेति । सरस्वती सहसाकस्मादाविरासीत्प्रकटीबभूव । कीदृशी सरस्वती । वेदाश्चत्वारः । उपवेदा आयुर्वेदधनुर्वेदगान्धर्वार्थशास्त्राणि । अङ्गानि शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्यौतिषमिति षट् । आगमा नारदपञ्चरात्ररुद्रयामलादयः । पुराणानि मात्स्यमार्कण्डेयादीन्यष्टादश । धर्मशास्त्राणि मन्वादिस्मृतयोऽष्टादश । तावत्य उपस्मृतयः । इतिहासा महाभारतादयः ।

विष्णुभक्तिः—ततस्ततः ।

श्रद्धा—ततो देवि, वैष्णवशैवसौरादयो देव्याः सकाशमागताः ।

विष्णुभक्तिः—ततस्ततः ।

श्रद्धा—तदनन्तरं च—

साङ्ख्यन्यायकणादभाषितमहाभाष्यादिशास्त्रैर्वृता
स्फूर्जन्न्यायसहस्रबाहुनिकरैरुद्द्योतयन्ती दिशः ।
मीमांसा समरोत्सुकाविरभवद्धर्मेन्दुकान्तानना
वाग्देव्याः पुरतस्त्रयी त्रिनयना कात्यायनीवापरा ॥ ७ ॥

---

दश । धर्मशास्त्राणि मन्वादीन्यष्टादश । इतिहासा नाचिकेतोपाख्यानप्रभृतयः॥६॥
**तत इत्यादि** । हे देवि विष्णुभक्ते । देव्याः सरस्वत्याः ॥—**साङ्ख्येति** ।
साङ्ख्यं कापिलम् । न्यायोऽक्षपादमतम् । कणादभाषितं वैशेषिकम् । महाभाष्यं
पातञ्जलम् । आदिशब्देन सेश्वरसांख्यादयस्तैः शास्त्रैर्वृता परिवृता पूर्वमीमांसा
सांख्यादिशास्त्रैरविरुद्धा । 'विविदिषन्ति यज्ञेन दानेन' इत्यादिश्रुतेः । यज्ञदाना-
दीनां पूर्वमीमांसया प्रतिपादितत्वात् तेषां च ज्ञानोपयोगित्वादिति । अत उक्तं
वृतेति । स्फूर्जन्न्यायेति । स्फूर्जन्तो न्यायाद्यधिकरणानि तेषां सहस्रम् । सहस्र-
न्याया इत्यर्थः । अतएव बाहवः । न्यायानां बाहुत्वनिरूपणं युद्धोपयोगित्वात् ।
तेषां निवहैः समूहैर्दिश उद्द्योतयन्ती प्रकाशयन्ती मीमांसा पूर्वमीमांसा पूजित-
विचारवचना । मीमांसाशब्दपूजा च वेदार्थविचारात्मकतया । अतएव 'मान
पूजायाम्' इत्यस्माद्धातोः सन्नन्ततया निष्पन्नोऽयं मीमांसाशब्दः । धर्मेन्दुकान्ता-
नना । धर्मो वेदार्थः स एवेन्दुः स इव कान्तमाननं यस्याः सा । त्रयी त्रयो वेदाः

---

आदिग्रहणात्पुराणबहिर्भूताः स्तोत्रकवचादयस्तैरुच्छ्रिता अतिशयिता श्रीः शोभा
यस्याः सा । पुनः कथंभूता सरस्वती । पद्मं करे यस्याः सा । पाठान्तरे पद्मं धर-
तीति । पुनः कथंभूता सरस्वती । शशाङ्केन चन्द्रमसा संकाशा तुल्या कान्तिर्दीप्ति-
र्यस्याः सा ॥ ६ ॥ वैष्णवमण्वात्मवादिनां मतं, शैवं पाशुपतं शास्त्रं, सौरं सौरा-
गमः ॥—**सांख्यन्यायेति** । वाग्देव्याः पुरतोऽग्रे समरायोत्सुकोत्कण्ठा मीमांसा
पूर्वोत्तरमीमांसा विचारप्रधाना भाट्टप्राभाकरशास्त्ररूपाविरभवत्प्रकटीबभूव । कीदृशी
मीमांसा । सांख्यं प्रसिद्धम्, न्यायो गौतमप्रणीतं शास्त्रम्, कणादेन भाषितं वैशेषिकं
दर्शनम्, महाभाष्यादीनि व्याकरणादीनि शास्त्राणि तैर्वृता । युक्तेत्यर्थः । पुनः की-
दृशी मीमांसा । स्फूर्जन्तोऽबाधिता ये न्याया अधिकरणानि तेषां सहस्रं त एव बा-

शान्तिः—अये, कथं पुनः स्वभावप्रतिद्वन्द्विनामागमानां तर्काणां च समवायः संपन्नः।

श्रद्धा—पुत्रि,

समानान्वयजातानां परस्परविरोधिनाम्।
परैः प्रत्यभिभूतानां प्रसूते संगतिः श्रियम्॥ ८ ॥

---

सैव त्रीणि नयनानि यस्याः सा अपरा कात्यायनी दुर्गेव वाग्देव्याः पुरतः समरोत्सुकाविरभवत्प्रादुरासीत्। कात्यायनीसाम्यं त्रिनयनत्वादिना। मीमांसायाः त्रिनयनत्वं त्रिवेदसाध्यत्वात्। तदुक्तम्—'यज्ञं व्याख्यास्यामः। स त्रिभिर्वेदैः' इति। ननु कात्यायनीवापरेत्यत्र अपरायाः कात्यायन्या अभावात्कथमौपम्यमिति चेत्। उच्यते। अपरा कात्यायनीवेति मीमांसायां अपरकात्यायनीत्वमध्यवसायेनोत्प्रेक्ष्यते॥ ७॥ **अये इत्यादि**। 'प्रश्ने चामन्त्रणे अये' इति। स्वभावप्रतिद्वन्द्विनामागमानाम्। आगमाः पाञ्चरात्रकामिकवायव्यसंहितादयश्च। परस्परविरोधिनां तर्काणां शास्त्राणां च समवाय एकत्र समावेशः कथं संपन्न इति। अयं भावः। वैष्णवानां देवतान्तरवन्दननिषेधः। तत्र चक्राङ्कनं मातापितृव्यतिरेकेण गुर्वन्तरस्वीकारो गृहस्थानाम् कौपीनधारणादि शूद्रादिवन्दनं च। शैवानां तु विरुद्धं लिङ्गधारणं तेषां गृहस्थानां जटाधारणं प्रसादलिङ्गादिकैः षड्भिः स्थलैर्व्यवहारो वैष्णवानामसंमतम्। शास्त्राणां परस्परविरोधः स्पष्ट एव। अत्र श्रद्धा उत्तरमाह—**समानेति**। अन्योन्यसंसर्गः श्रियं प्रसूते।

---

हवो हस्तास्तेषां निकरैः समूहैर्दिशो वैदिककर्मब्रह्मबोधनमार्गानुद्द्योतयन्ती प्रकटयन्ती। पुनः कीदृशी मीमांसा। धर्म एवेन्दुस्तद्वत्कान्तं मनोहरमाननं यस्याः सा। पुनः कीदृशी मीमांसा। त्रयी वेदत्रयी सैव त्रीणि नयनानि नेत्राणि यस्याः सा। तत्रोत्प्रेक्षते। अपरा द्वितीया कात्यायनीव। तत्राप्येतानि विशेषणानि योज्यानि॥ ७॥ परस्परविरोधिनां कथं समवाय इति शान्तिराक्षिपति—**अये कथमिति**। स्वभावप्रतिद्वन्द्विनां स्वारसिकविरोधिनां तर्काणां शास्त्राणामागमानां वेदानां च 'द्वे वा ब्रह्मणी वेदितव्ये' 'एकमेवाद्वितीयम्' इत्यादिविरुद्धार्थकत्वात्समवायो मेलनं कथं संपन्नो जातः। समाधत्ते पुत्रीति॥—**समानान्वयेति**। समानान्वयजातानामेको वंशो वेदस्तस्मात्प्रसूतानां परस्परविरोधिनां परैः साधारणशत्रुभिः प्रत्यभिभूतानां पराभूतानां संगतिर्मेलनं श्रियं शोभां प्रसूते। अनेन स्वपक्षरक्षणाय परपक्षाधिक्षेप इति

येन वेदप्रसूतानां तेषामेवान्तरविरोधेऽपि वेदसंरक्षणाय नास्तिकपक्षप्रतिक्षेपणाय शास्त्राणां साहित्यमेव । आगमानां च तत्त्वं विचारयतामविरोध एव । तथाहि—

ज्योतिः शान्तमनन्तमद्वयमजं तत्तद्गुणोन्मीलना-
द्ब्रह्मेत्यच्युत इत्युमापतिरिति प्रस्तूयतेऽनेकधा ।

---

श्लाघां संपदयतीत्यर्थः ॥ ८ ॥ येनेत्यारभ्य विरोध एवेत्यन्तं सुगमम् ॥ ज्योतिः शान्तमिति । ज्योतिस्तेजोरूपम् । सूर्यादिवद्गुण्णं न भवतीत्याह शान्तमिति । अनन्तमपरिच्छिन्नम् । व्याख्यानं प्राग्वत् । अद्वयमेकम् अजमनादिमेव । एवं विरुद्धं कूटस्थचैतन्यं तत्तद्गुणोन्मीलनात्तत्तद्गुणावेशात् । ब्रह्मेति हिरण्यगर्भ इति अच्युतो रमापतिरिति उमापतिर्गौरीश इत्यनेकधा प्रस्तूयते । तैरागमैरित्यन्वयः । तेन कारणेन श्रुतिमुखैः श्रुतिमूलकैः सदागमैः । सद्भिरा-

---

लक्ष्यते ॥ ८ ॥ ननु स्वतन्त्रर्षिप्रणीतानां भिन्नमतावलम्बिनां दर्शनानां कथमेकवंशप्रसूतत्वमित्याशङ्क्याह—येनेति । वेदमूलत्वमेकवंशप्रसूतत्वे बीजमिति भावः । साहित्यमेव अविरोध एव । ननु स्वतन्त्रर्षिप्रणीतानां शास्त्राणां पौरुषेयत्वाद्विरुद्धार्थाभिधायकत्वेऽन्यतरस्याप्रामाण्यप्रसङ्गाद्विरोधे चोभयस्याशास्त्रार्थत्वादुपपद्यते शास्त्रेष्विदं प्रमाणमिदमप्रमाणमिति विचारणा । अपौरुषेयासूपनिषत्सु 'द्वे वाव ब्रह्मणी वेदितव्ये' 'द्वा सुपर्णा सयुजा सखाया' 'एकमेवाद्वितीयम्' 'ऐतदात्म्यमिदं सर्वम्' इत्यादि विरुद्धार्थकत्वं कथं सोढुं शक्यम्, भ्रमप्रमादविप्रलिप्साकरणापाटवादिपुरुषदोषाणामनिरूपणादित्याशङ्क्य तत्र विरुद्धार्थकत्वमेव नास्तीत्याह—आगमानामिति । तत्त्वं विचारयतां तत्त्वप्रतिपादकानां तत्त्वमद्वितीयब्रह्माखण्डमशक्यार्थरूपं तदेव साक्षात्कृतं प्रयोजनम् । तथा च पदार्थानां विरोधेऽपि वाक्यार्थस्यैकत्वान्न तत्र विरोधशङ्काशङ्कमपीति भावः । उक्तमर्थमाविष्करोति । तथा हि—ज्योतिरिति । तैस्तैः प्रसिद्धैः सदागमैः समीचीनैर्वैदिकपरिगृहीतैरागमैर्नारदपञ्चरात्रादिभिः ज्योतिर्ब्रह्मैवानेकधाऽनेकप्रकारं प्रस्तूयते उपास्यते । ते के प्रकारा इत्यपेक्षायामाह ब्रह्मेत्यादि । ब्रह्मैव तत्त्वमिति हैरण्यगर्भाः, अच्युत इति वैष्णवाः, उमापतिरिति शैवाः । नन्वेतान्येव पारमार्थिकानि नानातत्त्वानि सन्तु कुतोऽविरोध इत्याशङ्क्याह । ते ते ये गुणा रजःसत्त्वतमोरूपास्तेषामुन्मीलनादाधिक्याद्ब्रह्मेत्यादिसंज्ञाः । रजस आधिक्याद् ब्रह्मेति, सत्त्वाधिक्याद्विष्णुरिति, तमस आधिक्यादुमापतिरिति एकस्यैव गुणोपाधिकाः संज्ञा न तु वास्तवो भेद इति भावः । कीदृशं ज्योतिः । शान्तं रागद्वेषाभिनिवेशशून्यम् ।

---

१ 'तेषामान्तरविरोधे' इति पाठः ।

तैस्तैरेव सदागमैः श्रुतिमुखैर्नानापथप्रस्थितै-
　　र्गम्योऽसौ जगदीश्वरो जलनिधिर्वारां प्रवाहैरिव ॥ ९ ॥

विष्णुभक्तिः—ततस्ततः ।

श्रद्धा—ततो देवि, परस्परं करितुरगपदातीनां निरन्तरशर-निकरधारासंपातोपदर्शितदुर्दिनानां तेषामस्माकं च योधानां सङ्ग्राम-स्तुमुलसंप्रहारः प्रावर्तत । तथाहि—

　　बहुलरुधिरतोयास्तत्र सस्रुः स्रवन्त्यो
　　　　निबिडपिशितपङ्काः कङ्करङ्कावकीर्णाः ।

---

वृत्तैरागमैरित्यर्थः । नानापथप्रस्थितैर्नानामार्गप्रवृत्तैः । ब्रह्मरुद्रादिदेवतालम्बनैरि-त्यर्थः । असौ जगदीश्वरो ज्योतिः शान्तमित्यादिविशेषणैर्निरूपितः असौ पर-मात्मा स एव गम्यः स एवोपास्यः स एव प्राप्यः । तदेव दृष्टान्तेन द्रढयति । जलनिधिरिति ॥ ९ ॥ सङ्ग्रामो युद्धम् । तुमुलः संप्रहार इत्यनेन उद्वेजनप्रति-पादनाद्युतिर्नाम विमर्शसन्धेरङ्गम् । 'द्युतिरुद्वेजनं ख्यातम्' इति तल्लक्षणम्—**बहुलरुधिरतोया इति** । अत्र युद्धे बहुलान्यधिकानि रुधिराण्येव तो-यानि यासां ताः स्रवन्त्यो नद्यः निबिडं घनीभूतं पिशितं मांसं तदेव

---

पुनः कीदृशम् । अनन्तं वस्तुतः कालतो देशतश्चेति त्रिविधपरिच्छेदशून्यम् । पुनः कथंभूतम् । अव्ययं विकारशून्यम् । अजं जन्मरहितम् । यद्यप्येवं तथापि नानाश्रुति-भिर्ब्रह्मविष्णुशिवप्रतिपादिकाभिर्नानात्वमेव न त्वैक्यमित्याशङ्क्याह—नानेति । ना-नापथप्रस्थितैः नानामार्गप्रवृत्तैः श्रुतिमुखैरुपनिषत्प्रधानैः असावपरोक्षो जगदीश्वरो 'यत्साक्षादपरोक्षात्' इतिश्रुतेर्गम्यः लक्षणया बोध्यः । अभेदे दृष्टान्तमाह । वारां ज-लानां प्रवाहैर्जलनिधिरिव 'यथा नद्यः स्यन्दमानाः समुद्रेऽस्तं गच्छन्ति नामरूपे विहाय' इत्यादिश्रुतेः । तथा च गीतायाम् 'येऽप्यन्यदेवताभक्ता यजन्ते श्रद्धयान्विताः । तेऽपि मामेव कौन्तेय यजन्त्यविधिपूर्वकम्' ॥ ९ ॥ **ततो देवीति** । इति तेषामस्माकं च करितुरगरथपदातीनां योधानां वीराणां तुमुलो दारुणः संप्रहारः संग्रामः प्रावर्त-ताजायत । कीदृशानां तेषामस्माकं च । निरन्तरं निबिडं शरनिकराणां बाणसमुदा-यानां यो धारासंपात इव संपातो वृष्टिस्तेनोपदर्शितं दुर्दिनं मेघच्छन्नमहो यैस्ते-षाम् ॥—**बहलेति** । तत्र संग्रामे स्रवन्त्यो नद्यः सस्रुरस्रवन् । कीदृश्यः स्रवन्त्यः । बहलं रुधिरमेव तोयं जलं यासु ताः । पुनः कीदृश्यः । निबिडं घनं पिशितं तदेव पङ्कः

---

१ 'योधानां तुमुलः संप्रहारः प्रावर्तत' इति पाठः । २ 'बहलरुधिर' इति पाठः ।

शरदलितविदीर्णोत्तुङ्गमातङ्गशैल-
स्खलितरयविशीर्णच्छत्रहंसावतंसाः ॥ १० ॥

तस्मिन्नेवातिमहति महादारुणे सङ्ग्रामे परापरपक्षविरोधितया पाषण्डागमैरग्रेसरीकृतं लोकायतं तत्रमन्योन्यसैन्यविमर्दनैर्नष्टम् । अन्ये तु पाषण्डागमामूलनिर्मूलतया सदागमार्णवप्रवाहेण पर्यस्ताः । सौ-

पङ्को यासां ताः निबिडपिशितपङ्काः कङ्कैः काकैश्चावकीर्णैः संकुलाः । मातङ्गा एव शैलास्तेभ्यः स्खलितो रयो वेगः । प्रवाह इति यावत् । अत्र विशीर्णानि छत्राणि श्वेतच्छत्राणि तान्येव हंसास्त एवावतंसा भूषणानि यासां ताः सद्युः निर्गताः । प्रवहन्ति स्मेत्यर्थः ॥ १० ॥ तस्मिन्नेवेत्यादि । तस्मिन्नेव वर्तमानेऽतिमहति प्रसिद्धे महादारुणेऽत्यन्तभयंकरे संग्रामे युद्धविषये परापरपक्षविरोधितया पाषण्डागमैरसौ म्रियतां वा जीवतु वेति गूढाभिसन्धिना पुरतो गन्तव्यमिति प्रोत्साहितमित्यर्थः । लोकायतं तत्रं चार्वाकतन्त्रमन्योन्योपमर्देनैव नष्टम् । चार्वाका देहात्मवादिनस्तन्मतं वैदिकानामवैदिकानां च न संमतम् । अत उभयोर्विरोधः।उभाभ्यां देहादिव्यतिरिक्तात्मप्रतिपादनात्पादायोतेनैव विशिष्टमिति (?)भावः । अनन्तरं चार्वाकनाशानन्तरं पाषण्डागमाः पाषण्डानामागमा एव वृक्षमूलं मूलप्राणं तदेव मूलं बुध्नः निर्गतं मूलं येभ्यस्ते निर्मूलास्तेषां भावः तया निर्मूलतया । सन् प्रकृष्टमागम आगमनं यस्य सदागमश्चासावर्णवप्रवाहश्च । सदागम-

कर्दमो यासु ताः । पुनः कीदृश्यः । कङ्काः पक्षिणस्त एव रङ्का दीनाः प्राणिनस्तैरवकीर्णा व्याप्ताः । पुनः कीदृश्यः । शरैर्दलिता जर्जरीकृता अतएव विदीर्णा ये उत्तुङ्गा उच्चा मातङ्गाः करिणस्त एव शैलाः पर्वतास्तेभ्यः स्खलितरयाः शून्यवेगाश्च ते विकीर्णच्छत्राण्येव हंसास्त एवावतंसा भूषणानि यासु ताः ॥ १० ॥ अथ पाखण्डन्यक्कारमाविष्करोति—तस्मिंश्चेति । तस्मिन्पूर्वनिरूपितेऽतिमहति दारुणे संग्रामे । लोकायतिकं तन्त्रं शरीरात्मवादिशास्त्रं अन्योन्यं परस्परं सैन्यस्य विमर्दनानि संघट्टनानि तैरेव नष्टम् । सर्वथा युक्तिशून्यमिति भावः । तस्य प्रथमतो विनाशहेतुमाह । कीदृशं तन्त्रम् । पाखण्डागमैः सौगततौत्रान्तिकमाध्यमिकादिभिरग्रेसरीकृतम् । अन्योन्यविमर्दने कारणमाह—परापरेति । पर उत्कृष्टः सदागमरूपस्तर्कः, अपरोऽपकृष्टः पाखण्डागमतर्कस्तयोर्विरोधितया । लोकायता हि भूतपरिणामरूपशरीरमेवात्मानमुररीकुर्वन्ति । तच्चास्तिकानां सर्वेषां नास्तिकानां चानभिमतमतो विरोध इति भावः । अन्यदिति । अन्यदप्यस्ति श्रोतव्यमिति शेषः । पाखण्डेति । सदागमाः समीचीना

१ 'विकीर्णछत्र' इति पाठः । २ 'तस्मिंश्चातिमहति दारुणे' इति पाठः । ३ 'लोकायतिकम्' इति पाठः । ४ 'नष्टमन्यत् । पाखण्डा' इति पाठः ।

गतास्तावत्सिन्धुगान्धारपारसिकमागधान्ध्रहूणवङ्गकलिङ्गादीन्म्लेच्छप्रायान्प्रविष्टाः। पाषण्डदिगम्बरकापालिकादयस्तु पामरबहुलेषु पाञ्चालमालवाभीरावर्तभूमिषु सागरोपान्तनिगूढं संचरन्ति। न्यायाद्यनुगतमीमांसयावगाढप्रहारजर्जरीकृता नास्तिकतर्कास्तेषामेवागमानामनुपथं प्रयाताः।

विष्णुभक्तिः—ततस्ततः।

---

एव सदागमार्णवप्रवाहस्तेन पर्यस्ताः परितः क्षिप्ताः। सदागमार्णवपरीवाह इति पाठः। सदागमाः सर्वदा जलोच्छ्वासाः। गमनमार्गविदारकाः। उच्छ्वासतुल्या इत्यर्थः। 'जलोच्छ्वासाः परीवाहाः' इत्यमरः। सौगतास्तावदिति। सिन्ध्वादिदेशेषु प्रविष्टाः। एते म्लेच्छदेशाः। 'अङ्गवङ्गकलिङ्गेषु सौराष्ट्रमगधेषु च। तीर्थयात्रां विना गच्छन्पुनःसंस्कारमर्हति॥' इति। पाषण्डदिगम्बरकापालिकादिमतानि मधुपानप्रवृत्ततया कुत्रचिद्विलीय वर्तन्ते। पाषण्डाश्च दिगम्बराश्चेति विशेषणसमासः। स्वाचारं रहस्येनैव कुर्वन्तो वैदिकाचारं बाह्यतः समाचरन्ति। तदेव विवृणोति। म्लेच्छप्रायान्म्लेच्छबहुलान्। पाषण्डतर्कास्तु खण्डिताङ्गाः सन्तः सामर्थ्यशून्याः सन्तः तेषामागमानां तदीयागमानामनुपथं पश्चात्तद्गमनानन्तरं तत्पथमेव प्रस्थिता इत्यर्थः। अत्र छलनं नाम विमर्शसन्धेरङ्गम्। तल्लक्षणम् 'छलनं व्याकल्पेन' इति न्यायाद्यनुगतेति न्यायाद्यनुगतया न्यायशास्त्राद्यनुगतया मीमांसया जर्जरीकृताः शकलीकृता नास्तिकतर्काः 'स्यात् अस्ति स्यान्नास्ति' इत्येवमादिसप्तभूमिकाप्रभृतयः तेषामेवागमानां बौद्धाद्यागमानामनुपदं पश्चात्प्रयाता गताः। तद्वन्नष्टा इत्यर्थः। अनेन बौद्धागमबौद्धशास्त्रबौद्धतर्काणां तिरस्कारकथनेन द्रवसंज्ञकं विमर्शसन्धेरङ्गमुक्तम्। 'द्रव इत्युच्यते तज्ज्ञैर्विदुषां च

---

आगमा वेदमूलास्त एवातिविस्तृतत्वादर्णवास्तत्प्रवाहेण प्रमाणपरम्परारूपेण पाखण्डागमाः पर्यस्ता दूरे प्रक्षिप्ताः। यतो निर्मूला इत्यर्थः। तदेवाह—सौगता इति। सौगताः सुगतप्रणीता आगमा म्लेच्छप्रायान्म्लेच्छधर्माक्रान्ताञ्जनपदान्देशान्प्रविष्टाः। ते देशाः सिन्धुगान्धारादयः। पाखण्डेति। पाखण्डोऽहिंसामात्रनिरतोऽग्नीषोमीयादिहिंसामपि तिरस्कुर्वन् श्वेतपटसिद्धान्तो दिगम्बरः सत्त्वासत्त्ववादिक्षपणकसिद्धान्तः कापालिको भैरवसिद्धान्तो यथेष्टवादी। पामरा अतिनीचास्तद्बहुलेषु तत्प्रचुरेषु नास्तिकानां वेदबाह्यानां तर्कशास्त्राणि अनु पश्चात्तेषामेवागमानां पाखण्डागमानां पदं

---

१ 'गान्धारमागध' इति पाठः। २ 'रावर्तसगरानूपेषु निगूढ' इति पाठः। ३ 'गमानामनुपदं' इति पाठः।

श्रद्धा—ततो वस्तुविचारेण कामो हतः, क्षमया क्रोधपारुष्यहिंसादयो निपातिताः, सन्तोषेण लोभतृष्णादैन्यानृतपैशुन्यवाक्स्तेयासत्प्रतिग्रहादयो निगृहीताः, अनसूयया मात्सर्यं जितम्, परोत्कर्षसंभावनया मदो निषूदितः, परगुणाधिक्येन मानः खण्डितः।

विष्णुभक्तिः—(सहर्षम्) साधु साधु संपन्नम्। अथ महामोहस्य को वृत्तान्तः।

श्रद्धा—देवि, महामोहोऽपि योगोपसर्गैः सह न ज्ञायते क्वापि निलीनस्तिष्ठतीति।

विष्णुभक्तिः—अस्ति तर्हि महाननर्थशेषः। प्रहरणीयश्चासौ। यतः—

अनादरपरो विद्वानीहमानः स्थिरां श्रियम्।
अग्नेः शेषमृणाच्छेषं शत्रोः शेषं न शेषयेत्॥ ११॥

---

तिरस्क्रिया।' इति तल्लक्षणात्। ततो वस्तुविचारेणेत्यारभ्य निषूदित इत्यन्तं स्पष्टम्। अत्र विद्रवो नाम विमर्शसन्धेरङ्गमुक्तम्। वधबन्धनादिप्रतिपादनात्। तल्लक्षणम् 'विद्रवः कथ्यते बन्धवधसन्ताडनादिकः' इति। महामोहस्येत्यादिना क्वचिल्लीनस्तिष्ठतीत्यन्तेन विरोधशमप्रतिपादनाच्छक्त्याख्यमङ्गं विमर्शसन्धेः। तदुक्तम् 'विरोधशमनं शक्तिः' इति। योगोपसर्गैरिति। योगस्यैक्यसन्धानस्य उपसर्गाः परिपन्थिनो विघ्नास्तैः सह। **अनादरपर इति**। विद्वान् बुद्धिमान् स्थिरां श्रियमीहमानः अनादरपरः सन्। अग्नेः शेषम्। अग्नेरिति पञ्चमी कात्स्न्र्येन साम्यस्य। अग्नेः शेषमवशिष्टं न शेषयेत्। नावशेषयेदिति भावः। एवमन्यदप्यूह्यम्। अत्र प्रसङ्गाख्यं विमर्शसन्धेरङ्गम्। उपदेशप्रवर्तनात्। तथा

---

स्थानं प्रयाताः। प्राप्ता इत्यर्थः। ततो वस्तुविचारेणेत्यादि अथ महामोहस्येत्यन्तं निगदव्याख्यानं स्पष्टम्। योगभ्रंशं मोहस्य दृष्ट्वा योगिभिः समाहितमनस्कतया स्थातव्यमिति ज्ञापयन्ती विष्णुभक्तिर्मोहवृत्तान्तं पृच्छति—अथेति। वृत्तान्तः समाचारो योगोपसर्गैर्योगविघ्नैः सह निलीनो गुप्तस्तिष्ठतीति हेतोर्न ज्ञायते। उक्ते नयमुपदिशति—यत इति। अत्यादरेति। विद्वान्पण्डितः अत्यादरपरोऽतिशयितादरयुक्तः स्थिरां निश्चलां श्रियं संपत्तिमीहमान इच्छन् अग्नेः शेषं ऋणाच्छेषं शत्रोः शेषं न शेषयेत्। 'अनादरपर' इति पाठे अग्न्यादिशेषस्थापने अनादरवता न भाव्यं, किंतु त-

---

१ 'नृतवादपैशून्यस्तेयपरिग्रहाः' इति पाठः। २ 'अत्यादरपरः' इति पाठः।

अथ मनसः को वृत्तान्तः ।

श्रद्धा—देवि, तेनापि पुत्रपौत्रादिव्यसनजनितशोकावेशेन जीवोत्सर्गाय व्यवसितम् ।

विष्णुभक्तिः—(स्मितं कृत्वा ।) यद्येवं स्यात्सर्व एव वयं कृतकृत्या भवामः । पुरुषश्च परां निर्वृतिमार्पत्स्येत[1] । किंतु कुतस्तस्य दुरात्मनो जीवत्यागः ।

श्रद्धा—एवं देव्यां प्रबोधोदयाय गृहीतसंकल्पायामचिरं शरीरेण सह नैव[2] भविष्यति ।

विष्णुभक्तिः—तद्भवतु । अस्य वैराग्योत्पत्तये वैयासिकीं सरस्वतीं प्रेषयामः ।

(इति निष्क्रान्तौ ।)

प्रवेशकः ।

(ततः प्रविशति मनः संकल्पश्च ।)

मनः—(सास्रम् ।) हा पुत्रकाः, क गताः स्थ । दत्त मे प्रियदर्शनम् । भो भोः कुमारकाः रागद्वेषमदमात्सर्यादयः, परिष्वजध्वं

---

चोक्तम् 'गुरूपदेशकीर्तनं प्रसङ्गः' इति ॥ ११ ॥ **अथ मनस इति** । जीवितोत्सर्गाय प्रायोपवेशाय व्यवसितमुद्युक्तम् । भावे निष्ठा । स्मितं कृत्वेति । अभिमतमचिरेणैव भविष्यति । अभिमतं वाञ्छितं मनोविलयात्मकं किंचिद्विलम्बेनेत्यर्थः । **प्रवेशक इति** । तल्लक्षणमुक्तं प्राक् । अत्र प्रवेशकेन पात्रसूचनात्पात्रप्रवेशः । ततः प्रविशति मनः संकल्पश्च । दत्त प्रयच्छत । **भो भो इत्यादि** । राग इच्छाविशेषः । आदिशब्देन कामादयः । प्रलापोत्परिहारे यत्नवता भाव्यमिति भावः ॥ ११ ॥ वैराग्यवतो मनसः प्रवेशमाह—अथ मनस इति । पुत्रपौत्रादिमरणजनितशोकस्यावेशः प्रवेशो यस्मिन् तेन मनसा जीवोत्सर्गाय प्राणत्यागाय व्यवसितं निर्णयः कृतः । स्मितं हास्यम् । यद्येवं स्यान्म्रियेत । विषयनिर्मुक्तं स्यादित्यर्थः । कृतकृत्याः संपन्नप्रयोजनाः । पुरुषो जीवः परां निर्वृतिं परमानन्दम् । दुरात्मनो दुष्टस्वभावस्य—देव्यामुपनिषद्रूपायाम् । शरीरेण लिङ्गशरीरेण सह न भविष्यति विरक्तं भविष्यति । प्रवेशमुपसंहरति—तद्भवत्विति । निष्क्रान्ते विष्णुभक्तिश्रद्धे । संकल्पो मनोव्यापारः । दत्त प्रयच्छत । प्रियमिष्टं दर्शनम् ।'प्रतिवचनम्'

---

१ 'मापद्येत' इति पाठः । २ 'न भविष्यति' इति पाठः ।

माम्। सीदन्ति ममाङ्गानि। हा। न कश्चिन्मां वृद्धमनाथं संभावयति। क गता असूयादयः कन्यकाः। आशातृष्णाहिंसादयो वा स्नुषाः। कथं ता अपि मन्दभाग्यस्य मे समकालमेव दैवहतकेनापहृताः।

विसर्पति विषाग्निवद्दहति सर्वमर्माविध-
स्तनोति भृशवेदनाः कषति सर्वकार्श्यं वपुः।
विलुम्पति विवेकितां हृदि च मोहमुन्मूलय-
त्यहो ग्रसति जीवितं प्रसभमेव शोकज्वरः॥ १२॥

(इति मूर्च्छितः पतति।)

संकल्पः—(सास्रम्।) राजन्, समाश्वसिहि समाश्वसिहि।

मनः—(समाश्वस्य।) कथं देवी प्रवृत्तिरपि न मामेवमेवस्थं[2] समाश्वासयति।

संकल्पः—(सास्रम्।) देव, कुतोऽद्यापि प्रवृत्तिः। यतः श्रुत-[3]कुटुम्बव्यसनसंजातशोकानलदग्धहृदया हृदयास्फोटं विनष्टा।

---

क्यो निरर्थका निर्लभ्याः। 'पुमान्स्त्रिया' इत्येकशेषः॥—विसर्पतीति। मर्माणि जीवस्थानानि विध्यतीति मर्माविधः। 'इगुपध—' इत्यादिना कः। सर्व-कार्श्यं सर्वैरुपायैः कर्शित्वा हिंसित्वा कषति हिनस्ति। नाशयतीत्यर्थः। 'कष हिंसायाम्' इति धातुः। 'हिंसार्थानां च समानकर्मकाणाम्' इति णमुल्। इती-त्यारभ्य यत इत्यन्तं सुगमम्॥ १२॥ स्रुतकुटुम्बेति। कुटुम्बं पोष्यवर्गः तस्य वियोगशोकानलदग्धा सती हृदयास्फोटं हृदयं स्फुटित्वा विनष्टा। मृते-

---

इति पाठे प्रतिवचनं प्रत्युत्तरम्। विसर्पतीति। एष शोकज्वरो विषाग्निवद्विपरू-पोऽग्निस्तद्वद्विसर्पति सर्वशरीरं व्याप्नोति। मे मम शर्म सुखं मर्माणि च विषाग्निव-द्विषवद्दहति ज्वालयति। भृशमतिशयेन वेदनास्तनोति विस्तारयति। सर्वकार्श्यं सर्व-च्छेदं यथा स्यात्तथा वपुः कषति छिनत्ति। विवेकितां विलुम्पति विनाशयति। हृदि मनसि मोहं बुद्धिभ्रंशमुन्मीलयति प्रकटयति। अहो इति चित्रम्। प्रसभं हठेन जीवितं ग्रसति गिलति। शोकज्वर इति सर्वत्रानुषञ्जनीयम्॥ १२॥ प्रवृत्तिः प्रव-र्तिका वेदविद्या। एवमवस्थं मुमूर्षुम्। यत इति। यतो हेतोः श्रुतमाकर्णितं कुटु-म्बकानां कामादीनां व्यसनं निधनं तेन संजातो यः शोकानलस्तस्माद्दग्धं हृदयं

---

१ 'शर्म' इति पाठः। २ 'अस्वस्थं' इति पाठः। ३ 'स्रुतकुटुम्बक' इति पाठः।

मनः—हा प्रिये, क्वासि देहि मे प्रतिवचनम्। ननु देवि,

स्वप्नेऽपि देवि रमसे न विना मया त्वं
स्वापे त्वया विरहितो मृतवद्भवामि।
दूरीकृतासि विधिदुर्ललितैस्तथापि
जीवत्यवेहि मन इत्यसवो दुरन्ताः॥ १३॥

(पुनर्मूर्च्छति।)

संकल्पः—राजन्, समाश्वसिहि समाश्वसिहि।

मनः—(समाश्वस्य।) अलमस्माकमतः परं जीवितेन। संकल्प, चितामारचय। यावदनलप्रवेशेन शोकानलं निर्वापयामि।

(ततः प्रविशति वैयासिकी सरस्वती।)

सरस्वती—प्रेषितास्मि भगवत्या विष्णुभक्त्या। यथा 'सखि सरस्वति, गच्छापत्यव्यसनखिन्नस्य मनसः प्रबोधनाय। यथा च तस्य वैराग्योत्पत्तिर्भवति तथा यतस्वे'ति। तद्भवतु। तत्संनि-

---

त्यर्थः। स्वप्नेऽपीत्यादि। हे देवि, स्वप्नेऽपि सर्वदा मया विना त्वं न रमसे। अपिशब्दात् जागरे किमुतेत्यर्थः। त्वया विरहितः स्वापे सुषुप्तौ मृतवद्भवामि। स्वप्न एव मनसः प्रवृत्त्या संगमः सुषुप्तौ नास्ति। अत उक्तं मृतवद्भवामीति वतिप्रयोगः। त्वया विना मनो जीवतीति यत् तत्रासवो दुरन्ता इत्यवेहि॥ १३॥ पुनर्मूर्च्छतीत्यारभ्य यतस्वेत्यन्तं सुगमम्। अत्र मनसः प्रबोधनाय विष्णुभक्त्या प्रेषितायाः सरस्वत्यास्तथा भवत्वित्युक्त्या स्वशक्तिप्रकटनप्रतीते-

---

यस्याः सा। हृदयास्फोटम्। 'परिक्लिश्यमाने च' इति णमुल्। हृदयमास्फोट्य वि-दार्य विनष्टा। मृतेत्यर्थः। वैराग्य उत्पन्ने प्रवृत्तिर्नभविष्यतीति तात्पर्यम्। अन्यो नाव्यधर्मः। —स्वप्नेऽपीति। स्फुटं पूर्वार्धम्। हे देवि, विधेर्दैवस्य दुर्ललितैर्दुष्ट-विलसितैर्यद्यपि दूरीकृतासि दूरं नीतासि तथापि मनो जीवतीत्यलम्। असंभावनी-यमेतत्। तर्हि जीवने को हेतुस्तत्राह। हि यतोऽसवः प्राणा दुरन्ताः सहसा प्रयत्नं विना न नश्यन्ति। 'जीवत्यवेहि मनः' इति पाठे तथापि मनो जीवति। कुतः असवो दुरन्ता अशक्या यत इति अवेहि जानीहि॥ १३॥ सरस्वत्याः प्रवेशं स्तौति— ततः प्रविशतीति। सखि सरस्वतीति संबोधनेन यथा विष्णुभक्तिस्तथा वैयासिकी सरस्वतीति सूचितम्। यतस्व प्रयत्नवती भव। विदितपूर्वेव पूर्वं विदिता ज्ञाता वि-दितपूर्वा। भावानामित्यत्रोत्पत्तिमतामिति शेषः। तथा च पदार्था ध्वंसवन्तः, उत्प-

---

१ 'जीवत्यतो हि' इति पाठः।

धिमेवोपसर्पामि । (उपसृत्य) वत्स, किमेवमतिविक्लवोऽसि[1] ननु विदितपूर्वैव भवता भावानामनित्यता, अधीतानि च त्वयैतिहासिकान्युपाख्यानानि । तथाहि—

भूत्वा कल्पशतायुषोऽम्बुजभव[2]: सेन्द्राश्च देवासुरा
मन्वाद्या मुनयो मही जलधयो[3] नष्टाः परं कोटयः ।
मोहः कोऽयमहो महानुदयते लोकस्य शोकावहः[4]
सिन्धोः फेनसमे गते वपुषि यत्पञ्चात्मके पञ्चताम् ॥१४॥

---

व्यवसायाख्यं विमर्शसन्धेरङ्गमुक्तम् । तल्लक्षणम् 'व्यवसायः स्वशक्त्युक्तिः' इति । तथा भवत्वित्यारभ्य तथाहीत्यन्तं सुगमम् ॥ भूत्वेति । अम्बुजभवो ब्रह्मा, सेन्द्रा इन्द्रसहिता देवाश्चासुराश्च देवासुराः, तथा मन्वाद्या मनुप्रभृतयः मुनयो वशिष्ठादयः, मही भूमिः, जलधयः समुद्राः, भूत्वा जनित्वा कल्पशतायुषः परं कोटयो नष्टाः । कति वा ब्रह्माण्डानि भग्नानि न भवेयुरित्यर्थः । एवं सति लोकस्य पञ्चात्मके पञ्चभूतमये सिन्धोः फेनसमे क्षणिके वपुषि पञ्चतां पञ्चत्वम् । मृतिं गते सतीत्यर्थः । पञ्चीकरणप्रकारस्तु—'पृथिव्यप्तेजोवाय्वाकाशात्मकानि पञ्च भूतानि समशो विभज्य एकैकमर्धं परित्यज्यान्यदर्धं चतुर्धा विभज्य चतुरो भागांश्चतुर्ष्वंशेषु निक्षिपेदिति ।' यद्यपि पृथिव्युक्तप्रकारेण पञ्चभूतात्मिका, एवमापः पञ्चभूतात्मिकाः, एवमग्न्यादिकमपि तथापि चतुर्णां भूतानामष्टमांशेनावस्थानात् एकैकस्येति चतुर्भागतुल्यतयार्धस्य विद्यमानत्वात्तदपेक्षया पृथिवी-

---

त्वादित्यनुमानम् । ननु चातुर्मास्यफलस्याक्षय्यत्वमिति श्रुतेरसिद्धो हेतुरिति चेन्न । अक्षय्यत्वश्रुतेर्गुणार्थवादत्वादतत्परत्वं तस्याः । 'तद्यथेह कर्मचितो लोकः क्षीयत एवमेवामुत्र पुण्यचितो लोकः क्षीयते' इति श्रुत्यन्तरविरोधात् श्रवणविधिवैयर्थ्याच्च हेतोरसिद्धता सिद्धेति भावः । विदितपूर्वैवानित्यतेत्यत्र बीजमाह—अधीतानीति । इतिहासे भवान्यैतिहासिकानि । भूत्वेति । अम्बुजभवो हिरण्यगर्भः, सेन्द्रा इन्द्रेण सहिता देवा असुराश्च, मन्वाद्या भूपालाः, मुनय ऋषयः, मही धरित्री, जलधराः सागराः । पराः अधिकाः कोट्यः कोटिभ्योऽधिकाः असंख्याता भूत्वा उत्पद्य नष्टा नाशं प्राप्ताः । अल्पायुषो नाशे का परिदेवनेत्याशङ्क्याह—कल्पशतायुष इति । कल्पानां शतान्यायुर्येषां ते तथा । कल्पो युगचतुष्टयम् । शतशब्दोऽसंख्यातवचनः । एवं च सति वन्धोः पुत्रादेर्वपुषि देहे फेनसमे बुद्बुदसमजीविते पञ्चात्मके पाञ्चभौ-

---

१ 'विक्लवोऽसि । विदित' इति पाठः । २ 'अम्बुजभुवः' इति पाठः । ३ 'जलधराः' इति पाठः । ४ 'शोकावहो वन्धोः' इति पाठः ।

तद्भावय भावानामनित्यताम् । नित्यमनित्यवस्तुदर्शनो न पश्यति शोकावेगम् । यतः—

एकमेव सदा ब्रह्म सत्यमन्यद्विकल्पितम् ।
को मोहस्तत्र कः शोक एकत्वमनुपश्यतः ॥ १५ ॥

---

जलमित्यादिव्यवहाराः संपद्यन्ते । तथाच व्याससूत्रम् 'वैशेष्यात्तद्वादस्तद्वादः' इति । अस्यायमर्थः । वैशेष्यात् पृथिव्याद्यवयवानामाधिक्यात्तद्वादः पृथिवीत्वादिव्यपदेश इति । एवं पञ्चीकरणसृष्टिक्रमः । उपसंहारक्रमस्त्ववरोहणक्रमेणेत्येतदुभयं गुरुसंप्रदायेनावगन्तव्यं नतु पुस्तकपाठादिना । यद्यस्मात्कारणात् कोऽयं शोकावहो महान्मोहः किंहेतुः । आकस्मिकोऽयं मोहो वैचित्यम् । इतिकर्तव्यतामूढत्वमिति यावत् । उदयत उदयं प्राप्नोति । अयतिरुभयपदी । अहो आश्चर्यम् ॥१४॥ अत्र श्रुतिमुदाहरति—**एकमेवेत्यादि** । एकमखण्डम् । एवकारेणाद्वितीयम् । सदा नित्यम् । ब्रह्म विशेष्यमेतत् । सत्यं त्रैकाल्यसिद्धम् । अन्यद्ब्रह्मणोऽन्यद्विकल्पितमारोपितमनेकं सद्वितीयमनित्यम् । असत्यमित्यर्थः । एवंच सति एकत्वमनुपश्यतो जीवन्मुक्तस्य को मोहः कस्तदा शोकः । शोकमोहयोर्भेदनिबन्धनत्वादिति

---

तिके पञ्चतां गते मरणं प्राप्ते सति यत् उदयत इति अयं लोकस्य शोकावहः शोकजनको महाननिवारणीयः को मोहः । अहो इत्याश्चर्ये । न कोऽपीत्यर्थः ॥ १४ ॥ श्रुतमर्थं स्थिरीकर्तुं पुनः पुनरनुसंधेहीत्याह—**तदिति** । भावय चिन्तय । भावनायाः फलमाह—**नित्येति** । नित्यं ब्रह्मैव अन्यत्सर्वमनित्यं एतद्वस्तुद्वयस्य दर्शनः । यद्वा । नित्यं निरन्तरमनित्यस्य नश्वरस्य प्रपञ्चस्य यद्वस्त्वधिष्ठानं ब्रह्म तद्यः पश्यति स शोकावेगं न पश्यति । संसारं न पश्यतीत्यर्थः । यतोऽन्यदन्यदिव पश्यन्मुह्यति । 'तत्र को मोहः कः शोक एकत्वमनुपश्यतः' इत्यादिश्रुतिभिरप्युदीरितमुक्तमर्थमुपनिपदारूढं विशदीकरोति—**एकमेवेति** । यदा यदि एकं निरस्तद्वितीयं ब्रह्मैव सत्यम्, इतरद्ब्रह्मान्यद्विकल्पितम् । अनिर्वचनीयं सद्भिन्नत्वमेवानिर्वचनीयताया लक्षणम् । तथा च ब्रह्मान्यस्य मिथ्याभूतस्य नश्वरत्वादेकत्वमेवापारमार्थिकमनुपश्यतः सम्यक्तयाजानतः तत्र को मोहः न कोऽपीत्यर्थः । मोहाभावात्कः शोकः न कोऽपीत्यर्थः । एवं च सति अन्ते ब्रह्मभावनया ब्रह्मैव भवति । संसार्यादिभावनयाऽन्ते संसार्येव भवति । उक्तं च गीतायाम्—'यं यं वापि स्मरन्भावं त्यजत्यन्ते कलेवरम् । तं तमेवैति कौन्तेय सदा तद्भावभावितः ॥' इति । अतो हेतोः शोकावेशे स्वीयं मनो नार्पणीयम् ।

---

१ 'नित्यानित्यवस्तुदर्शनो' इति पाठः । २ 'यदा' इति पाठः । ३ 'विकल्पकम्' इति पाठः ।

मनः—भगवति, शोकावेगदूषिते मनसि विवेक एवमनवकाशं लभते ।

सरस्वती—वत्स, स्नेहदोष एषः । प्रसिद्ध एवायमर्थः स्नेहः सर्वानर्थप्रभव इति ।

तथाहि—

उप्यन्ते विषवल्लिवीजविषमाः क्लेशाः प्रियाख्या नरै-
स्तेभ्यः स्नेहमया भवन्ति नचिराद्वज्राग्निगर्भाङ्कुराः ।
येभ्योऽमी शतशः कुकूलहुतभुग्दाहं दहन्तः शनै-
र्देहं दीप्तशिखासहस्रशिखरा रोहन्ति शोकद्रुमाः ॥ १६ ॥

---

भावः ॥ १५ ॥ भगवतीत्यारभ्य तथाहीत्यन्तं सुगमम् ॥ उप्यन्त इति । उप्यन्ते निक्षिप्यन्ते । वपेर्यजादित्वाद्यकि संप्रसारणम् । विषवल्लीबीजविषमाः । विषवल्लीनां बीजानि तद्वद्विषमा मारकाः प्रियाख्याःपुत्रमित्रकलत्रादिव्यपदेश्याः क्लेशा दुःखानि। नरैरुप्यन्त इत्यन्वयः।तेभ्य उप्तेभ्यो बीजेभ्यो नचिरादचिरात् । सुप्सुपेति समासः। तदानीमेव स्नेहमयाः स्नेहस्वरूपाः । स्नेहशब्दव्यपदेश्या इति यावत् । वज्राग्निगर्भाङ्कुराः वैद्युताग्निर्गर्भे येषां ते च तेऽङ्कुराश्च भवन्त्युत्पद्यन्ते । येभ्योऽङ्कुरेभ्योऽमी शोकद्रुमा रोहन्ति प्रादुर्भवन्ति । कीदृशाः । शनैः मन्दं कुकूलहुतभुग्दाहं करीषाग्निवत् दहन्तः । 'उपमाने कर्मणि च' इति चकारात्कर्तरि णमुल् ।

---

अर्प्यते चेत्तदा संसार्येव शोकादनिर्मुक्त एव स्यादिति भावः ॥ १५ ॥ भगवतीति सरस्वतीं संबोधयति । हे भगवति सरस्वति, शोकावेगदूषिते मे मम मनसि विवेकोऽवकाशं न लभत एवेति योजना। स्नेहस्यानर्थहेतुत्वं प्रकटयति—उप्यन्त इति।नरैर्मनुष्यैः प्रियाख्याः प्रिय इत्याख्या येषां पुत्राद्यभिलाषाणां ते प्रियाख्याः । नाम्नैव प्रियत्वं न स्वरूपतः । त एव वस्तुतः क्लेशा आ उत्पत्तेरामरणमतिक्लेशजनकत्वात्संसारहेतुत्वाच्चोप्यन्त आरोप्यन्ते । कीदृशाः क्लेशाः । विषवल्लीबीजं विषकन्दस्तद्वद्विषमा दुःसहास्तेभ्योऽभिलापेभ्यो नचिराज्झटिति स्नेहमयाः स्नेहरूपा वज्राग्निगर्भाः वज्राग्निवत् गर्भो येषां ते च तेऽङ्कुरा दाहच्छेदपातादिसमर्था भवन्ति । येभ्यः स्नेहाङ्कुरेभ्योऽमी त्वयि दृश्यमानाः शतशोऽनन्ताः शोकरूपा द्रुमा वृक्षाः रोहन्ति । उद्भवन्तीत्यर्थः । कीदृशाः शोकद्रुमाः । कुकूलहुतभुग्दाहं कुकूलं तुषमेव हुतं होमद्रव्यं भुनक्तीति कुकूलहुतभुक्तुषाग्निस्तद्दाहवद्यो दाहस्तद्वत् । 'उपमाने कर्मणि च' इति णमुल् । शनैर्मन्दं शरीरं दहन्तः । 'कुकूलं शङ्कुभिः कीर्णे श्वभ्रे ना तु तुषानले' इति

---

१ 'दूषिते मयि विवेक एव मे प्रभवः । तथाहि' इति पाठः ।

मनः—देवि, यद्यप्येवं तथापि न शक्नोमि शोकानलदग्धः प्राणान्धारयितुम् । संपन्नं यदन्तकाले त्वं तावद्दृष्टासि ।

सरस्वती—इदं च परमकृत्यं यदात्महत्याव्यवसाय इति । अपि च । अमीषामपकारिणामर्थे कोऽयमत्यावेशो भवतः । पश्य तावत्—

क्वचिदुपकृतिः कर्तामीभिः कृता क्रियतेऽथवा
तव न च भवन्त्येते पुंसां सुखाय परिग्रहाः ।

---

दीप्तशिखासहस्रशिखराः शिखानां ज्वालानां सहस्रशिखराण्यपरिमितान्यग्राणि दीप्तानि शिखासहस्रशिखराणि येषां ते तथोक्ताः ॥ १६ ॥ मन इत्यारभ्य पश्य तावदित्यन्तं सुगमम् । **परमकृत्यमिति** । परं अकृत्यमिति च्छेदः । प्राणान्धारयितुं न शक्नोमि । साधु संपन्नं यदन्तकालेऽपि सा त्वं दृष्टासीत्यनेन प्राक् शोकावेशनिश्चितार्थावेगसंरम्भप्रतीतेर्विरोधाख्यं विमर्शसंधेरङ्गमुक्तम् । 'संरब्धं वाग्विरोधनम्' इति लक्षणात् ॥ **क्वचिदुपकृतिरित्यादि** । अमीभिरुपकृतिरुपकारो नास्त्येवेति हृद्गतोऽर्थः । यद्यप्यस्तीति निर्बन्धस्तर्हि क्वचित्कस्मिन् विश्वेशे पुरुष एवेत्यर्थः । तत्रापि नियतमित्यादि । कर्ता करिष्यते । कर्मणि लुट् । कृता अकारि क्रियते वा । अथवा न केवलं कालनैयत्यं अनुपकारकत्वादेव सर्वमेतत्संदिग्धमिति भावः । परिगृह्यन्त इति परिग्रहाः कलत्रादयः पुंसां पुरुषाणां सुखाय न भवन्तीत्यर्थः । न केवलममी सुखस्य हेतवः प्रत्युत दुःखहेतव-

---

कुमुदाकरः तुषाग्निदृष्टान्तो दुःखस्य चिरपाकत्वसूचनायेति भावः । पुनः कीदृशाः शोकद्रुमाः । दीप्ता याः शिखा दुःखान्तरस्मृतयस्तासां सहस्रं शिखरा अग्रभागा उद्बोधरूपा येषां ते ॥ १६ ॥ साधु संपन्नम् सम्यग्जातमित्यर्थः । इदं चेति । परं स्थूलम् । अकार्यमकृत्यम् । किं तदित्याह—यदिति । व्यवसाय उद्योगः । स्वशरीरत्यागेनापि दधीचिवत्साधुपूपकर्तव्यमित्याशङ्क्य नेत्याह—अपि चेत्यादि । अपकारिणां निरन्तरदुःखदानां भवतो मनसः कोऽयमत्यावेग आदर इत्येषा योजना ॥— क्वचिदिति । एते परिग्रहाः पुत्रकलत्रादयस्तव सुखाय न भवन्ति । मम सुखाय मा भूवन् । अन्येषां पुंसां पुत्रकलत्रत्वादेव सुखदायका भविष्यन्तीत्याशङ्क्य अन्येषामपि न कोऽप्युपकार इत्याह । अमीभिः क्वचित्कुत्रापि पुंसामुपकृतिरुपकारः कर्ता करिष्यते कृता वा अथ क्रियते न क्वापि कालत्रयेऽपि उपकुर्वन्ति । सुखहेतवोऽपि न भवन्तीति भावः । ननु पुत्रादीनां लालनादौ ब्रह्मानन्दोऽनुभूयत इति वदन्ति

---

१ 'वेगो' इति पाठः ।

दधति विरहे मर्मच्छेदं तदर्थमपार्थकं
तदपि विपुलायासाः सीदन्त्यहो बत जन्तवः ॥ १७ ॥

अपि च,

तीर्णाः पूर्णाः कति न सरितो लङ्घिताः के न शैला
नाक्रान्ता वा कति वनभुवः क्रूरसंचारघोराः ।
पापैरेतैः किमिव दुरितं कारितो नासि कष्टं
यद्दृष्टास्ते धनमदमषीम्लानवक्त्रा दुरीशाः ॥ १८ ॥

---

श्चेत्याह—दधतीति । अमी परिग्रहा विरहेऽपाये सति मर्मच्छेदादरुन्तुदत्वम-तिव्यथां ददति । कुर्वन्तीत्यर्थः । तदपि तथापि जन्तवः पामरास्तदर्थं पुत्र-मित्राद्यर्थमपार्थकं निरर्थकं निष्प्रयोजनमेव विपुलायासा बहुलश्रमाः सीदन्ति क्लिश्यन्ति । अहो आश्चर्यम् । बत इति खेदे ॥ १७ ॥ तीर्णा इति । पूर्णा भृताः सरितो गङ्गाप्रभृतयः कति कियत्यो न तीर्णा उल्लङ्घिताः । अपि तु बह्वयः सरितस्तीर्णा इत्यर्थः । शैला विन्ध्याद्रिप्रभृतयः के न लङ्घिताः । सर्वेऽपि लङ्घिता इत्यर्थः । क्रूराणां सिंहशार्दूलानां संचारेण घोरा भयंकरा वनभुवः मोटमहामोटादयः कति वा नाक्रान्ता न व्याप्ताः । एवंप्रकारेण पापैर्दुरात्म-भिरेतैः पुत्रमित्रादिभिः किमिव दुरितं न कारितोऽसि । इवशब्दो वाक्यालं-कारे । सर्वं कारितोऽसीत्यर्थः । कारित इत्यत्र ण्यन्तनिष्ठया अण्यन्तकर्तुः कर्मणोऽभिधानात्प्रथमा । कष्टं कष्टतरम् । यद्यस्मात्कारणात् धनमदमषीम्लान-वक्त्रा धनमद एव मषी मालिन्यं तेन म्लानं मलिनं वक्त्रं येषां ते दुरीशाः दुष्ट-प्रभवः ते प्रसिद्धाः दृष्टा अवलोकिताः । अयमर्थः । पुत्रमित्रकलत्रादिनिमित्तं

---

पुत्रिणः । तत्कथं न पुत्रादीनां सुखजनकत्वमित्याशङ्कयाह—दधतीति । विरहे वियोगे मर्मच्छेदं दधति पुष्णन्ति । यद्यप्येवं तदपि तथापि अहो आश्चर्ये । जन्तवो विपुला बहवश्चायासाः श्रमा येषां ते तदर्थं तत्प्रयोजनायापार्थकं व्यर्थम् । बत इति खेदे । सीदन्ति दुःखिता भवन्ति ॥ १७ ॥ अपि च एते शोकयोग्या एव न भ-वन्त्यपकारित्वादित्याह—अपि च तीर्णा इति । एतैः पापैः किमिव दुरितं कष्टं कारितो नासि किंतु सर्वं दुरितं कष्टं कारित एव । कष्टमेवाह । त्वयोपयाचितं कृत्वा पूर्णा वर्षाकालीनाः सरितो नद्यः कति कियत्संख्याका न तीर्णाः । अपि तु बह्वयस्तीर्णा इत्यर्थः । के शैला न लङ्घिताः नाक्रान्ताः । अपि तु सर्वे । क्रूराणां व्याघ्राणां संचारेण घोरा भयानका वनभुवोऽरण्यस्थल्यः कति कियन्त्यो नाक्रान्ताः । अपि तु सर्वा एव । कारितेऽप्येतावत्यनर्थे यद्यस्मात्कारणाद्धनमदो लक्ष्मीमदः स एव

मनः—देवि, एवमेतत्। तथापि—

लालितानां स्वजातानां हृदि संचरतां चिरम्।
प्राणानामिव विच्छेदो मर्मच्छेदादरुंतुदः ॥ १९ ॥

सरस्वती—वत्स, ममतावासनानिबन्धनोऽयं व्यामोहः। उक्तं च—

मार्जारभक्षिते दुःखं यादृशं गृहकुक्कुटे।
न तादृङ्ममताशून्ये कलविङ्केऽथ मूषके ॥ २० ॥

तत्सर्वानर्थबीजस्य ममत्वस्योच्छेदे यत्नः कर्तव्यः। पश्य—

---

शास्त्रनिषिद्धं सिन्ध्वादिनद्युत्तरणविन्ध्यशैलादिलङ्घनमोटादिवननिवासैर्दुरितं संपादितं तत्कष्टम्। ततोऽपि कष्टतरं दुष्टप्रभुसेवाकरणमपि निर्वर्तितमित्यर्थः ॥१८॥ देवीत्यारभ्य पश्येत्यन्तं सुगमम् ॥ **लालितानामित्यादि**। लालितानामुपलालितानां हृदि संचरतां स्वजातानामपत्यानां स्वस्मिञ्शरीरे जातानामाविर्भूतानां प्राणानामिव विच्छेदः मर्मणां जीवस्थानानां छेदात्खण्डनादप्यरुंतुदो मर्मस्पृक्। 'अरुर्द्विषत्–' इत्यादिना मुम्। दुःखकर इत्यर्थः। अत्र वत्सममतानिबन्धनोऽयं व्यामोह इत्यनेन प्ररोचनाख्यमङ्गं निरूपितम्। आप्तवाक्यसंदर्शनात्। लक्षणं तु—'यदाप्तवचनाद्भाविदर्शनं सा प्ररोचना' इति ॥ १९ ॥ २० ॥

---

मपी तद्युक्तानि अतएव म्लानानि शुष्काणि वक्त्राणि येषां ते दुरीशा दुष्टप्रभवः कष्टं यथा स्यात्तथा दृष्टाः। एवं च कामादिभ्यो विरजितव्यमिति भावः। शिष्टं स्पष्टम् ॥ १८ ॥ एवं वैराग्यहेतौ सत्यपि वैराग्यं नोत्पद्यत इत्याह—लालितानामिति। स्वस्मात्स्वशरीराज्जातानामुत्पन्नानां बालभावे चुम्बनालिङ्गनैर्लालितानाम्। अतएव चिरं हृदि संचरतां विच्छेदो वियोगो मर्मच्छेदादप्यरुंतुदो व्यथातिशयकारी। तत्र दृष्टान्तः। प्राणानां विच्छेदो वियोगः स यथा मर्मच्छेदादतिपीडाकरस्तद्वदयमपीत्यर्थः ॥ १९ ॥ वत्स ममेति। ममता मदीयत्वाभिमानः तस्य वासना सर्वकालमनुवृत्तिः सैव निबन्धनं कारणं यस्य सः। ममतासंबन्धादेव दुःखमित्यस्मिन्नर्थे संमतिमाह—मार्जारेति। मार्जारभक्षिते गृहकुक्कुटे स्वगृहपोषितकुक्कुटे यादृशं दुःखं तादृक् तादृशं कलविङ्के चटके ममताशून्ये मूषके च मार्जारभक्षिते न ममताशून्यत्वात्। तस्मान्ममतैव दुःखहेतुरिति भावः ॥ २० ॥ एवं सति ममतोच्छेदे एव यत्नः कार्य इत्याह—तत्सर्वानर्थेति। सर्वेऽनर्था यस्मादसौ सर्वानर्थः स्नेहस्तस्य बीजं कारणं

---

१ 'शिवम्' इत्यन्यतमः पाठः।

प्रादुर्भवन्ति वपुषः कति वा न कीटा
यान्यत्नतः खलु तनोरपसारयन्ति ।
मोहः स[1] एष जगतो यदपत्यसंज्ञां
तेषां विधाय परिशोषयति स्वदेहम् ॥ २१ ॥

**मनः**—देवि, भवत्वेवम् । तथापि दुरुच्छेद्यस्तु ममत्वग्रन्थिः । (विचिन्त्य । सोच्छ्वासम् ।) सर्वथा त्रातोऽस्मि भवत्या । (इति पादयोः पतति ।)

**सरस्वती**—वत्स, उपदेशसहिष्णु[2] ते हृदयं जातम् । अत एतदपरमुच्यते—

वशं प्राप्ते मृत्योः पितरि तनये वा सुहृदि वा
शुचा[3] संतप्यन्ते भृशमुदरताडं जडधियः ।

---

**प्रादुर्भवन्तीति** । वपुषः सकाशात् कति वा कीटा यूकादयो न प्रादुर्भवन्ति । बहवः प्रादुर्भवन्त्येवेत्यर्थः । यान्कीटान् यत्नतः प्रयत्नेन तनोः सकाशादपसारयन्ति । लोका इति शेषः । खलु यान्यत्नत इत्यत्र यच्छब्दस्य तच्छब्दापेक्षा नास्त्युत्तरवाक्यस्थत्वात् । तदुक्तं काव्यप्रकाशे—'उत्तरवाक्यस्थो यच्छब्दस्तच्छब्दोपादानं नापेक्षते' इति । मोह इत्यादि । जगतो लोकस्यापत्यसंज्ञां विधाय स्वदेहं परिशोषयतीति यत् स एष मोहः । स्नेह इति यावत् । अत्र स एष इत्यत्र तच्छब्दसंनिहित एतच्छब्दस्तच्छब्दार्थ एव । यत्तदोर्नित्यसंबन्धात्पार्थक्येनैतच्छब्दार्थाप्रतीतेः ॥२१॥ मन इत्याद्येतदपरमित्यन्तं सुगमम् ॥ **वशं प्राप्त इति** ।

---

तादृशस्य ममत्वस्योच्छेदे यत्नः कार्यः । विचाराधीनो ममतोच्छेद इति दर्शयति—प्रादुर्भवन्तीति । वपुषः शरीरात्कति कियन्तो वा कीटा यूकादयो न प्रादुर्भवन्ति नोत्पद्यन्ते । अपि तूत्पद्यन्त एव । यान्कीटान् तनोः शरीरात्खलु निश्चयेन यत्नतो यत्नपूर्वमपसारयन्ति निष्कासयन्ति । एष जगतो विश्वस्य मोहः कः । यत्तेषां शरीरोत्पन्नानामपत्यसंज्ञां विधाय कृत्वा देहं परि समन्ताच्छोषयति । यूकादौ स्वदेहोत्पन्नेऽपि ममताभावान्न देहशोषः । पुत्रे ममताभिमानस्य सत्त्वाद्देहशोष इत्येष को मोह इति भावः ॥ २१ ॥ ममत्वग्रन्थिर्ममताभिमानः सर्वथा सर्वप्रकारेण । वैराग्यप्रवेशमुपक्षिपति—वत्सेति । उपदेशसहिष्णूपदेशग्राहि । अपरमुक्तादन्यत् ॥—वशमिति । पितरि जनके, तनये पुत्रे, सुहृदि संबन्धीनि वा मृत्योर्मरणस्य वशमधीनत्वं प्राप्ते सति

---

१ 'क एष' इति पाठः । २ 'प्रत्युपदेश—मयैतदप्यपरं' इति पाठः । ३ 'शुचालं तप्यन्ते' इति पाठः ।

असारे संसारे विरसपरिणामे तु विदुषां
वियोगो वैराग्यं द्रढयति वितन्वञ्शमसुखम् ॥ २२॥
(ततः प्रविशति वैराग्यम् ।)

वैराग्यम्—(विचिन्त्य ।)

अस्राक्षीन्नवनीलनीरदजलोपान्तातिसूक्ष्मायत-
त्वङ्मात्रान्तरितामिषं यदि वपुर्नैतत्प्रजानां पतिः ।
प्रत्यग्रक्षरदस्रविस्रपिशितग्रासग्रहं गृध्नतो
गृध्रध्वाङ्क्षवृकौस्तनौ निपतिताः को वा कथं वारयेत् ॥२३॥

---

विरसपरिणामे वार्धक्ये । यद्वा विरसाः परिणामा आनन्दप्रवणा विक्षेपा यस्मिन् । वियोग इष्टवियोगः शमसुखं वितन्वन्वैराग्यं द्रढयतीत्यन्वयः । उदरताडमिति । क्रूरत्वमुदरं ताडयित्वोदरताडम् । 'परिक्लिश्यमाने च' इति णमुल् । परिक्लेशः सर्वतोऽपि बाधनम् ॥ २२ ॥ ततः प्रविशति वैराग्यम् । अत्र सहसैवार्थसंपत्त्या पात्रप्रवेशः ॥—अस्राक्षीदित्यादि । नवस्य नूतननीलनीरजस्येन्दीवरस्य दलोपान्तादतिसूक्ष्मा अतिमृदुतरा आयता दीर्घा त्वक् चर्म । त्वगेव त्वङ्मात्रम् । सुप्सुपेति समासः । तेनान्तरितामिषं अन्तरितमावृतमामिषं पललं यस्यैतद्वपुः प्रजापतिर्नास्राक्षीन्न निर्मितवान् । तर्हि प्रत्यग्रक्षरदस्रैर्नूतनगलद्रक्तैर्विस्रमामगन्धिपिशितमेव ग्रासग्रहमशनकवलं गृह्णतः तनौ शरीरे निपतिताः । द्वितीयाबहुवचनम् । गृध्रध्वाङ्क्षवृकान् को वा कथं वारयेत् । पतत-

---

मृते सतीत्यर्थः । जडधियो मन्दमतयः उदरताडमुदरं संताड्यालमत्यर्थं शुचा शोकेन । अतिशयितशोकेनेत्यर्थः । भृशमत्यर्थं तप्यते । शुचा संतप्यते इति पाठः सुगमः । तु पुनः वियोगः । पुत्रादिभिः सहेत्यर्थात् । विदुषां ज्ञानिनां शमसुखं वितन्वन् विस्तारयन् असारे निःसारे विरसः कटुः परिणामः फलं यस्य तादृशे संसारे वैराग्यं द्रढयति दृढं करोति ॥ २२ ॥ अस्राक्षीदिति । प्रजानां पतिर्धाता एतद्वपुः शरीरं त्वङ्मात्रेण त्वचामात्रेणान्तरितमाच्छादितमामिषं मांसं यस्य एवंभूतं यदि पुनर्नास्राक्षीन्नोत्पादयेत् तदा वपुषि निपततो गृध्रान्मांसाशिनः पक्षिणः, ध्वाङ्क्षान्काकान्, वृकान्वृद्धसृगालान्, शुनः कुक्कुरान् क्रौञ्चान् प्रत्यग्रं नवं क्षरद्यदस्रं रक्तं तेन मिश्रं मिलितं पिशितं मांसं तस्य यो ग्रासस्तस्य ग्रह आदानं यत्र यस्यां क्रियायां यथा स्यात्तथा गृध्नतः काङ्क्षतः कथं वारयेत् । न कथमपीत्यर्थः । त्वङ्मात्राच्छादन-

---

१ 'सूक्ष्मं पुनस्त्वङ्मात्रा' इति पाठः । २ 'मिश्रपिशित' इति पाठः । ३ 'वृकाञ्शुनो निपततः क्रौञ्चान्कथं' इति पाठः ।

अपि च,

श्रियो ज्वा¹लालोला विषयजरसाः प्रान्तविरसा
विपद्गेहं देहं महदपि धनं भूरि निधनम् ।
बृहच्छोको लोकः सततमबलानर्थबहुला
तथाप्यस्मिन्घोरे पथि बत रता नात्मनि रताः ॥ २४ ॥

सरस्वती—वत्स, एतद्वैराग्यं त्वामुपस्थितम् । तदेतत्संभावय ।

मनः—क्वासि पुत्रक,

वैराग्यम्—(उपसृत्य ।) अहं भो अभिवादये ।

---

स्तान् न कोऽपि वारयितुं शक्त इति भावः ॥२३॥ अपि च, श्रिय इति । श्रियो ज्वालालोला दीपज्वालावच्चञ्चलाः । विषयजरसाः विषयैकसुखानि प्रान्तदुःखदाः । देहं शरीरं विपद्गेहमापदां गृहं दुःखानुभवजननम् । महदपि धनं भूर्यधिकं निधनं मरणहेतुत्वान्मरणमित्युच्यते । धनस्य निधनत्वं चौरादीनामपहरणादिना । लोकः पुत्रमित्रकलत्रादिः बृहच्छोको महाशोकहेतुः । सततमत्यर्थमबला वनिता अनर्थबहुला सर्वानर्थहेतुः । तथाप्येवं ज्ञात्वाप्यस्मिन्घोरे भयंकरे पथि संसारमार्गे रता नरा इत्यन्वयः । आत्मनि रतास्तु न भवन्तीति । बत इति खेदे ॥ २४ ॥

---

मेव गृध्रादिनिवारणे हेतुरित्यर्थः । कीदृशं वपुः । नवं नीलं यन्नीरजं नीलोत्पलं तस्य दलं छदस्तस्योपान्तोऽग्रभागस्तद्वदतिसूक्ष्ममतिकोमलम् ॥ २३ ॥ वैराग्यकारणीभूतं शारीरं दोषं प्रदर्श्य शरीरोपकारकेषु दोषं प्रदर्शयति—श्रिय इति । श्रियो लक्ष्म्यः दोलान्दोलिका तद्वल्लोलाश्चञ्चलाः । विषयेभ्यो जाताः स्त्रगादिभ्य उत्पन्ना ये रसाः सुखविशेषास्ते प्रान्ते समाप्तौ विरसा विषादजनकाः । 'रसो जलं रसो हर्षो रसः शृङ्गार इत्यपि' । देहं शरीरं विपदां विपत्तीनां गेहं गृहम् । महदपि बह्वपि धनं भूरि बहुप्रकारं निधनं मरणम् । उक्तं च चाणक्यनीतौ—'अर्थानामर्जने दुःखमर्जितानां च रक्षणे । आये व्यये महद्दुःखं कथमर्थाः सुखावहाः' इति । लोको जनः बृहच्छोकः बहुशोकः । अबला स्त्री सततमनारतमनर्थः स्वरूपनिद्रारूपो बहुलो यस्यां सा । तथोक्तं विष्णुपुराणे—'अमेध्यपूर्णे कृमिराशिसंकुले स्वभावगन्धेऽप्यशुचौ च सद्रवे । कलेवरे मूत्रपुरीषभाजने रमन्ति मूढा विरमन्ति पण्डिताः' इति । तथाप्येवं सत्यपि घोरे भयावहे पथि संसारे रता इति । बत । महत्कष्टमित्यर्थः । परं तु । आत्मनि न रताः । नात्मविचारपरा इत्यर्थः । तथोक्तं हरिवंशे—'अधस्ताच्छिद्रितं चर्म दुर्गन्धिपरिपूरितम् । मूत्रक्लिन्नं च तस्यार्थे मा राजन्ब्राह्मणान्वधीः' इति ॥ २४ ॥ संभावय मानय । मन

---

१ 'दोलालोला' इति पाठः ।

मनः—वत्स, जातमात्रेण त्वया त्यक्तोऽस्मि। परिष्वजस्व माम्।

वैराग्यम्—(तथा करोति।)

मनः—वत्स, त्वद्दर्शनात्प्रशान्तो मे शोकावेशः।

वैराग्यम्—तात, कोऽत्र शोकावेशः। यतः—

पान्थानामिव वर्त्मनि क्षितिरुहां नद्यामिव भ्रश्यतां
मेघानामिव पुष्करे जलनिधौ सांयात्रिकाणामिव।
संयोगः पितृमातृबन्धुतनयभ्रातृप्रियाणां यदा
सिद्धो दूरवियोग एव विदुषां शोकोदयः कस्तदा[1] ॥ २५ ॥

मनः—(सानन्दम्।) देवि, एवमेतत् यदाह वत्सः। तथाहि तावदवधारयतु भवती।

निरन्तराभ्यासदृढीकृतस्य
सस्नेहसूत्रग्रथितस्य जन्तोः।

---

वत्सेत्यारभ्य मन इत्यन्तं स्पष्टम्। वत्स, जातमात्रेण त्वया परित्यक्तोऽस्मि। उत्पन्न एव भवान्मत्समीपं परित्यक्तवानित्यर्थः॥ **पान्थानामिवेत्यादि**। वर्त्मनि मार्गे पान्थानामिव, नद्यां भ्रश्यतां पततां भूरुहाणामिव, पुष्कर आकाशे मेघानामिव, जलधौ सांयात्रिकाणां पोतवणिजामिव पुत्रादीनां संयोगः। यथा दूरवियोगेऽत्यन्तवियोग एव सिद्धो भवति तथा विदुषां शोकोदयः कीदृशः। शोकोदयो नास्तीत्यर्थः॥ २५॥ तथाहि **निरन्तरेति**। निरन्तराभ्यासदृढीकृतस्य निरन्तरमनवरतमभ्यासः परिशीलनं तेन दृढीकृतस्यात्यन्तं प्रबलीकृतस्य

---

इत्यादि त्यक्तोसीत्यन्तं सुगमम्। तथा करोति। परिष्वजतीत्यर्थः। तात पितः॥—पान्थानामिति। पिता च माता च बन्धुश्च तनयश्च भ्राता च प्रिया चैतेषां संयोगः स दूरवियोग एव वियोगजन्य एव। कार्यकारणयोरभेदात्स वियोग एवेत्युक्तम्। सदा सर्वदा सिद्धः। यदा स वियोग एव तदा विदुषां ज्ञानिनां कः शोकोदयः। वियोगजन्यसंयोगे दृष्टान्तानाह। वर्त्मनि मार्गे प्राक्प्रत्यक् संचरतां पान्थानामिव, भ्रश्यतां भग्नानां क्षितिरुहां तरूणां नद्यामिव, पुष्कर आकाशे विरुद्धक्रियवायुप्रेरितानां मेघानामिव। भ्राम्यतामिति पाठे मेघविशेषणम्। जलनिधौ सागरे सांयात्रिकाणां पोतवणिजामिव॥ २५॥ ममत्वग्रन्थेर्दुरुच्छेद्यत्वं प्रकटयति—**तथाहीति**। अवधारयतु सावधाना भूत्वा मनसि धारयतु। विसरणं मा भूदित्यर्थः॥ **निरन्तरेति**। जन्तो-

---

१ 'सदा' इति पाठः।

जानासि किंचिद्भगवत्युपायं
ममत्वपाशस्य यतो विमोक्षः ॥ २६ ॥

सरस्वती—वत्स, भावानामनित्यताभावनमेव तावन्ममतोच्छेदस्य प्रथमोऽभ्युपायः । तथाहि—

न कति पितरो दाराः पुत्राः पितृव्यपितामहा
महति वितते संसारेऽस्मिन्गतास्तव कोटयः ।
तदिह सुहृदां विद्युत्पातोज्ज्वलान्क्षणसंगमान्
सपदि हृदये भूयो भूयो निवेश्य सुखी भव ॥ २७ ॥

---

स्नेह एव सूत्रं रज्जुस्तेन ग्रथितस्य वद्धस्य जन्तोः भगवति, ममत्वपाशस्य यतो मोक्षस्तं जानासि किम् । यतः उपायाद्विमोक्षो भविष्यति तमुपायं किं न जानासीत्यर्थः ॥ २६ ॥ वत्सेत्यादिकोटय एवेत्यन्तं सुगमम् । तदिहेत्यादि । सुहृदां शोभनं हृत् हृदयं येषां तेषां पुत्रमित्रादीनाम् । 'सुहृद्दुर्हृदौ मित्रामित्रयोः' इति निपातनात्साधुः । विद्युत्पातोज्ज्वलान्सौदामिन्युदयसन्निभान् । क्षणसंगमान् क्षणिकान्वयान् सततं हृदये निवेश्य । आलोच्येत्यर्थः । हृदयेऽन्तःकरणे निवेश्याध्यस्य । अन्तःकरणधर्मतया ज्ञात्वा तत्रैव विलोप्येति यावत् । सपदि सद्यः भूयो

---

जीवस्य ममत्वरूपो यः पाशस्तस्य यत उपायाद्विमोक्षस्त्यागस्तमुपायं हे भगवति, त्वं किंचिज्जानासि तर्हि वदेति शेषः । कीदृशस्य ममत्वपाशस्य । निरन्तरमनवरतं योऽभ्यासस्तेन दृढीकृतस्य । पुनः कीदृशस्य ममत्वपाशस्य । स्नेहेन सह वर्तन्त इति सस्नेहा अन्तःकरणवृत्तयस्ता एव सूत्राणि तैर्ग्रथितस्य गुम्फितस्य ॥ २६ ॥ अनित्यताभावनमेवानित्यतावधारणमेव प्रथमोऽभ्युपायो मुख्यो हेतुः ॥—न कतीति । यद्यस्माद्धेतोः तवास्मिन्महति वितते विस्तीर्णे संसारे कोटयः कोटिसंख्याः पित्रादयो न गताः किं । किंतु गता एव । दाराः स्त्रियः, पुत्राः, पितृव्याः पितृभ्रातरः, पितामहाश्च ते अपि किं न गताः । किंतु गता एवेति संवन्धः । तस्माद्धेतोरिह जगति सुहृदां बन्धूनां विद्युत्पातवदुज्ज्वलान्दारुणतया प्रकाशमानान् क्षणं क्षणमात्रमेव संगमो यैस्तान्हृदयेऽन्तःकरणे भूयो भूयः पुनः पुनर्निवेश्यावधार्य सपदि तत्क्षणमेव सुखी भव । मन्दबुद्धयः पितृप्रभृतिषु व्यर्थमुदरताडनं वृथा संतापमनुभवन्ति । विदुषां पुनरेवमसारे संसारेऽत्यन्तकटुपरिणतौ ज्ञाते वैराग्यमेवाविर्भवतीति भावः ॥ २७ ॥

मनः—भगवति, तव प्रसादादपास्त एव व्यामोहः। किंतु—
भगवति तव मुखशशधरगलितैर्विमलोपदेशपीयूषैः।
क्षालितमपि मे हृदयं मलिनं शोकोर्मिभिः क्रियते ॥ २८ ॥
तदस्यार्द्रस्य शोकप्रहारस्य भेषजमाज्ञापयतु भगवती।

सरस्वती—वत्स, नूनमुपदिष्टमेवात्र मुनिभिः।
अकाण्डपातजातानामार्द्राणां मर्मभेदिनाम्।
गाढशोकप्रहाराणामचिन्तैव महौषधम् ॥ २९ ॥

मनः—एवमेव भगवत्येतद्दुर्वारं नु चेतः। यतः—
अप्येतद्वारितं चिन्तासन्तानैरभिभूयते।
मुहुर्वाताहतैर्बिम्बभ्रमच्छेदैरिवैन्दवम् ॥ ३० ॥

---

भूय इत्यर्थः। पुनः पुनर्विक्षेपराहित्येन सुखी भव सुखरूपेण तिष्ठ ॥ २७ ॥ भगवतीति। भगवति, त्वद्वचनसुधास्वादसमयएवान्तःकरणं निर्मलं भवति पश्चात् शोकाग्निभिः। 'शोकोर्मिभिः' इति वा पाठः। मलिनं भवतीति श्लोकार्थः॥२८॥ वत्सेत्यादि निवेश्यतामित्यन्तं सुगमम् ॥ अकाण्डेत्यादि । अकाण्डेऽनवसरे पातः प्राप्तिर्येषां तेऽकस्माज्जाताः। अप्रार्थिता इत्यर्थः। ते च ते जाताश्च बाणपातं विना जातानामिति च। मर्मभेदिनां मर्मस्पृशां मर्मच्छिदां च कलत्रादिविषयाणां गाढाश्च ते शोकप्रहारास्तेषामचिन्तैवाविचार एव महौषधम्। अचिन्तया प्राप्तानामचिन्तैव महौषधमित्यभिप्रायः ॥२९॥ अप्येतदिति। अत्र एतन्मम

---

कथमद्यापि संसारचक्रक्रकचसंभ्रमे भ्रमामीति आश्चर्यमिव मे भातीत्याशङ्क्याह—भगवतीति। मोहशेषो गमाद्यापि न मुञ्चतीत्याह—किंत्विति। हे भगवति, तव मुखमेव शशधरश्चन्द्रस्तस्य दीधितयः किरणास्तेभ्यो गलितानि निःसृतानि तैर्विमला निर्मला उपदेशा एव पीयूषाण्यमृतानि तैर्मे मम हृदयं मनः क्षालितमप्यात्मावबोधयोग्यं संपादितमपि शोकोर्मिभिः शोकलहरीभिर्मलिनं क्रियते आम्रियते। अहो असंभावनाविपरीतभावनासंस्कारा बलवत्तरा इत्यर्थः ॥ २८ ॥ तदस्येति। आर्द्रस्य नूतनस्य शोक एव प्रहारस्तस्य। मुनिभिरुपदिष्टं मार्गमुपदिशामीत्याह—अकाण्डेति। न काण्डपातो बाणप्रहारो यत्र तथा जातानामुत्पन्नानामार्द्राणामभिनवानां मर्मभेदिनां व्यथाकारिणामेतादृशानां गाढा दृढाः पुनः सारका ये शोका एव प्रहारास्तेषामचिन्तैवासंकल्प एव महौषधिर्नान्यदित्यर्थः ॥ २९ ॥ अप्येतदिति।

---

१ 'तव मुखशशधरदीधितिगलितैः' इति पाठः। २ 'महौषधिः' इति पाठः। ३ 'भगवति, एवमेतद्दुर्वारं' इति पाठः।

**सरस्वती**—वत्स, श्रूयताम् । चित्तस्यायं विकारः । ततः कस्मिंश्चिच्छान्ते विषये चित्तं निवेश्यताम् ।[1]

**मनः**—तत्प्रसीदतु भगवती । कोऽसौ शान्तो विषयः ।

**सरस्वती**—वत्स, गुह्यमेतत् तथाप्यार्तानामुपदेशे न दोषः ।

नित्यं स्मरञ्जलदनीलमुदारहार-
केयूरकुण्डलकिरीटधरं हरिं वा ।
ग्रीष्मे सुशीतमिव वा ह्रदमस्तशोकं
ब्रह्म प्रविश्य भज निर्वृतिमात्मनीनाम् ॥ ३१ ॥

---

चित्तं भवदुपदेशवशात् शोकावेगात् निरुद्धं वारितमपि चिन्तासंतानैरभिभूयते । वाताहतैरभ्रच्छेदैरैन्दवं बिम्बमिवेत्युक्तम् । कोऽयं विकार इति चेतोविकत्थना-प्रतिपादनाद्विचलनाख्यमङ्गम् । तल्लक्षणं तु 'विकत्थना विचलनं' इति ॥ ३० ॥ मन इत्यारभ्य न दोष इत्यन्तं सुगमम् । **नित्यं स्मरन्निति** । नित्यमनवरतम् । वाशब्द एवकारार्थे । सगुणनिर्गुणविकल्पार्थे वा वाशब्दः । तदेव हरिं स्मरन् तत्रैव चित्तैकाग्रतां संपादयन् ग्रीष्मे ग्रष्मकाले ग्रीष्माभितप्तः सुशीतमत्यन्तशीतलं प्रासादमिवास्तशोकमपास्तदुःखम् । शान्तमित्यर्थः । ब्रह्म प्रविश्य तदेकतामापाद्य । आत्मनीनामात्महितां विक्षेपरहितत्वेनेप्सितां निर्वृतिं स्वरूपाविर्भावलक्षणं निर्वाणं भज स्वीकुरु । आत्मनीनामित्यत्र 'आत्मन्विश्वजन—' इत्यादिना खः । खस्य इना-

---

एतच्चेतो मनः वारितं निवारितमपि चिन्तासंतानैश्चिन्तापरम्पराभिरभिभूयते । तत्र दृष्टान्तः । अभ्रच्छेदैर्मेघपटलैः । इन्दोरिदमैन्दवं चान्द्रमसं बिम्बमिव । कीदृशैरभ्रच्छेदैः । मुहुर्वारंवारं वातेनासमन्ताद्धतैर्नीतैः । चालितैरित्यर्थः ॥२०॥शान्ते विषये शोकमोहादिरहिते निवेशय । गुह्यं गुप्तम् । आर्तानां मोहशोकपीडितानाम् । उपदिशति—**नित्यमिति** । हे मनः । त्वमित्यध्याहारः । अस्तः सर्वथा कालत्रयेऽपि शोकः संसारकारणीभूतं दुःखं यस्मिंस्तादृशं ब्रह्म । वा एवार्थे । ब्रह्मैव प्रविश्याद्वितीयत्वेन ज्ञात्वा । 'द्वितीयाद्वै भयं भवति' इति श्रुतेः । 'भयं द्वितीयाभिनिवेशतः स्यात्' इति महाभागवताच्च । आत्मने हिता आत्मनीना तां निर्वृतिं परमसुखं भज प्राप्नुहि । तत्र दृष्टान्तः । ग्रीष्मे सुशीतं ह्रदमिव । यथा चण्डांशुकरसंतप्तः शीतं तटिनीह्रदं प्रविश्य सुखमनुभवति तथा संसारतप्तो ब्रह्म प्रविश्य तत्सुखमनुभवतीत्यर्थः । निर्गुणे निराकारे निर्विषये कथं मनसः प्रवृत्तिरित्याशङ्क्य आदौ साकारे प्रवृत्तिः सुकरेत्याह । किं कुर्वन्सन् । जलदनीलं घनश्यामम् । उदारोऽमूल्यो यो हारः केयूरं बाहोर्भूषणं

---

[1] 'ततः क्वचिच्छान्ते विषये चेतो निवेशय' इति पाठः ।

मनः—एवमेतत् । संप्रति हि—

नार्यस्ता नवयौवना मधुकरव्याहारिणस्ते द्रुमाः
प्रोन्मीलन्नवमल्लिकासुरभयो मन्दास्त एवानिलाः ।
अद्योदात्तविवेकमार्जिततमःस्तोमव्यलीकान्पुन-
स्तानेतान्मृगतृष्णिकार्णवपयःप्रायान्मनः पश्यति ॥३२॥

सरस्वती—वत्स, यद्यप्येवं तथापि गृहिणा मुहूर्तमप्यनाश्रम-धर्मिणा न भवितव्यम् । तदद्यप्रभृति निवृत्तिरेव ते सधर्मचारिणी ।

---

देशः । 'आत्माध्वानौ खे' इति टिलोपाभावः ॥ ३१ ॥ संप्रतीत्यादि । वैराग्योपदेशानन्तरं मन आह—नार्य इति । नवयौवना नार्यस्ता एव पूर्वमनुभूता आलम्बनविभावोक्ता एव, मधुकरव्याहारिणो भ्रमरझङ्कारवन्तो द्रुमास्त एव, मलयमारुतास्त एव, उद्दीपनविभावा उक्ताः । अद्यास्मिन्समये उदात्तेन विवेकेन नित्यानित्यविषयेण मार्जितः प्रक्षालितस्तमःस्तोमो निबिडान्धकारो यस्य तन्मनः । विशेषणमेतत् । व्यलीकान्मिथ्याभूतांस्तानेतान्नारीमधुकरव्याहारादीन् । अयमर्थः । पूर्वमालम्बनविभावा उद्दीपनविभावाश्चानुभूताः तानिमान्मनः मृगतृष्णिकार्णवजलप्रायान्पश्यतीति वाक्यार्थः ॥ ३२ ॥ वत्स, यद्यप्येवमित्यारभ्य साम्रा-

---

कुण्डले कर्णभूषणे किरीटं मुकुटम् एतानि धरतीति तं हरिं हरति संसारमज्ञानतत्कार्यमसौ हरिस्तं नित्यं स्मरन् साकारस्मरणानन्तरं निराकारे मनसः सुखप्रवेश इति भावः । यथा नूतनो धनुर्धरः स्थूलमपि लक्ष्यं लक्ष्यीकर्तुमशक्नुवानोऽभ्यासपरिपाकवशात्केशान्तरप्रोतवराटिकां लक्ष्यीकरोति तद्वदित्यर्थः ॥ ३१ ॥ नार्यस्ता इति । अद्येदानीं तावन्मृगतृष्णिकायां मरुमरीचिकायां कल्पितो योऽर्णवस्तस्य पयो जलं तत्प्रायांस्तन्मयान्मिथ्यारूपांस्तान्पूर्वदृष्टान् पुनः पश्यति । एतान् कानित्याह । ताः पूर्वपरिचिता नवयौवनास्तरुण्यो नार्यः मधुकराणां भ्रमराणां व्याहारः संचारो यत्र एतादृशास्ते पूर्वपरिचिता द्रुमा वृक्षाः त एव मन्दानिला वायवः । कीदृशा वायवः । प्रकर्षेणोन्मीलन्त्यो विकसन्त्यो नवा नूतना मल्लिकास्ताभिः सुरभयो बहलपरिमलाः । कीदृशं मनः । उदात्तः स्वेच्छाप्रवृत्तो यो विवेकस्तेन मार्जितं प्रोञ्छितं तमःस्तोमोऽज्ञानसमूह एव व्यलीकमिन्द्रजालकं यस्य तादृशमित्यर्थः । पूर्वं यथार्थतयानुभूता वनितादयोऽनुरागमुत्पादयन्ति स्म त एवेदानीं मिथ्यात्वेन परिज्ञाता वैराग्यहेतव इति ध्वनितम् ॥ ३२ ॥ उत्पन्नविवेकस्याप्याश्रमग्रहणमावश्यकमित्याह—वत्स, यद्यपीति । गृहिणा गृहस्थेन अद्यारभ्य निवृत्तिर्निर्विकारा वृत्तिः

---

१ 'व्यलीकं पुनः' इति पाठः । २ 'र्णवजलप्रायान्' इति पाठः ।

**मनः**—(सलज्जम् ।) यदादिशति देवी ।

**सरस्वती**—शमदमसंतोषादयश्च पुत्रास्त्वामनुचरन्तु । यमनियमादयश्चामात्याः । विवेकोऽपि त्वदनुग्रहादुपनिषद्देव्या सह यौवराज्यमनुभवतु । एताश्च मैत्र्यादयश्चतस्रो भगिन्यो भगवत्या विष्णुभक्त्या तव प्रसादनाय प्रहितास्ताः सप्रसादमनुमानय ।

**मनः**—यदादिशति देवी । मूर्ध्नि निवेशिताः सर्वा एवाज्ञाः । (इति सहर्षं पादयोः पतति ।)

**सरस्वती**—साम्राज्यमनुतिष्ठस्व । ऐते[2] च यमनियमादयः सादरमायुष्मता द्रष्टव्याः । एतैरेव सहायुष्मान्यौवराज्यमधितिष्ठतु । त्वयि च स्वास्थ्यमापन्ने क्षेत्रज्ञोऽपि स्वां प्रकृतिमापत्स्यते । यतः—

त्वत्सङ्गाच्छाश्वतोऽपि प्रणय[3]जलधरोपप्लुतो बुद्धिवृत्ति-
ष्वेको नानेव देवो रविरिव जलधेर्वीचिषु व्यक्तमूर्तिः[4] ।

---

ज्यमनुतिष्ठस्वेत्यन्तं सुगमम् । **त्वयि चेत्यादि** । स्वास्थ्यं स्थैर्यमापन्ने मनसि । निश्चले सतीत्यर्थः । क्षेत्रज्ञो जीवात्मापि स्वां प्रकृतिं परमात्मैक्यमापत्स्यते संपत्स्यते । अत्रानन्दो नाम विमर्शसन्धेस्त्रयोदशमङ्गम् । 'जीवात्मा परमात्मैक्यं संपत्स्यते' इति कार्यसंग्रहात् । तल्लक्षणं तु 'आनन्दः कार्यसंग्रहे' । **त्वत्सङ्गादिति** । तव सङ्गात्संकल्पविकल्पात्मकरूपाच्छाश्वतो ध्रुवोऽपि । अपिशब्दात्सत्यज्ञानानन्तानन्दात्मकोऽपि । प्रणयजलधरोपप्लुतः प्रणयाः स्नेहास्त एव

---

सधर्मचारिणी सह धर्मं चरतीति सधर्मचारिणी धर्मपत्नीत्यर्थः । निवृत्तिमतो विरक्तस्य शमादय आवश्यका इत्यभिप्रेत्याह—शमदमेति । उपचरन्तु सेवन्ताम् । अमात्याः प्रधानाः युवराजस्य कर्म यौवराज्यं । मैत्री, प्रीतिः, करुणा, मतिरिति चतस्रः प्रहिताः प्रेषिताः ।—आयुष्मान् भवान् । स्वास्थ्यं विषयसंबन्धराहित्यम् । आपन्ने प्राप्ते सति क्षेत्रज्ञस्तदात्मा जीवः स्वामात्मीयां प्रकृतिं परमात्मभावमापत्स्यते प्राप्स्यते । प्रकृतिमापत्स्यत इत्युक्तं तामेवोपपादयति—त्वत्सङ्गादिति । दीव्यत्यन्यनिरपेक्षतया प्रकाशतेऽसौ देव एक एव । 'एकमेवाद्वितीयम्' इति श्रुतेः । सुखदुःखादिव्यवस्थातो नानात्वप्रतीतेः कथमेकस्तत्राह । कीदृशो देवः । शाश्वतोऽपि षड्भावविकारशू-

---

१ 'प्रणमति' इति पाठः । २ 'एते यमनियमासनादयः-साम्राज्यमधितिष्ठतु' इति पाठः । ३ 'प्रभवलयजरोपप्लुतो' इति पाठः । ४ 'व्यस्तमूर्तिः' इति पाठः ।

तूष्णीममालम्बसे चेत्कथमपि वितता वत्स संहृत्य वृत्ती-
र्भात्यादर्शे प्रसन्ने रविरिव सहजानन्दसान्द्रस्तदात्मा ॥ ३३ ॥

तद्भवतु । ज्ञातीनामुदकदानाय नदीमवतरामः ।

---

जलधरा मेघास्तैरेवोपप्लुतः । प्रच्छन्न इत्यर्थः । बुद्धिवृत्तिषु जाग्रत्स्वप्नसुषुप्तिषु विश्वतैजसप्राज्ञविराट्सूत्रात्मान्तर्यामिरूपेणैको देवो नानेव भाति । नानाप्रकारावच्छिन्नो व्यक्तमूर्तिः सन् जलधेर्वीचिषु रविरिव भाति । तूष्णींभावमालम्बसे चेत् । उदासीनतया स्थितश्चेदित्यर्थः । कथमपि कृच्छ्रात् साधु सम्यक् वृत्तीर्जाग्रदादिकाः संहृत्य नाशयित्वा प्रसन्न आदर्शे रविरिव । तदा तूष्णींभावसमये आत्मा प्रत्यगात्मा सहजानन्दसान्द्रः सहजेनानन्देन सान्द्रो घनः । स्वरूपेणावस्थित इत्यर्थः । आदर्शे प्रसन्न इत्यनेनात्मा निर्मलान्तःकरण एव प्रतिभाति । यद्यपि सर्वगतस्य स्वयंप्रकाशस्यात्मनः सर्वत्र प्रतिभासो युक्त एव तथाप्यात्मनो निर्विशेषत्वात्प्रतिभासहेत्वभावान्न प्रकाशते । प्रकाशहेतुसद्भावे प्रकाशत एव । प्रकाशहेतुर्निर्मलान्तःकरणम् । यथा राहोरदृश्यस्य दर्शनहेतुत्वाभावात्सर्वदा दर्शनं नास्ति । चन्द्रार्कसंबन्धरूपहेतुसद्भावे दर्शनमस्त्येव । यथोक्तं भगवता शेषेण—'राहुरदृश्योऽपि यथा शशिबिम्बस्थः प्रकाशते जगति । सर्वगतोऽपि तथात्मा बुद्धिस्थो दृश्यतामेति ॥' अत उक्तः प्रसन्नदर्पणदृष्टान्तः । अत्र निरपायेन बोधोदयद्वारा ब्रह्मप्राप्तिर्भविष्यतीत्यापादनान्नियताप्तिर्नाम विमर्शसन्धेः प्राधान्यांशः सूचितो भवतीति । तदुक्तम्—'अपायाभावतः प्राप्तिर्नियताप्तिः सुनिश्चिता' इति । अपायराहित्यान्निःसन्देहं कार्यप्राप्तिः नियताप्तिरुच्यत इत्यर्थः । नियताप्तिप्रकर्षयोः सन्धानात्मको विमर्शसन्धिः साङ्गो निरूपितः ॥ ३३ ॥ तद्भवत्वित्यादि । ज्ञातीनां कामादीनामुदकदानाय

---

न्योऽपि त्वत्सङ्गात्त्वदुपक्लृप्तविषययोगात् प्रभवलयौ जन्ममृत्यू तावेव जरा तयोपप्लुतः पृथक्कृतः बुद्धिवृत्तिषु नानेव बहुधेव । तत्र दृष्टान्तः । जलधेः समुद्रस्य वीचिषु लहरीषु पवनास्फालितासु व्यस्ता भिन्ना मूर्तिर्यस्य एतादृशो रविरिव । तथा रविरेक एव लहरीक्षोभान्नाना एवमात्मा बुद्धिवृत्तिद्युतिबिम्बितत्वान्नानेत्यर्थः । उक्तं च—'एक एव हि भूतात्मा भूते भूते व्यवस्थितः । एकधा बहुधा चैव दृश्यते जलचन्द्रवत् ॥' इति । किंच हे वत्स, कथमपि केनापि प्रकारेण वितता विस्तृता विषयेषु वर्तमाना वृत्तीः संहृत्य संक्षिप्य तूष्णीं निवृत्तिमालम्बसे चेदङ्गीकरोषि चेत्तदा सहजानन्दसान्द्रः स्वाभाविकविज्ञानघन आत्मा भाति प्रकाशते । कस्मिन्क इव । प्रसन्ने निर्मले आदर्शे आ समन्ताद्दृश्यतेऽस्मिन्नित्यादर्शो जलादिः तस्मिन्नित्यर्थः । निर्मलजलतैलादौ यथा रविर्भाति तथा निर्मलासु बुद्धिवृत्तिष्वात्मेत्यर्थः ॥ ३३ ॥ उपसंहरति—तद्भव-

मनः—यदाज्ञापयति देवी ।

(इति निष्क्रान्ताः सर्वे ।)

इति प्रबोधचन्द्रोदये वैराग्यप्रादुर्भावो नाम पञ्चमोऽङ्कः ।

---

नदीमवतराम इति । एतदुक्तं भवति—विरक्तस्यापि कर्म न त्याज्यमिति । तदुक्तं योगियाज्ञवल्क्येन—'ज्ञानिनोऽज्ञानिनो वापि यावद्देहस्य धारणम् । तावद्वर्णाश्रमोक्तेषु कर्तव्यं कर्म मुक्तये ॥' इति । निष्क्रान्ताः सर्वे ॥

इति श्रीमद्राजाधिराजपरमेश्वरश्रीवीरप्रतापश्रीकृष्णरायमहाराजसाम्राज्यधुरन्धरश्रीसाल्वतिम्मदण्डनायकभागिनेयनाण्डिल्लगोपमन्त्रिशेखरविरचितायां प्रबोधचन्द्रोदयव्याख्यायां चन्द्रिकासमाख्यायां पञ्चमोऽङ्कः ॥ ५ ॥

---

त्विति । ज्ञातीनां कामादीनामुदकदानाय जलाञ्जलिदानाय । तिलाञ्जलिदाने कृते निरन्वयविनाशो भविष्यतीति भावः । अवतरामो गच्छामः ॥

इति प्रबोधचन्द्रोदयव्याख्याने प्रकाशाख्ये वैराग्यप्रादुर्भावो नाम पञ्चमोऽङ्कः ॥५॥



## षष्ठोऽङ्कः ।

(ततः प्रविशति शान्तिः ।)

**शान्तिः**—आदिष्टास्मि महाराजविवेकेन । यथा वत्से, विदितमेव भवत्या किल ।

अस्तं गतेषु तनयेषु विलीनमोहे
वैराग्यभाजि मनसि प्रशमं प्रपन्ने ।
क्लेशेषु पञ्चसु गतेषु समं समीहां
तत्त्वावबोधमभितः पुरुषस्तनोति ॥ १ ॥

---

ततः प्रविशतीत्यादिना प्रधानपात्रप्रवेशनार्थं प्रवेशकः प्रस्तौति । अत्राज्ञां गृहीत्वा पात्रप्रवेशः । अथ निर्वहणसन्धिः प्रस्तूयते—**यथा किलेत्यादि** । 'बीजवन्तो मुखाद्यर्था विप्रकीर्णा यथायथम् । ऐकार्थ्यमुपनीयन्ते यत्र निर्वहणं हि तत् ॥' इति । मुखसन्ध्यादिबीजानां निजप्रकारप्रक्षिप्तानामेकार्थयोजनमित्यर्थः । तदेवाह—**अस्तं गतेष्वित्यादि** । तनयेष्वस्तं गतेषु सत्सु विलीनः क्वचिल्लीनो मोहो मोहनामकस्तनयो यस्य मनसस्तस्मिन् । अतएव वैराग्यं भजतीति वैराग्यभाक् तस्मिन्मनसि प्रशमं निर्विकारत्वं प्रपन्ने प्राप्ते सति । तदनन्तरं पञ्चसु क्लेशेषु गतेषु सत्सु अविद्यास्मितारागद्वेषाभिनिवेशास्तमोमोहमहामोहतामिस्रान्धतामिस्रा इत्यपरपर्यायेषु समं युगपद्गतेषु सत्सु । अयमर्थः । वैराग्यभाजि । अत्र वैराग्यं नाम विरोधी कश्चन भावरूपधर्मः । अतः क्लेशप्रहाणे न पौनरुक्त्यम् । विलीनमोह इत्यत्र मोहस्य क्वचिन्निलीनोक्तेः । अभितस्तत्त्वावबोधं प्रतीत्यर्थः । 'अभितःपरितः—' इत्यादिना द्वितीया । समीहामिच्छां तनोति तत्त्वावबोधोदयार्थे उपयुङ्क्ते । अनेनैतदुक्तं भवति—गर्भसन्धौ विमर्शसन्धौ च विषयाणां मिथ्यात्वनिरूपणं तद्गतस्नेहनिरासो वैराग्योत्पत्तिः पञ्चक्लेश-

---

पञ्चमेऽङ्के वैराग्योत्पत्तिमभिधायेदानीं षष्ठेऽङ्के प्रबोधोत्पत्तिमभिधातुं जीवन्मुक्तिमुपक्रम्य तस्याः क्रमं दर्शयन् शान्तिप्रवेशं प्रस्तावयति—तत इति । शान्तिर्नाम बाह्येषु वस्तुष्वन्तःकरणोपरतिः । आदिष्टास्म्याज्ञप्तास्मि । विदितमेव ज्ञातमेव । **अस्तं गतेष्विति** । तनयेषु कामादिष्वस्तं गतेषु मृतेषु सत्सु वैराग्यं भजते तद्वैराग्यभाक् तस्मिन् रागशून्ये विशेषेण लीनो मोहो यस्मात् तादृशे मनसि प्रशममात्यन्तिकं शमं प्रपन्ने प्राप्ते सति पञ्चसु क्लेशेषु । अविद्यास्मितारागद्वेषाभिनिवेशाः क्लेशाः, मिथ्याज्ञानमविद्या, बुद्ध्यात्मनोरैक्याध्यासोऽस्मिता, विषयेच्छा रागः, ससाधने दुःखेऽप्रीतिर्द्वेषः, मरणाद्भयमभिनिवेशः, तेषु समं समकालं समीहां वासनां गतेषु

तद्भवती त्वरिततरं देवीमुपनिषदमनुनीय मत्सकाशमानयत्विति ।

शान्तिः—(विलोक्य) ममाम्बा सहर्षं किमपि मन्त्रयन्ती इत एवागच्छति ।

(ततः प्रविशति श्रद्धा ।)

श्रद्धा—अये, अद्य खलु राजकुलमारोग्ययुक्तमालोक्य चिरेण मे पीयूषेणेव लोचने पूर्णे ।

असतां निग्रहो यत्र सन्तः पूज्या यमादयः ।
आराध्यते जगत्स्वामी वश्यैर्देवानुजीविभिः ॥ २ ॥

शान्तिः—(उपसृत्य) अम्ब, किं मन्त्रयन्ती प्रस्थिता ।

श्रद्धा—(अये, अद्येत्यादि पठति ।)

---

निरासश्च प्रतिपादितस्तेषां यथायथं विप्रकीर्णानां प्रबोधचन्द्रोदयरूपैककार्यान्वयो निरूपित इति । यथा रत्नावल्यां सागरिकारत्नमालावसुमतीबाभ्रव्यादीनामार्तानां मुखसन्ध्यादिषु विप्रकीर्णानां वत्सराजैककार्यार्थत्वम् । वसुभूतिः सागरिकां निर्वर्ण्य अपवार्य 'बाभ्रव्यसदृशीयं राजपुत्री' इत्यादिना दर्शितमिति निर्वहण-संधिस्तद्वदत्रापीत्यर्थः । तदङ्गानि तु—'सन्धिर्निरोधो ग्रथनं निर्णयः परिभाषणम् । प्रसादानन्तसमयाः कृतिर्भाषोपगूहने । पूर्वभारापसंहारौ प्रशस्तिश्च चतुर्दश ॥' इति । एतेषां लक्षणं सोदाहरणमुच्यते । अस्तं गतेष्वित्यारभ्य 'विषयममतातङ्क-पङ्कं तरन्ति'त्यन्तो निर्वहणसन्धिः । 'अस्तं गतेष्वि'त्यादिना क्लेशेन पुनर्बीजोपग-मनप्रतीतेः सन्ध्याख्यं निर्वहणसन्धेः प्रथममङ्गम् । 'सन्धिर्बीजोपगमनं' इति लक्षणात् ॥ १ ॥ मत्सकाशमानयेत्यादिष्टास्मीत्यन्वयः । विलोक्येत्यारभ्य अद्ये-

---

संस्काररूपतां प्राप्तेषु पुरुषः क्षेत्रज्ञोऽभितः सर्वत्र स्वेषु परेषु तत्त्वावबोधं स्वस्वरूपाव-बोधं तनोति विस्तारयति । तदुक्तम्—'यो न हृष्यति न द्वेष्टि न शोचति न काङ्क्षति' इति ॥ १ ॥ त्वरिततरमतिशीघ्रम् । अनुनीय सप्रेम मानयित्वा । मन्त्रयन्ती विचार-यन्ती । राजकुलं राजगृहं । पीयूषेणेवामृतेनेव । वस्तुतत्त्वमुपदिशति—असतामिति । यत्र यस्मिन् राजकुले असतां मोहादीनां निग्रहो दण्डः, यत्र यमादयः सन्तः विवेकानुगामित्वात्पूज्याः, यत्र जगत्स्वामी नारायणो वश्यैः शमादिभिः, करणैर्देव-मीश्वरमनुजीवन्ति ते देवानुजीविनो जीवास्तैः कर्तृभिः । आराध्यते पूज्यते ॥ २ ॥ अये अद्येति । अये, अद्य खलु राजकुलमित्यादि । कीदृशी किंप्रकारा स्वामिनः

शान्तिः—अथ मनसि कीदृशी स्वामिनः पुरुषस्य प्रवृत्तिः ।

श्रद्धा—यादृशी वध्यस्य ग्राह्मस्य भवति ।

शान्तिः—तत्किं स्वाम्येव साम्राज्यमलंकरिष्यति ।

श्रद्धा—एवमेतत् यथात्मानमनुसंधत्ते ततो देव एव स्वाराट् सम्राट् च भवति ।

शान्तिः—अथ देवस्य मायायां कीदृशोऽनुग्रहः ।

श्रद्धा—ननु निग्रह इति वक्तव्ये कथमनुग्रहः शक्यते वक्तुम् । देवोऽपि हि सर्वानर्थवीजमियं माया सर्वथा निग्राह्येति मन्यते ।

शान्तिः—यद्येवं का तर्हीदानीं राजकुलस्य स्थितिः ।

श्रद्धा—शृणु,

नित्यानित्यविचारणाप्रणयिनी वैराग्यमेकं सुहृ-
त्सन्मित्राणि [1]यमादयः शमदमप्रायाः सहाया मताः ।

---

त्यादि पठतीत्यन्तं सुगमम् ॥२॥ अथेति । वध्यस्य वधार्हस्य (?) वा । तत्कि-मित्यादि । किमिति प्रश्ने । अथ देवस्येत्यादि । कीदृशोऽनुग्रह इति सबलवाक्यतां मत्वाह—ननु निग्रह इति। मायायामनुग्रहलेशमात्रस्याप्यसंभवादिति भावः। देवो हीति । मायाया निग्राह्यत्वे हेतुमाह । सर्वानर्थवीजमिति । यद्येवमित्यादि । मनस्यपरागे मायायामपरागायां चेति एवंशब्दार्थः । शृण्विति । नित्या-नित्येति । नित्यानित्यविचारणा । ब्रह्मस्वरूपमेव नित्यं ततोऽतिरिक्तमनित्य-

---

पुरुषस्य मनसि निग्रहार्थं प्रवृत्तिरित्यर्थः । स्वाम्येवात्मैव साम्राज्यमात्मारामत्वम-लंकरिष्यत्यङ्गीकरिष्यति । यथेति । यथा यतः आत्मानं परमात्मानमनुसंधत्ते प्रपञ्च-प्रातिकूल्येन परमात्मत्वेनावधारयति । ततो देव एव स्वाराट् स्वसिन्ना समन्ताद्रा-जत इति स्वाराट् आत्मारामः, सम्यक् चिदानन्दाभेदेन राजते इति सम्राट् । ज्ञानाभिन्न इत्यर्थः । तथाच छान्दोग्ये 'स एष एवं विजानन्नात्मरतिरात्मक्रीड आत्ममिथुन आत्मानन्दः स स्वराट् भवति' इति । अथेति । मायायां मूलाविद्यायां कीदृशः कथमनुग्रहः । न कथमपीत्यर्थः । न कथमपीत्युक्तं तदेव शङ्कते—नन्विति। सर्वानर्थबीजं सर्वेषामनर्थानां बीजं मूलं कारणमत एव निग्राह्येत्यर्थः । स्थितिर्व्य-वस्था । मायानिग्रहे हेतुमाह—नित्यानित्येति । नित्य आत्मा अनित्यं ततोऽन्यत् एषा विचारणा प्रणयिनी प्रणयः प्रीतिर्यस्यां सा प्राणप्रिया, वैराग्यं वीतरागता एकं

---

१ 'शमादयः' इति पाठः.

मैत्र्याद्याः परिचारिकाः सहचरी नित्यं मुमुक्षा बला-
दुच्छेद्या रिपवश्च मोहममतासङ्कल्पसङ्गादयः ॥ ३ ॥

शान्तिः—अथ धर्मे स्वामिनः कीदृशः प्रणयः ।

श्रद्धा—पुत्रि, वैराग्यसंनिकर्षात्प्रभृति नितान्तमिहामुत्रफल-भोगविरस एव स्वामी । तेन,

स नरकादिव पापफलाद्भयं भजति पुण्यफलादपि नाशिनः ।
इति समुज्झितकामसमन्वयं सुकृतकर्म कथंचन मन्यते ॥ ४ ॥

---

मिति विचारो नित्यानित्यविचारणा सैव प्रणयिनी पत्नी स्निग्धा च । वैराग्य-मेकं सुहृत् शोभनहृत् । सन्मित्राणि सत्सखायः । मन्त्रिण इत्यर्थः । मित्रशब्दो-ऽमात्यवाचीत्युक्तं प्राक् । शमदमप्रायाः शमदमतितिक्षादयः । मैत्र्याद्या इति । मैत्रीकरुणामुदितोपेक्षाः परिचारिकाः । मुमुक्षा सहचरी सहचारिणी । 'चरेष्टः' 'टिड्ढाणञ्–' इति ङीप् । बलादुच्छेद्या इत्यादि । मोहोऽभिमानः, ममता मम-त्वाभिमानः, संकल्पः सम्यक्कल्पनमिदमित्थं करिष्यामीत्यर्थे यः सङ्ग आसक्तिः । आदिशब्देन विविधः संसारः संगृहीतः । शोक-मोह-ममतादीनां संजिहीर्षा वै-राग्यावस्था सूचिता ॥ ३ ॥ **अथ धर्म इत्यादि** । इहामुत्र भोगः इहभोगः शब्दाद्यनुभवः, अमुत्रभोगः स्वर्गाद्यनुभवः, उभयत्र विरसस्तत्र वैरस्यम् । कार्यत्वेन क्षणिकत्वादिति भावः । तदेवाह—**स नरकादिति** । स स्वामी

---

मुख्यं सुहृत् हिताहितप्राप्तिपरिहारजनकम्, समीचीनानि मित्राणि यमनियमासन-प्राणायामप्रत्याहारध्यानधारणासमाधयः, शमो मनोनिग्रहः, दम इन्द्रियनिग्रहः । प्रायोग्रहणात्संतोषः एते सहायाः सहकारिणो मताः, मैत्री परानुद्वेगजनिका वृत्तिः । सा अदियांसां ताः उक्तं परिचरन्ति कुर्वन्ति ताः परिचारिकाः उक्तकारिण्य इ-त्यर्थः । मुमुक्षा मोक्षेच्छा सहचरी सखीत्यर्थः । अतस्मिंस्तद्बुद्धिर्मोहः, ममता स्वकी-यत्वाभिमानः, संकल्पो मनसोऽभिनिवेशः, सङ्गो विषयसांमुख्यम्, एते रिपवो बलादात्मजिज्ञासाबलान्नित्यमवश्यमुच्छेद्याः । नाशनीया इत्यर्थः ॥ ३ ॥ इदानीं धर्मस्यानुरागं पृच्छति—**अथ धर्मस्येति** । प्रणयः प्रीतिः । स्वामिनो धर्मस्येति सामानाधिकरण्ये षष्ठ्यौ । उत्तरयति—**पुत्रीति** । हे पुत्रि, वैराग्यसंनिकर्षाद्वैराग्य-संबन्धात्प्रभृति आरम्य नितान्तमतिशयेन इहास्मिन् लोके, अमुत्र परलोके फलभोगः पुत्रस्वर्गादिसाक्षात्कारस्तत्र विरस एव वैरस्यमेवेति । तत्र हेतुमाह—**तेन, स इति** । स स्वामी तेन हेतुना पापफलान्नरकादिव पुण्यफलादपि स्वर्गान्नाशिनो

---

१ 'धर्मस' इति पाठः ।

किंत्वसौ प्रत्यक्प्रवणतां स्वामिनो विचिन्त्य कृतकर्तव्यमिवात्मानं मत्वा स्वयमेव धर्मः शून्यव्यापारोऽभूत् ।

**शान्तिः**—अथ तानुपसर्गान् गृहीत्वा, महामोहो निलीय स्थितस्तेषां को वृत्तान्तः ।

---

पुरुषः नरकात्पापफलाद्भयं भजति । नाशिनः क्षयिणः पुण्यफलादपि भयं भजति । समुज्झितकामसमन्वयं त्यक्तकामनासंसर्गम् । कर्मविशेषणमेतत् । सुकृतकर्म नित्यनैमित्तिकं कर्म । कथंचनेत्येकं पदम् । कथंचिदपीत्यर्थः । मन्यते मनुते । अङ्गीकरोतीत्यर्थः । दैवादिकः श्यन् ॥ ४ ॥ **किंत्वसावित्यादि** । प्रत्यक्प्रवणतां प्रत्यगात्मैव प्रवणस्तस्य भावस्तत्ता ताम् । स्वरूपेणावस्थाने उद्युक्तमित्यर्थः । कृतकर्तव्यमिव कर्तव्यांशः कृतो येन स कृतकर्तव्यस्तमिवेति वाक्यालंकारे । यथा कृतकर्तव्य उदास्ते एवमुदासीनं पुरुषं दृष्ट्वा स्वयमप्युदास्ते । अयमर्थः—औदासीन्यप्रच्युतिरेव प्रवृत्तिः । औदासीन्यप्रवृत्तिशास्त्रैकसमधिगम्यस्य धर्मस्य प्रवृत्तिरेवाधिकारी न तूदासीन एवेति भावः । अथवा काम्यकर्मफलत्यागेन नित्यनैमित्तिकानुष्ठानजनितोऽपूर्वाख्यो धर्मो विरक्तस्यान्तःकरणशुद्धिं संपाद्य ततः परं कृत्यांशाभावात्स्वतः श्लथव्यापारो-

---

नश्वराद्भयं भजति प्राप्नोति । 'तद्यथेह कर्मचितो लोकः क्षीयत एवमेवामुत्र पुण्यचितो लोकः क्षीयते' इति श्रुतेः कर्मफलानित्यत्वाद्धेतोः समुज्झितस्त्यक्तः कामसमन्वयः फलसंबन्धो यस्मिंस्तादृशं सुकृतकर्म कथंच केनापि प्रकारेण न मन्यते नाङ्गीकरोति ॥ ४ ॥ काम्यं न करोति चेन्मा क्रियतां नित्याकरणे प्रत्यवायी स्यादित्याशङ्क्य, नेत्याह—किंत्विति । स्वामिनः स्वात्मनः प्रत्यक्प्रवणतामात्मैकनिष्ठतां विचिन्त्य दृष्ट्वा असौ धर्मः कृतं कृत्यं वैराग्यरूपं कार्यं येन तादृशमात्मानं मत्वा स्वयमेव शून्यव्यापारोऽभूत् । व्यापाररहितोऽभूदित्यर्थः । इदमुक्तं भवति—कर्माण्यनेन त्यज्यन्त इति न, किंतु कर्मभिरेवायं त्यज्यते इति । न नित्याकरणे प्रत्यवायः । तथोक्तम्—'न कर्माणि त्यजेद्योगी त्यज्यते कर्मभिः स्वयम् । यतो मोहफलं कर्म' इति । ननु कर्मणां स्वतन्त्रफलसाधनानां कथं मनोवैमल्यहेतुत्वं अन्यहेतोरन्यत्राहेतुत्वादिति चेत् । उच्यते । संयोगपृथक्त्वन्यायेनेत्यवेहि । 'धर्मेण पापमपनुदति' 'योगिनः कर्म कुर्वन्ति सङ्गं त्यक्त्वात्मशुद्धये' इति श्रुतिस्मृत्योरुक्तत्वात् । उक्तं चास्मद्गुरुभिः 'नित्यादिभिराराधिताराध्यपादभगवदनुग्रहादतिविमलमानसः स्वयमेवेत्थं जगत्तत्त्वमालोचयती' ति । अपरे त्वेवं वर्णयन्ति 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन' इति वाक्येनाग्निहोत्रादीनि ज्ञानाय विधीयन्ते । नच

---

१ 'कृतकृत्यमिव' इति पाठः ।

श्रद्धा—पुत्रि, तथा दुरवस्थागतेनापि महामोहहतकेन स्वामिनः प्ररोचनाय मधुमत्या विद्यया सहोपसर्गाः प्रेषिताः । अयमभिप्रायः । यद्येतेष्वासक्तः स्वामी विवेक उपनिषच्चिन्तामपि न करिष्यतीति ।

शान्तिः—ततस्ततः ।

---

ऽभूदिति भावः । अथ तानुपसर्गानिति । उपसर्गा मोहका धर्माः । एतेषां मनोमयधर्माणां को वृत्तान्तः । मनोमयधर्माणां किंचित्किंचिदवशिष्यमाणत्वादवशिष्टानां को वृत्तान्त इत्यर्थः । पुत्रीत्यादि । तथा दुरवस्थां तादृशीं दुर्गतिं गतेनापन्नेन । 'द्वितीयाश्रिता–' इत्यादिना समासः । प्ररोचनाय वञ्चनाय । मधुमत्या मधुमतीनामकया विद्ययोपासनाज्ञानेनोपसर्गा विघ्नहेतवः प्रेषिताः । स्वामी पुरुषः । आसक्तोऽनुरक्तः । विवेकश्चोपनिषदि चिन्तां न करिष्यति । तैरुपसर्गैः स्वामिसमीपं गत्वा स्वामिविषये काप्यनिर्वचनीयैन्द्रजालिकीसदृशी ऐन्द्रजालिकी । विनयादित्वात्स्वार्थे ठक् । 'टिड्ढाणञ्–' इत्यादिना ङीप् । एतदुक्तं भवति । मधुमतीनां मधुकाण्डोक्तानां पञ्चानां विद्यानां मनश्चक्षुःश्रोत्रवाग्विद्याद्युपासनानां मधुमतीशब्दवाच्यानामुपसंग्रहः । तथाहि बृहदारण्यके सप्तमो मधुकाण्डः । मधुनामेन्द्रियाधिष्ठानदेवता तदुपासनाविधायकत्वात्तदुपनिषदि मधुमतीत्युच्यते । 'मनो ब्रह्मेत्युपासीत' इति मनस उपासनया जीवात्मनो मनस्त्वसिद्धेर्मनोराज्यमप्युपासनफलम् । चक्षुरुपासनया दूरदर्शित्वम्, श्रोत्रोपासनया दूरश्रवणम्, वागुपासनया नूतनवाग्वैखरीविजृम्भणम्, पाणीन्द्रियोपासनयाङ्गुल्यग्रेण सूर्यमण्डलस्पर्शः, पादोपासनया पादेनैव समुद्रतरणं दूराद्गमनं च । एवमाद्यवशिष्टं बृहदारण्यभाष्ये मधुकाण्डे विद्यासागरीतो द्रष्टव्यम् । एतानि फलानि योगिनस्तुच्छान्येव काल्पनिकत्वात् । कल्पितत्वं देशतः कालतो वस्तुतश्चापरिच्छिन्नस्य प्रत्यगात्मनः सर्ववस्तुसान्निध्याद्देशविप्रकृष्टं कालविप्रकृष्टं नास्तीत्युपासना आस्तामत्र । फलवति 'श्रेयांसि

---

वाच्यमधिकारान्तरसंबद्धस्य न ज्ञानाधिकारसंबन्धो विनियोगविरोधादिति पशुप्रकरणे पठितात् 'खादिरो यूपो भवति' इति वाक्यात्खादिरत्वं क्रत्वर्थमपि तस्मिन्नेव प्रकरणे पठितेन 'खादिरं वीर्यकामस्य यूपं कुर्वीत' इति वाक्यान्तरेण वीर्यशेषतया विधीयते, तद्वन्न विनियोगविरोध इत्यलं विस्तरेण । सोपसर्गस्य महामोहवृत्तान्तशेषस्य शान्तिद्वारा प्रश्नमवतारयति—शान्तिरिति । निलीयाच्छाद्य । तेषामुपसर्गाणां प्ररोचनाय प्रतारणाय । मधुमत्या कयाचित्सिद्ध्या । एतेषूपसर्गेषु उपसर्गा अन्तरायाः प्रातिभादयः—'प्रातिभः श्रावणो दैवो भ्रमावर्तौ तथापरौ । पञ्चैते योगिनां योगविघ्नं कुर्वन्ति सर्वदा' इति दत्तात्रेयेणोक्तम् । कापि कमनीयरूपा ऐन्द्रजालिक्यविद्यमानार्थ-

श्रद्धा—ततस्तैर्गत्वा कापि स्वामिन्यैन्द्रजालिकी विद्योपदर्शिता तथाहि,

शब्दानेष शृणोति योजनशतादाविर्भवन्ति स्वत-
　स्तास्ता वेदपुराणभारतकथास्तर्कादयो वाङ्मयाः ।
ग्रश्नाति स्वयमिच्छया शुचिपदैः शास्त्राणि काव्यानि वा
　लोकान्भ्राम्यति पश्यति स्फुटरुचो रत्नस्थलीर्मैरवीः ॥ ५ ॥

मधुमतीं[२] च भूमिमापन्नः स्थानाभिमानिनीभिर्देवताभिरुपच्छन्द्यते

---

बहुविघ्नानि' इति श्रुतेः।'तस्मादेषां तन्मयं यदेतन्मनुष्या विद्युः' इति श्रुतेश्च योगिनां योगसिद्धिविघ्नकारीण्युपासनाकर्मफलानि । नाटके निर्वहणसंधावद्भुतरसस्य प्रतिपाद्यत्वादैन्द्रजालिकविद्यात्मकपात्रप्रवेश इति ध्येयम् । ऐन्द्रजालिकं दूरश्रवणादिकं निरूपयति—शब्दानेष शृणोतीत्यादि । एष मधुमतीविद्यामोहितः पुरुषः योजनशताच्छब्दाञ्शृणोति स्वतो निर्हेतुकम् । उपदेशं विनेत्यर्थः । तास्ता अत्यन्तप्रसिद्धाः वेदा ऋग्वेदादयः, पुराणानि ब्राह्मादीनि, भारतकथा गाथासप्तशत्युपाख्यानादयः, वाङ्मया वाक्यप्रपञ्चाः । स्वार्थे मयट् । एकाचो मयटमिच्छन्ति । स्वत एवाविर्भवन्तीत्यर्थः । स्वयं स्वतएव शुचिपदैः । सरसैः पदैरित्यर्थः । शास्त्राणि भाट्टप्राभाकराणि शास्त्रसदृशानि,काव्यानि रघुवंशादीनि । सादृश्यात्स्वयमेव निबध्नातीति । लोकानूर्ध्वाधोविभक्तान् चतुर्दश भुवनानि भ्राम्यत्यप्रतिबन्धेन भ्रमति । लोकानित्यत्र 'देशकालाध्वगन्तव्याः कर्मसंज्ञा ह्यकर्मणाम्' इति द्वितीया । भैरवीः । 'तस्येदम्' इत्यण् । 'टिड्ढाणञ्—' इति ङीप् मेरुसंबन्धिनीः स्फुटरुचो रत्नस्थलीः पश्यति च॥५॥ मधुमतीं भूमिं भूमिकां कक्षान्तरम् । मधुमत्याः कक्षान्तरत्वं पुरस्तान्निवेदयिष्यते । मधुमतीभूमिकामारूढः सन् स्थानाभिमानिनीभिर्मनश्चक्षुःश्रोत्रवागधिदेवताभिः प्रजापतिप्रभृतिभिर्भैरवादिस्थानस्थिताभिर्देवताभिरिति च गम्यते ।

---

प्रकाशरूपा । शब्दानिति । एष पुरुषो योजनानां शतं क्रोशचतुष्टयमेकं योजनं, एवं योजनशतं शब्दान् शृणोत्याकर्णयति ।अतिप्रसिद्धा अश्रुता वेदपुराणभारतकथा आविर्भवन्ति प्रकटीभवन्ति, वाङ्मयाः वाग्विकारास्तर्कादय आविर्भवन्ति स्फुरन्ति, शुचिभिर्व्याकरणशुद्धैः पदैः शास्त्राणि काव्यानि वा इच्छया स्वयं ग्रश्नाति रचयति, लोकान्भूरादीन्भ्राम्यति गच्छति, मेरोरिमा मैरव्यस्ता रत्नस्थली रत्नखचितानुपरितनभूभागान्स्फुटरुचो देदीप्यमानान्पश्यति ॥ ५ ॥ मधुमत्या चेति । मधुमत्या सिद्ध्या कल्पिता या भूमिस्तामापन्नः प्राप्तः सन् इत्यध्याहारः । स्थानाभिमानिनीभिर्देव-

---

१ 'भवन्त्यश्रुताः' इति पाठः । २ 'मधुमत्या' इति पाठः ।

भो इहोपविश्यताम् । नात्र जन्ममृत्यू । अनुपाधिरमणीयो देशः । एष त्वामुपस्थितो विविधविलासलावण्यपुण्यमयो मङ्गलार्थव्यग्रपाणिः प्रणयपेशलो विद्याधरीजनः ।

तदेहि, यतोऽत्र—

कनकसिकतिलस्थलाः स्रवन्तीः[1]
पृथुजघनाः कमलानना वरोरूः[2] ।
मरकतदलकोमलां वनाली-
र्भज निजपुण्यचितांश्च[3] सर्वभोगान् ॥ ६ ॥

शान्तिः—ततस्ततः ।

---

उपच्छन्द्यते विप्रलभ्यते । विप्रलम्भप्रकारमाह—**भो इहोपविश्यतामिति । नात्रेति ।** अत्र मेरुस्थलेषु जन्म मृत्युश्च नास्तीत्यर्थः । अनुपाधिनोपाधिराहित्येन स्वाभाव्येन रमणीयो भोगयोग्योऽयं देश इति । अत्र च एष त्वामुपस्थितो विद्याधरीजन इत्यन्वयः ॥—**कनकसिकतिलेत्यादि ।** कनकसिकता येषां सन्तीति कनकसिकतिलानि । 'देशे लुविलचौ च' इतीलच् । कनकसिकतिलानि स्थलानि पुलिनानि यासां ताः स्रवन्तीर्नदीः पृथुजघना वरोरूः कमलाननाः विद्याधरीः मरकतदलकोमलाः मरकतदलवन्माणिक्यवत्कोमला वनावलीर्भजेत्यन्वयः । किंच निजपुण्यचितान्मानसोपासनाजनितपुण्यसंपादितान्मनोरथोपस्थितानपि भजेत्य-

---

ताभिरुपच्छन्द्यते प्रलोभ्यते । प्रलोभनमेव दर्शयति—भो इहेति । अनुपाधिरमणीय-सहजसुन्दरस्त्वामुपस्थित इति । विद्याधरीजनस्त्वामुपस्थितः प्राप्तः । कीदृशो विद्याधरीजनः । विविधा नानाप्रकाराश्च ते विलासा विभ्रमाश्च नेत्रकरचरणाङ्गहावभावललितचेष्टाभेदाः, लावण्यं च वस्त्रकनकमौक्तिकाद्याभरणानुलेपनपत्रभङ्गिरचनारूपं तदेव पुण्यम् । कार्ये कारणोपचारः । तन्मयस्तत्प्रधानः । पुनः कीदृशो विद्याधरीजनः । दध्यादर्शादिमङ्गलार्थं व्यग्राः पाणयो यस्य सः । पुनः कीदृशो विद्याधरीजनः । प्रणये प्रीतौ कर्तव्यायां पेशलः चतुरः ॥ कनकेति । कनकस्य सुवर्णस्य सिकता वालुका तद्युक्तानि सुस्थलानि यासु ताः स्रवन्तीर्नदीः भज सेवय । पृथुजघनाः स्थूलनितम्बाः कमलवदनाः पद्मवदनाः घनाः निबिडा ऊरवो यासां ताः भज सेवय । मरकतो रत्नविशेषस्तस्य दलानि तद्वत्कोमला वनालीर्वनपङ्क्तीर्भज । निजेन स्वेन पुण्येन जितानर्जितान्विषयानन्दांश्च

---

१ 'सिकतसुस्थलीः' इति पाठः । २ 'घनोरूः' इति पाठः । ३ 'पुण्यजितांश्च' इति पाठः ।

श्रद्धा—पुत्रि, तदाकर्ण्य मायया श्लाघ्यमेतदित्युक्तम् । मनसा चानुमोदितम् । सङ्कल्पेन प्रोत्साहितम् । स्वामी संप्रति सन्मित्र-पथमिवापन्नः ।

शान्तिः—(सखेदम्) हा धिक् हा धिक् पुनरपि तामेव संसार-वागुरामपि पतितः स्वामी ।

श्रद्धा—न खलु न खलु ।

शान्तिः—ततस्ततः ।

श्रद्धा—ततः परिपार्श्ववर्तिना तर्केण तान्सर्वान्क्रोधावेशकषा-यितनयनमालोक्याभिहितः । स्वामिन्, किमेवमेभिर्विषयामिषग्रासगृ-ध्रुभिरास्थानिकैः पुनरपि तेष्वेव तथैव विषमविषयाङ्गारेषु निपा-त्यमानमात्मानं नावबुध्यसे । ननु भोः,

---

न्वयः ॥ ६ ॥ तत इत्यादि । मनसा चानुमोदितम् । मानसोपासनाजनितं फलं सिद्धमभूदित्यर्थः । सङ्कल्पेन प्रोत्साहितं पुनःपुनर्विकल्पो माभूदित्यर्थः । स्वामी ईश्वरः सन्मित्रपथमापन्न इव सन्मित्रबुद्धिमार्गमापन्न इव मोहवशादेतेषां विप्र-लम्भकत्वं न जानातीत्यर्थः । वागुरां जालम् । परिपार्श्ववर्तिनेत्यादि । तर्केण बुद्धिवृत्तिविशेषेण क्रोधातिशयकषायितनयनं यथा भवति तथा तान्सर्वानु-पसर्गानवलोक्य स्वामी अभिहित इत्यन्वयः । अत्र निरोधाख्यं निर्वहणसन्धेर्द्वि-तीयमङ्गम् । मधुमतीविद्यया पुरुषनिष्ठकार्यस्य प्रबोधोदयरूपस्य पुनरन्वेषणात् । यथोक्तम्—'कार्यान्वेषो निरोधः स्यात्' इति । स्वामिन्नित्यादि । आस्थानिकैर्धू-

---

भज ॥ ६ ॥ श्लाघ्यमतिसमीचीनम् । अनुमोदितमेवमेवेदं नान्यथेत्युक्तम् । प्रोत्साहितं सोद्योगं कृतम् । भवतु को विरोध इत्यङ्गीकारः संमतिः । वागुरां स्थूलरज्जुनिर्मितं जालम् । न खलु न खलु । नहि नहीत्यर्थः । परिपार्श्ववर्तिना निकटवर्तिना तर्केण सदसद्विचारणेन सर्वान्मायांमनःसंकल्पादीन्क्रोधावेशेन कोपाविर्भावेण कषायिते आ-रक्तीकृते नेत्रे यस्यां क्रियायां यथा स्यात्तथालोक्याभिहित उक्तः स्वामी । किमुक्त इत्याह—स्वामिन्निति । विषया एवामिषं मांसं तस्य ग्रासं गृध्नन्त्यभिलषन्ति ते गृध्रव-त्तैरास्थानीधूर्तकैः सभाप्रतारणाय गृहीतबकव्रतैः तेष्वेव पूर्वपरिचितेष्वेव तथैवोक्तप्रका-

---

१ 'संमतिपथमिवापन्नः' इति पाठः । २ 'आस्थानीधूर्तकैः' इति पाठः ।

भवसागरतारणाय यासौ नचिराद्योगतरिस्त्वयाश्रिता ।
अधुना परिमुच्य तां मदात्कथमङ्गारनदीं विगाहसे ॥ ७ ॥

शान्तिः—ततस्ततः ।

श्रद्धा—ततस्तद्वचनमाकर्ण्य स्वस्ति विषयेभ्य इत्यभिधायावधीरिता मधुमती ।

शान्तिः—साधु साधु । अथ क्व प्रस्थितास्ति भवती ।

श्रद्धा—आदिष्टाहं स्वामिना यथा विवेकं द्रष्टुमिच्छामि ।

शान्तिः—तत्त्वरतां भगवतीति ।

श्रद्धा—तदहं राजसन्निधिं प्रस्थिता ।

शान्तिः—अहमपि महाराजेनोपनिषदमानेतुमादिष्टा । तद्भवतु स्वनियोगं संपादयावः ।

(इति निष्क्रान्ते ।)

---

तैकैः आस्थानपण्डितैर्वञ्चकैरित्यर्थः ॥–भवसागरेति । भवसागरं तरति नौका । औणादिक इप्रत्ययः । अतएव अण्णन्तत्वान्न सुपो लुक् (?) । तां तरिं परिमुच्य विहायेत्यर्थः । मदादज्ञानात् । अयमर्थः । सागरतरणोपाये विद्यमाने स्वल्पायां नद्यां किमर्थं मज्जसीत्यर्थः । तथाच निरतिशयसुखरूपब्रह्मावाप्तिसाधनवैराग्यं विहाय घृतसंमिश्रमधुसदृशविषयानुरक्तिं पुनरालम्बसे चेदात्महानिः स्यादिति व्यातर्को दर्शितः ॥ ७ ॥ स्वस्ति विषयेभ्य इति सोल्लुण्ठवचनम् । 'नमःस्वस्ति–' इत्यादिना चतुर्थी । अवधीरिता मधुमतीत्यनेनान्वेषितकार्यस्य निबन्धनास्थापनाद्ग्रथनं नाम निर्वहणसन्धेस्तृतीयमङ्गम् । तल्लक्षणं तु 'ग्रथनं तन्निबन्धनम्' इति । साधु साधु । अथेत्यादि । अथ तदनन्तरम् आस्तां तावदयं प्रसङ्ग इत्यर्थः । अत्र वक्ष्यमाणादेशप्रकारप्रदर्शनपरो यथाशब्द एवंप्रकारमाह । विवेकमित्यादिना स्वामिवाक्यानुवादोऽयम् । तत्तस्मात्कारणादहं श्रद्धा प्रस्थिता

---

रेण विषमा दुःसहा विषया एवाङ्गारास्तेषु नावबुध्यसे न जानासि । भवेति । भव एव संसार एव सागरः समुद्रस्तस्मात्तारणाय पारगमनाय योग एव तरिर्नौका त्वयाश्रिता प्राप्ता । अधुना इदानीं तां नौकां नचिरात् शीघ्रमेव मदाद्योगविघ्नभूताहंकारात्परिमुच्य त्यक्त्वा अङ्गारनदीं विषमविषयप्रवाहां कथं विगाहसे आलोडयसि ॥ ७ ॥ तद्वचनमाकर्ण्य तद्वचनं श्रुत्वावधीरिता तिरस्कृता । स्वामिना पुरुषेण । स्वामिनियोगं स्वामिनो विवेकस्य नियोगमाज्ञां संपादयावः करिष्याव इति निष्क्रान्ते । शान्तिश्रद्धे इत्यर्थात् ॥

---

१ 'स्वामिनियोगं' इति पाठः ।

प्रवेशकः ।

(ततः प्रविशति पुरुषः ।)

पुरुषः—(विचिन्त्य । सहर्षम् ) अहो माहात्म्यं देव्या विष्णुभक्तेः । यत्प्रसादान्मया,

तीर्णाः क्लेशमहोर्मयः परिहृता भीमा ममत्वभ्रमाः
शान्ता मित्रकलत्रबन्धुमकरग्राहग्रहग्रन्थयः ।
क्रोधौर्वाग्निरपाकृतो विघटितास्तृष्णालताविस्तराः
पारेतीरमवाप्तकल्पमधुना संसारवारांनिधेः ॥ ८ ॥

---

प्रयाता । अहमित्यादिना शान्तिः स्वागमनप्रयोजनमाह । स्वनियोगमिति स्वयो-रुभयोर्नियोगस्तम् । प्रवेशकस्वरूपं व्याख्यातं प्राक् । ततः प्रविशतीत्यादिना प्रवेश-केन पात्रप्रवेशः । पुरुष इत्यारभ्य मयेत्यन्तं सुगमम् ॥—तीर्णा इति । क्लेशा अविद्यास्मितादयस्त एव महोर्मयः कल्लोलास्तीर्णा उत्तीर्णाः । भीमा भयंकरा ममत्वभ्रमा ममतावर्ताः परिहृता लङ्घिताः । मित्राणि सुहृदः, कलत्राणि भार्याः, बन्धवः पुत्रभ्रातृपितृव्यमातुलादयस्त एव मकरा यादोविशेषाः, ग्राहा ग्रहाः तदितरजलचराः कुलीरादयस्त एव ग्रन्थयः । ग्रन्थिभूता ग्राहा इति यावत् । क्रोध एवौर्वाग्निर्वडवानलोऽपाकृत उल्लङ्घितः । विघटिता उन्मोचितास्तृष्णालता-विस्तराः तृष्णा अशनायापिपासादयस्ता एव लताविस्तराः । अत्र यद्यपि 'प्रथने वावशब्दे' इति शब्दप्रपञ्चे विस्तरशब्दो निष्पन्नस्तथाप्यत्र लक्षणया अर्थप्रपञ्चप-रत्वान्न दोषः । पारेतीरं परतटम् । 'पारावारे परार्वाची तीरे' इत्यमरः । अधुना संसार एव वारांनिधिः समुद्रः । 'तत्पुरुषे कृति बहुलम्' इत्यलुक् । संसारवारां-निधेरित्यत्र सावयवरूपकम् । अवाप्तकल्पम् । ईषदवाप्तमित्यर्थः । अनेन जी-

---

तीर्णा इति । संसार एव वारां जलानां निधिः समुद्रस्तस्य पारे परपारे तीरं मया-धुना इदानीमवाप्तकल्पं प्राप्तप्रायम् । मयेति सर्वत्र योजनीयम् । अनेकानर्थव्याप्तस्य संसारनीरनिधेः कथं पारप्राप्तिरित्यत आह—तीर्णाः क्लेशमहोर्मय इति । क्लेशा अवि-द्यास्मितादयः पञ्च त एव महान्त ऊर्मयो लहर्यस्तीर्णाः । भीमास्त्रासहेतवः ममत्वमेव भ्रमा आवर्ताः परिहृता वञ्चिताः । मित्रं च सखा कलत्रं च स्त्री बन्धवश्च सुहृदस्त एव मकरा मत्स्याः ग्राहाः शिशुमारास्तेषां ग्रहो ग्रहणं धारणं तत्पूर्विकाः ग्रस्तयो ग्रासाः शान्ताः प्रशमिताः । क्रोध एवौर्वाग्निर्वडवानलोऽपाकृतस्तिरस्कृतः । तृष्णैव लताग्रन्थयो विघटिता वियोजिताः । श्रीमद्भगवद्भक्तेर्न किमपि दुर्लभमिति भावः॥८॥

---

१. 'ग्रहग्रस्तयः' इति पाठः । २. 'लताग्रन्थयः' इति पाठः ।

(ततः प्रविशत्युपनिषच्छान्तिश्च ।)

उपनिषत्—सखि, कथं तथा निरनुक्रोशस्य स्वामिनो मुखमालोकयिष्यामि । येनाहमितरजनयोषेव सुचिरमेकाकिनी परित्यक्ता ।

शान्तिः—देवि, कथं तथाविधविपत्पतितो देव उपालभ्यते ।

उपनिषत्—सखि, न दृष्टा त्वया मे तादृशी दशा । येनैवं ब्रवीषि । शृणु—

बाह्वोर्भग्ना दलितमणयः श्रेणयः कङ्कणानां
चूडारत्नग्रहनिकृतिभिर्दूषितः केशपाशः ।

---

वन्मुक्तिनैकव्यमुक्तम् । अत्रानुभूतकथनान्निर्णयो नाम निर्वहणसन्धेश्चतुर्थमङ्गम् । तदुक्तम् 'अनुभूतार्थकथनं निर्णयः परिकीर्त्यते' इति ॥ ८ ॥ **ततः प्रविशतीति** । निरनुक्रोशस्य निर्दयस्य । 'कृपा दयानुकम्पा स्यादनुक्रोशोऽप्यथो हसः' इत्यमरः । स्वामिनो मुखं कथमवलोकयिष्यामि । येनैवं ब्रवीषीति । येन कारणेन मदीया एतादृशी दशा त्वया न दृष्टा तेन कारणेन कथं तथा विपत्पतितो देव उपालभ्यत इत्येवं ब्रवीषीत्यर्थः । स्वकीयां दुर्दशां कथयति—शृणु । **बाह्वोरिति** । बाह्वोर्हस्तयोर्दलितमणयः । दलिताः शकलीकृता मणय इन्द्रनीलादयो यासां ताः कङ्कणानां श्रेणयो भग्ना भञ्जिताः । चूडारत्नस्य शिरोमाणिक्यस्य ग्रहा ग्रहणानि त एव निकृतयस्तिरस्कारास्ताभिर्दुर्विदग्धैः केशपाशो दूषितोऽपात्रीकृतः । हतविधिबलात् । विधिर्दैवम् । दुष्टविधिवशादित्यर्थः । दुरितैः पूर्वजन्मसंचितैर्दूरसंस्थे विवेके पत्यौ अहं दासीकर्तुं कैः कैर्नेहिता । सर्वैरीहितेत्यर्थः । बाह्वोरित्यनेनाङ्गद्वयप्रतीतेर्मननिदिध्यासनयोरङ्गयोर्मध्ये मननरूपस्याङ्गस्य कङ्कणश्रेणय उपक्रमोपसंहारादीनि तात्पर्यलिङ्गानि प्रतीयन्ते । दलितमणय इत्यनेन तदुपरि मणिभूतध्यानधारणासमाधिरूपनिदिध्यासनं प्रतीयते । तदयमर्थः । पूर्वमीमांसादीनां

---

तत इति । उपनिषत् । निरनुक्रोशस्य निर्गतोऽनुक्रोशो दया यस्मात् । निर्दयस्येत्यर्थः । मुखमालोकयिष्यामीत्यनेन मानिनीत्वमादर्शितम् । देवीति संबोधनेन त्वमतिसाध्व्यसि, त्वयीदमस्मिन्समयेऽनुचितमिति द्योतितम् । किंचित्कोपं परिहाय वदति सखि, न दृष्टा त्वयेति । तां दशामेव श्रावयति—शृणु । बाह्वोरिति । अहं कैः कैर्दुरितैः पापैर्दुर्विदग्धैर्दुष्टबुद्धिभिर्हतं नष्टं यद्विधिबलं दैवबलं तस्मान्निर्भाग्यत्वात्सपदि तत्कालमेव दासीकर्तुं स्वाधीनां संपादयितुं नेहिता न तर्किता । अपि तु सर्वैरपीत्यर्थः । निर्भाग्यत्वे हेतुः । विवेके दूरस्थे दूरंगते सति । दासीत्वसंपादकमाह—बाह्वोरिति ।

कैः कैर्नाहं हतविधिबलादीहिता दुर्विदग्धै-
र्दासीकर्तुं सपदि दुरितैर्दूरसंस्थेऽविवेके ॥ ९ ॥

शान्तिः—सर्वमेतन्महामोहस्य दुर्विलसितम् । नात्र देवस्यापराधः । तेन मोहेन मनः कामादिद्वारेण प्रवोधयता त्वत्तो दूरीकृतो विवेकः । एतदेव कुलस्त्रीणां नैसर्गिकं शीलं यद्विपन्नमग्नस्य स्वामिनः समयप्रतीक्षणमिति । तदेहि दर्शनप्रियालापेन संभावय देवम् । संप्रत्यपहता विद्विषः । संपूर्णास्ते मनोरथाः ।

---

वेदान्तव्यतिरिक्तशास्त्राणामपि मननिदिध्यासनरूपमङ्गद्वयमङ्गीकृतं किंतु मननभेदमात्रं चेति तदलंकारभूतम् । उपक्रमोपसंहारात्मकं तात्पर्यलिङ्गमुत्सृज्य अन्यथाविचारः कङ्कणभङ्गः, जीवब्रह्मैक्यानुसन्धानरूपनिदिध्यासनव्यतिरेकेण अन्यथानिदिध्यासनस्याङ्गमणिलमिति ध्येयम् । यद्यपि श्रवणविधिं प्रति मनननिदिध्यासनयोरङ्गत्वं नोपनिषदस्तथाप्यभेदोपचारात् उपनिषदं प्रत्यङ्गत्वं विधिद्वयस्येति । बाह्वोरित्युपनिषद्विशेषणस्योक्तिः सामञ्जस्यमिति ध्येयम् । अत्र चूडारत्नमात्मस्वरूपं तस्य ग्रहो ग्रहणं स्वीकारः तत्र निकृतिभिः विपरीतप्रकारैः केशपाशो वेदान्तभागो दूषितः । तत्र हेतुमाह—हतविधिबलादिति । द्रष्टव्य इति दर्शनविधिबलाद्दर्शनविधेर्हतकत्वं परं व्यामोहकत्वेन । तच्च तव्यप्रत्ययान्ततया । अतो ज्ञानविधिशेषतया दासी चिकीर्षितेत्यर्थः । दासीकर्तुमिति च्विप्रत्ययान्तः । दूरसंस्थेऽविवेके । अत्र अविवेके इति छेदः । अविवेकत्वादमीमांसकत्वादिति भावः ॥ ९ ॥ सर्वमेतदित्यादि मनोरथा इत्यन्तं सुगमम् । अत्र परिभाषाख्यं निर्वहणसन्धेः पञ्चममङ्गम् । उपनिषद्देवीश्रद्धयोर्मिथोजल्पनात् ।

---

बाह्वोर्हस्तयोर्दलिताश्चूर्णिता मणयो यासां ताः कङ्कणानां हस्तभूषणानां श्रेणयः पङ्क्तयो भग्नाः । चूडारत्नस्य मस्तकमणेर्ग्रहणं तेन निकृतयो न्यक्काराः । केशग्रहणकर्षणरूपास्तिरस्कारा इति यावत् । ताभिर्दूषितस्त्रुटितः केशपाशो धम्मिल्लः । एवं सति इदं फलितम् । विवेकं विना न्यायमात्रदग्धचित्तैरुपक्रमोपसंहाराभ्यां श्रुतितात्पर्यानभिज्ञैरुपनिषद उपप्लाव्यन्त एव ॥ ९ ॥ दुर्विलसितं दुश्चेष्टितम् । अपराधाभावं व्यनक्ति—तेन हीति । तेन हि । हिरवधारणे । महामोहेनैव कामादिद्वारेण मनः प्रवोधयता विवेको दूरीकृत इति योजना । नैसर्गिकं निरुपाधिकम् । स्वाभाविकमिति यावत् । समयप्रतीक्षणमभ्युदयकालावेक्षणम् । कुलटास्त्वन्यमाश्रयन्ते । स्वामिनो विपदमालोक्य न समयं प्रतीक्षन्त इति भावः । संभावय संमानय । अ-

**उपनिषत्**—सखि, संप्रत्यागच्छन्ती वत्सया गीतयाऽहं रहस्युक्ता यथा भर्ता स्वामी च पुरुषस्त्वया यथाप्रश्नमुत्तरेण संभावयितव्यः। तथा प्रबोधोत्पत्तिर्भविष्यतीति तत्कथं गुरूणामध्यक्षं धाष्ट्यमवलम्बिष्ये[1]।

**शान्तिः**—देवि, अविचारणीयमेतद्वाक्यं भगवत्या गीतायाः, अयमेव चार्थो भगवत्या विष्णुभक्त्या विवेकस्वामिनो निरुक्तः। तदेहि। संभावय दर्शनेन भर्तारमादिपुरुषं च।

**उपनिषत्**—यथा वदति प्रियसखी। (इति परिक्रामति।)

(ततः प्रविशति राजा श्रद्धा च।)

**राजा**—अयि[2] वत्से, द्रक्ष्यति शान्तिः प्रियामुपनिषदम्।

**श्रद्धा**—देव, गृहीतोपदेशैव[3] शान्तिर्गता कथं तां न द्रक्ष्यति।

**राजा**—कथमिव।

**श्रद्धा**—देव, प्रागेव कथितमेतद्देव्या विष्णुभक्त्याऽऽसीत्, यथा मन्दराभिधाने शैले विष्णोरायतने देव्यां गीतायां तर्कविद्याभयादनुप्रविष्टेति।

---

तदुक्तम् 'परिभाषा मिथो जल्पः' इति। **सखीति**। वत्सया पुत्रिकया गीतया भगवद्गीतया। भगवद्गीताया उपनिषत्पुत्रिकात्वं सर्वोपनिषत्सकाशादुत्पत्तेः। **भर्तेत्यादि**। भर्ता स्वामी, पुरुषश्च युवयोः स्वामी, अतश्च यथाप्रश्नं प्रश्नमनतिक्रम्योत्तरं दातव्यं नतु प्रश्नविरुद्धमिति भावः। अध्यक्षं अधिगतमक्षमध्यक्षम्। पुरत इति यावत्। तत् कथं तादृग्विनयवती परोक्षार्थबोधजनकस्वभावाहं पुरुषविषये अपरोक्षबोधनधाष्टर्यं कथमवलम्बिष्य इति हृद्गतोऽर्थः। देवीत्यारभ्य ततः प्रविशतीत्यन्तं सुगमम्। अत्र न संदेहः कर्तव्य इत्यर्थः। विचार्यमाणे प्रमेयस्वाभाव्याच्छब्दस्यापरोक्षप्रमितिजनकत्वमिति हृद्गतोऽर्थः। **राजेत्यादि**। हे वत्से श्रद्धे, शान्तिः प्रियामुपनिषदमपि द्रक्ष्यति। अपिशब्दः प्रश्ने। द्रक्ष्यति

---

पद्दता मारिता। उपनिषदर्थप्रतिपादकतया गीतां विशिनष्टि—वत्सयेति। रहसि निर्जने देशे गुरूणां विवेकप्रवर्तकानां श्वशुरादीनामध्यक्षमग्रतः। विवेकस्वामिन इति कर्मणि षष्ठी। विवेकरूपं स्वामिनं प्रति निरुक्तः। उक्त इत्यर्थः। परिक्रामति। भ्रमरिकां कृत्वा गच्छतीत्यर्थः। अयि वत्से श्रद्धे, गृहीतोपदेशैव गृहीताज्ञैव। कथमि-

---

१. 'धाष्टर्यं करिष्यामि' इति पाठः। २. 'अपि' इति पाठः। ३. 'तोदेशैव'।

राजा—कथं पुनस्तर्कविद्याया भयम् ।

श्रद्धा—देव, ईममर्थं सैव प्रस्तोष्यति । तदागच्छतु देवः । एष स्वामी त्वदागमनमेव ध्यायन्विविक्ते वर्तते ।

राजा—(उपसृत्य ।) स्वामिन्, अभिवादये ।

पुरुषः—वत्स, प्रक्रमविरुद्धोऽयं समुदाचारः । यतो ज्ञानवृद्धतया भवानेवास्माकमुपदेशदानेन पितृभावमापन्नः । कुतः—

पुरा हि धर्माध्वनि नष्टसंज्ञा
　देवास्तमर्थं तनयानपृच्छन् ।
ज्ञानेन सम्यक्परिगृह्य चैतान्
　हे पुत्रका संश्रृणुतेत्यवोचन् ॥ १० ॥

तद्भवान्पितृत्वेनास्मासु वर्ततामित्येष एव धर्मः ।

---

किमित्यर्थः । देव गृहीतोद्देशैव ज्ञातप्रदेशा एव कथं न तां द्रक्ष्यति । द्रक्ष्यत एवेत्यर्थः । राजेत्यादि प्रविष्टेत्यन्तं सुगमम् । प्रविष्टेत्यनेन तत्रत्यानां गीता नोपनिषदित्यर्थः । कथं पुनरिति । सैव प्रस्तोष्यति सैवोपनिषद्देवी भीतैव जानाति भयहेतुमिति भावः । तवागमनमनुध्यायन्प्रतीक्ष्यमाणः । लक्षणे शतृप्रत्ययः । उपसृत्येत्यादि । प्रक्रमविरुद्धोऽयमिति पूज्यापूज्यव्यतिक्रमोऽभूदित्यर्थः । समुदाचारः सदाचारः । उपदेशदानेन पितृत्वमापन्न इति ज्ञानोपदेष्टापि पितैव । तत्र हरिवंशपुराणं संवादयति—पुरा हि धर्माध्वनीति । प्रजापतिर्ब्रह्मा देवान् सृष्ट्वा केनचिन्निमित्तेनाज्ञानिनो भूयास्तेति तान्शशाप । तदनन्तरंताननुगृह्णन् देवानामन्योन्यं पितृत्वं पुत्रत्वं च ददावित्यादि कथानुसंधेया।अत्र वाक्यार्थस्य

---

वेति । कुत्र कुत्रेत्यर्थः । अनुप्रविष्टान्तर्गता । तर्कविद्याया इति पञ्चमी । प्रस्तोष्यति वर्णयिष्यति । कथयिष्यतीति यावत् । तदागच्छतु देवो विवेकः । पुरुषनिकटमिति शेषः । एष स्वामी पुरुषः। विविक्त एकान्ते । प्रक्रमविरुद्ध उपक्रमविरुद्धः । समुदाचारः शिष्टाचारः । पितृभावं पितृत्वमापन्नः प्राप्तः । पुरा हीति । देवा भूदेवाः पुरा पूर्वकाले । हि निश्चितं । धर्माध्वनि धर्ममार्गे नष्टसंज्ञाः लुप्तबोधास्तमर्थं तनयान्पुत्रानपृच्छन्। ते च पुत्रा एतान्प्रश्नकर्तृन्ज्ञानेन हेतुना परिगृह्य स्वीकृत्य संशृणुत सम्यगधिगच्छतेत्यवोचन्नवदन् । तथोक्तं मनुना—‘अध्यापयामास पितॄन् शिशुराङ्गिरसः कविः । पुत्रका इति होवाच ज्ञानेन परिगृह्य तान्’ इति। एतेनान्यसंबन्धापेक्षया ज्ञानसंबन्धस्य महत्त्वं

---

१ ‘तमर्थं’ इति पाठः ।

**शान्तिः**—एष देवि, देवेन सह स्वामी विविक्तो वर्तते। तदुपसर्पतु देवी।

**उपनिषत्**—(उपसर्पति।)

**शान्तिः**—स्वामिन्, एषोपनिषद्देवी पादवन्दनायागता।

**पुरुषः**—न खलु न खलु। यतो मातेयमस्माकं तत्त्वावबोधोदयेन। तदेषैवास्माकं नमस्या। अथवा

अनुग्रहविधौ देव्या मातुश्च महदन्तरम्।
माता गाढं निबध्नाति बन्धं देवी निकृन्तति॥ ११॥

**उपनिषत्**—(विवेकमालोक्य नमस्कृत्य दूरे समुपविशति।)

**पुरुषः**—अम्ब, कथ्यताम्। क्व भवत्या नीता एते दिवसाः।

**उपनिषत्**—स्वामिन्,

नीतान्यमूनि मठचत्वरशून्यदेवा-
गारेषु मुर्खमूखरैः सह वासराणि।

**पुरुषः**—अथ ते जानन्ति किमपि भवत्यास्तत्त्वम्।

**उपनिषत्**—न खलु। किंतु

---

कर्मत्वेन विवक्षितत्वात्संशृणुतेति परस्मैपदम्॥ १०॥ तद्भवानित्यारभ्य आगते-त्यन्तं सुगमम्। न **खल्विति**। द्विरुक्तिराभीक्ष्ण्ये। यत इत्यारभ्य निकृन्ततीत्यन्तं सुगमम्॥ ११॥ अत्र पुरुषस्योपनिषद्देव्यामत्यन्तप्रसादप्रतिपादनात्पर्युपासनाख्यं निर्वहणसन्धेः षष्ठमङ्गम्। 'प्रसादः पर्युपासनम्' इति लक्षणात्। नमस्कृत्येत्यारभ्य वासराणीत्यन्तं सुगमम्। अथ ते जानन्तीत्यादि। अथेति प्रश्ने। किंत्वित्यादि। ते तार्किकादयः स्वेच्छया स्वमत्यनुसारेण मम गिरामुप-

---

दर्शितम्॥ १०॥ ज्ञानसंबन्धापितृत्वमेव त्वय्युचितमित्याह—तद्भवानिति। देवेन विवेकेन। स्वामी पुरुषः। अनुग्रहेति। अनुग्रहविधौ अनुग्रहे कर्तव्ये देव्या उपनिषदः मातुश्च महदन्तरं महान्भेदः। अन्तरमेवाह—मातेति। निबध्नाति संसारे प्रक्षिपति। देवी उपनिषत् बन्धं संसारं निकृन्तति छिनत्ति॥ ११॥ क्व कुत्र।—नीतानीति। अमून्येतानि वासराणि दिनानि, मठा अवधूतनिवासस्थानानि, चत्वरा नानाविधजनोपवेशस्थानानि, शून्यदेवागाराणि शून्यदेवालयानि एषु मूर्खाश्च ते मुखराश्च वाचालास्तैः सह नीतान्यतिवाहितानि। तत्त्वं महिमानम्। न खल्विति। जानन्तीति शेषः। तर्हि कथमतिवाहितानीति पृच्छति—किंत्विति।

ते स्वेच्छया मम गिरां द्रविडाङ्गनोक्त-
वाचामिवार्थमविचार्य विकल्पयन्ति ॥ १२॥
तेन केवलं तेषां परार्थग्रहणप्रयोजनमेव मद्विचारणम्।
पुरुष:—ततस्ततः ।
उपनिषत्—ततः कदाचित् ।
कृष्णाजिनाग्निसमिदाज्यजुहूस्रुवादि-
पात्रैस्तथेष्टिपशुसोममुखैर्मखैश्च ।
दृष्टा मया परिवृताखिलकर्मकाण्ड-
व्यादिष्टपद्धतिरथाध्वनि यज्ञविद्या ॥ १३ ॥
पुरुष:—ततस्ततः ।
उपनिषत्—ततो मया चिन्तितम् । अपि नामैषा पुस्तक-

---

निषदां द्रविडाङ्गनाया वाचामिवार्थमविचार्य वृत्तमज्ञात्वा विकल्पयन्ति । यथा द्राविडभाषामजानाना आन्ध्रादयो द्राविडभाषां श्रुत्वा विकल्पान्कुर्वन्ति तद्वन्मूर्खमुखरा अपि । मूर्खा बालिशाः, मुखरा अप्रियंवदाः । विशेषणसमासः । मद्वाचि विकल्पान्कुर्वन्तीत्यर्थः । तेषामभिप्रायः । परार्थग्रहणैकप्रयोजनमेवेति मम निश्चय इत्यर्थः ॥ १२ ॥ अतःपरं पृच्छति ततस्तत इत्यारभ्य परिवृतेत्यन्तं सुगमम् । अखिलेषु कर्मकाण्डेषु व्यादिष्टानामुपदिष्टानामर्थानां प्रदर्शकत्वात्पद्धतिरिव पद्धतिर्य-

---

उत्तरत्वेनोत्तरार्धमवतारयति पूर्वश्लोकस्य—ते स्वेच्छयेति । ते मूर्खमुखराः स्वेच्छया गुरूपसत्तिं विना मम गिरां वाचामर्थमविचार्य विकल्पयन्ति विशेषेण कल्पयन्ति । तत्र दृष्टान्तः । द्रविडा द्रविडदेशस्थाः पुरुषास्तेषामङ्गनाः स्त्रियस्ताभिरुक्ता वाचस्तासामिव । द्रविडस्त्रियः पुरुषापेक्षयाऽस्पष्टवाचो भवन्तीति ता एव दृष्टान्तिताः ॥ १२ ॥ ननु तर्हि तेषां बहिर्मुखानामुपनिषदर्थविचारो व्यर्थ इत्याशयेनाह—तेनेति । तेषां बहिर्मुखानां मद्विचारणं मदर्थविचारणं परेषामर्थो धनं तस्य ग्रहणं तदेव प्रयोजनं परधनग्रहणार्थमित्यर्थः । पुनरप्यागच्छन्त्या कुत्रचिन्मया कानिचिद्वास्तराण्यतिक्रमणीयानीति मनसि विचार्य यज्ञविद्यासमीपमागतमित्याह—कृष्णाजिनेति । अथानन्तरं मयाध्वनि मार्गे यज्ञविद्या दृष्टा । कीदृशी यज्ञविद्या । कृष्णाजिनं कृष्णमृगचर्म, अग्नयो गार्हपत्यादयः, समिधः, आज्यं घृतम्, जुहूः, स्रुवः, आदिपदात् उपभृत् ध्रुवा इत्यादीनि पात्राणि तैस्तथा इष्टिर्दर्शपूर्णमासेष्टिः, पशुः निरूढपशुः,

---

१. 'किल' इति पाठः ।

भारवाहिनी मे ज्ञास्यति तत्त्वम् । अत एवास्याः सन्निधौ कानिचिद्वासराणि नयामि ।

**पुरुषः**—ततस्ततः ।

**उपनिषत्**—ततस्तामहमुपस्थिता । तया चाहमुक्तास्मि । भद्रे, किं ते समीहितमिति । ततो मयोक्तम् । आर्ये, अनाथास्मि त्वयि निवस्तुमिच्छामीति ।

**पुरुषः**—ततस्ततः ।

**उपनिषत्**—ततो मयोक्तम् ।

यस्माद्विश्वमुदेति यत्र रमते यस्मिन्पुनर्लीयते
भासा यस्य जगद्विभाति सहजानन्दोज्ज्वलं यन्महः ।
शान्तं शाश्वतमक्रियं यमपुनर्भावाय भूतेश्वरं
द्वैतध्वान्तमपास्य यान्ति कृतिनः प्रस्तौमि तं पूरुषम् ॥१४॥

---

ज्ञविद्यां कल्पसूत्रं अध्वनि मार्गे मया दृष्टा ॥ १३ ॥ अपि नामैषेत्यत्र अपिः संभावनायाम् । एषा यज्ञविद्याऽनेकेषां पुस्तकानां भारस्तान्वहति तद्वहनशीला । 'सुप्यजातौ णिनिस्ताच्छील्ये' इति णिनिः । अत इत्यारभ्य मयोक्तमित्यन्तं सुगमम् ॥ **यस्मादिति** । यस्माद्विश्वमित्यादि पुनर्लीयत इत्यन्तेन 'जन्माद्यस्य यतः' इति सूत्रार्थ उपवर्णितः । भासा यस्येत्यादिना 'तमेव भान्तमनु भाति सर्वं तस्य भासा सर्वमिदं विभाति' इति श्रुत्यर्थ उपवर्णितः । सहजानन्दोज्ज्वलं यन्मह इत्यनेन स्वरूपमुक्तम् । शान्तमुदासीनम् । अक्रियं निर्विकारम् । शाश्वतं नित्यम् । अपुनर्भावाय मुक्तये । भूतेश्वरं जगन्नियन्तारम् । द्वैतध्वान्तमपास्य द्वितैव द्वैतं भेदस्तन्निदानं ध्वान्तमविद्या तदपास्य निरस्य कृतमेभिः । कृतिनः

---

सोमोऽग्निष्टोमो मुखमाद्यो येषां तादृशा ये मखा यागास्तैः किल निश्चयेन परिवृता व्याप्ता । पुनः कीदृशी यज्ञविद्या । कर्मकाण्डे व्यादिष्टोपदर्शिता पद्धतिरितिकर्तव्यताक्रमो यस्याः सा ॥ १३ ॥ चिन्तितं विचारितम् । किं तदाह—अपीति । एषा यज्ञविद्या । नयामि परिपालयामि । उपस्थिता प्राप्ता । समीहितमीप्सितं त्वयि त्वत्समीपे किं ते कर्मेति । ते तव किं कर्म कार्यमित्यर्थः । किमुक्तमित्याह—यस्मादिति । तं पुरुषमात्मानम् । अहमित्युत्तमपुरुषसंबन्धाल्लभ्यते । प्रस्तौमि निरूपयामि । तं कम् । यस्माद्विश्वं जगदुदेत्युत्पद्यते, यत्र यस्मिन्नात्मा रमते संतुष्टस्तिष्ठति, यस्मिन् पुनरन्ते लीयते लयं प्राप्नोति, यस्य भासा ज्योतिषा जगद्विभाति प्रकाशते, 'यस्य भासा सर्वमिदं विभाति' इति श्रुतेः । यन्महो यस्य तेजः सहजानन्दोज्ज्वलं सह-

ततस्तयोक्तम्—

पुमानकर्ता कथमीश्वरो भवेत्
क्रिया भवोच्छेदकरी न वस्तुधीः ।

---

'इष्टादिभ्यश्च' इति इनिः । कृतकृत्या योगेश्वरा योगिनो ये पुरुषं यान्ति यदैक्यं लभन्ते तं प्रस्तौमीत्यन्वयः ॥ १४ ॥ **पुमानकर्तेत्यादि** । पुमानात्मा अकर्ता कर्तृत्वायोग्यश्चेदीश्वरः कथं भवेत् जगत्सर्जने अधिकारी कथं भवेत् । अयमर्थः । यस्यैश्वर्यं ममेदमिति मादर्थ्यं ज्ञानमस्ति तस्येदं करिष्य इति कर्तृत्वधीर्नियता । कर्तृत्वाभावे ऐश्वर्यमपि न स्यादित्यर्थः । अतो वेदान्ते ईश्वरः सन् कर्ता न भवतीति भावः । किंच भवोच्छेदकरी क्रियैव न तु स्वरूपज्ञानमित्यर्थः । तदुक्तं भगवता धूर्तस्वामिना—'पञ्चहोतारं चाग्नीध्रे स्वर्गकामः स जुहुयात्' इति । एतत्सूत्रव्याख्याने यः स्वर्गकामः स्यात् स पञ्चहोतारं पुरा प्रातरनुवाकादाग्नीध्रे जुहुयादिति स्वर्गशब्दस्यापरिमितनिःश्रेयसरूपमोक्षवाचित्वात् 'संवत्सरः सुवर्गो लोकः' इति कालात्मकब्रह्मस्वरूपानन्दपरत्वान्मोक्षार्थं च सर्वदा यत्नः कार्य इति रामाण्डारभाष्ये 'अथातो दर्शपूर्णमासौ' इत्येतद्व्याख्याने दर्शपूर्णमासयोः परमामेव काष्ठां गच्छतीत्यपवर्गार्थत्वात् । 'स्वर्गकामो दर्शपूर्णमासाभ्याम्' इत्यादिषु स्वर्गशब्दस्यापरिमितनिःश्रेयसस्वरूपमोक्षपरत्वेनाङ्गीकारादिति 'कर्मणैव हि संसिद्धिमास्थिता जनकादयः' इत्यादिस्मृतिषु च कर्मसाध्यत्वेनैव मोक्षस्य प्रतीतेः । किंच जीवन्मुक्तिः कैवल्यमुक्तिरपि कर्मसाध्यैव । तथाच श्रूयते—'अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति' इति अक्षय्यं सुकृतं नित्यसुखं मोक्षरूपं तज्जीवन्मुक्तौ कैवल्यमुक्तौ च समम् । तथा च चातुर्मास्ये श्रूयते—'प्रचातुर्मास्य याजी' इत्यारभ्य 'प्रजापतिर्वावैषः' इत्यन्ता श्रुतिः । अस्याः श्रुतेरर्थः । प्रचातु

---

जायते इति सहजः स्वाभाविक आनन्दः सुखं तद्रूप उज्ज्वलः प्रकाशो यस्य । नित्यसुखप्रकाशाभिन्न इत्यर्थः । शान्तं विकारशून्यं, शाश्वतमविनाशि, अक्रियं क्रियारहितम् । पुनस्तं कम् । कृतिनः कुशला यं भूतेश्वरं भूतानामीश्वरं नियन्तारमात्मानमपुनर्भवाय संसारविच्छित्तये यान्ति प्राप्नुवन्ति । किं कृत्वा । द्वैतं भेदः स एव ध्वान्तं तमःअपास्य तिरस्कृत्य ॥१४॥ यज्ञविद्या स्वसिद्धान्तमाविष्करोति—पुमानिति । पुमानात्मा अकर्ता कर्तृत्वशून्यः कथमीश्वरो भवेत् । न कथमपीत्यर्थः । तव मते ईश्वरत्वं कर्तृत्वाद्युपाधिविशिष्टं कर्तृत्वाद्यभावे तदेव न सिद्ध्यतीति भावः । ननु तर्हि भूतेश्वराराधनं विना कथं संसारनिरासस्तत्राह । क्रिया ज्योतिष्टोमादिरूपा सैव भवोच्छेदकरी संसारनाशकरी । 'अपाम सोमममृता अभूम' इत्यादिश्रुतेः । ननु वस्तुज्ञानमेव संसारनाशकरमिति

कुर्वन्क्रिया एव नरो भवच्छिदः
शतं समाः शान्तमना जिजीविषेत् ॥ १५ ॥

तन्मे नातिप्रयोजनं भवत्याः परिग्रहेण तथापि यदि कर्तारं भोक्तारं पुरुषं स्तुवन्ती भवती कियन्तं कालमत्र वस्तुमिच्छति । को दोषः ।

---

र्मास्ययाजी मीयतां ३ इति 'विचार्यमाणानाम्' इति प्लुत उत्तरं पक्षं प्रतिपादयति । 'जीवन्वा एष ऋतूनप्येति' इति । एष यजमानो जीवन्प्राणधारणं कुर्वन्नपि वसन्तादिऋतून् ऋत्वात्मकं संवत्सरस्वरूपप्रजापतिशब्दवाच्यं नित्यनिरतिशयब्रह्मानन्दस्वरूपमेति प्राप्नोति । जीवन्मुक्तस्य ऋत्वात्मनावस्थानात्तन्मरणं नास्तीति हृद्गतोऽर्थः । चातुर्मास्ययाजी प्रमीयतामिति व्यवहितस्य प्रशब्दस्यान्वयः । यदि वसन्तात्प्रमीयतामिति वसन्ते प्रमीयत इत्यर्थः । 'सुपां सुलुक्' इत्यादिना पूर्वसवर्णदीर्घः । वसन्तो भवति । शेषं स्पष्टम् । प्रजापतिर्वावैष इति । एष यजमानो जीवात्मा प्रजापतिर्वाव प्रजापतिरेव । अयमर्थः । जीवात्मा सच्चिदानन्दस्वरूपः स च क्लेशकर्मविपाकाद्यैर्मलैः परामर्शात्कलुषीकृतो नित्यनैमित्तिकैः कर्मभिः कालुष्यापनयने कृते भस्मादिकैर्द्रव्यैर्घर्षणेन कर्मणा दर्पणस्य स्वस्वरूपव्याप्तिवत् जीवात्मा सच्चिदानन्दनित्यनिरतिशयब्रह्मस्वरूपतयावभासते । नच दिङ्मोहादावज्ञाननिवर्तकं ज्ञानमदृष्टम् । अतो देहात्मभ्रान्तिनिवर्तकं ज्ञानमेव न कर्मेति वाच्यम् । स्थूलोऽहमित्यादिप्रत्ययानां गौणत्वेनाङ्गीकारादिति । न च'न कर्मणा न प्रजया' इत्यादि श्रुतिभिः कर्मनिषेध इति वाच्यम् । पश्वादिफलत्यागश्रुतिपरत्वात् न स्वार्थपरत्वात् । 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इत्यादिश्रुतिसहस्रेषु ज्योतिष्टोमादिकर्मणां स्वर्गशब्दाभिधेयमोक्षसाधनत्वेन साक्षात्प्रतिपादनादिति याज्ञिकमतसंक्षेपः।तदेतदभिधायाह—कुर्वन्क्रिया एवेति । तथा च श्रूयते 'कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः' इत्यादि । 'न्यायागतधनस्तत्त्वज्ञाननिष्ठोऽतिथिप्रियः । श्राद्धकृत्सत्यवादी च गृहस्थोऽपि विमुच्यते' इति ॥ १५ ॥ तन्मे इत्यारभ्य यज्ञविद्याया इत्यन्तं सुगमम् । स्तुवन्तीत्यत्र कर्त्रात्मस्तुतिपरत्वमात्रमुपनिषदां सह्यत इति भावः ॥

---

उपनिषद्रहस्यं निरस्यति—न वस्तुधीरिति । वस्तु कालत्रयाबाध्यं परं ब्रह्म तदाकारा धीस्तत्साक्षात्कारः न भवच्छेदहेतुरित्यर्थः । कर्म कुर्वतां जीवनमपि सुन्दरमित्याह—कुर्वन्निति । अतएव हेतोर्नरो जीवः भवच्छिदः संसारविच्छेदिकाः क्रियाः कर्माणि कुर्वन्नेव शान्तमनाः सावधानचित्तः शतं समा वर्षाणि जिजीविषेत् प्राणान् धर्तुमिच्छेत् । कर्मिणामेव जीवनमन्येषां भस्त्रेव निःश्वसितमिति भावः ॥ १५ ॥ परिग्रहेण स्वीकारेण । धूम एवान्धकारस्तेन श्यामलिता मलिना जाता दृग्दृष्टिर्यस्याः सा तस्याः ।

**राजा**—(सोपहासम्।) अहो धूमान्धकारश्यामलितदृशो दुष्प्रज्ञत्वं यज्ञविद्यायाः येनैवं कुतर्कोपहता।

अयः स्वभावादचलं वलाच्चल-
त्यचेतनं चुम्बकसंनिधाविव।
तनोति विश्वेक्षितुरीक्षितेरिता
जगन्ति मायेश्वरतेयमीशितुः॥ १६॥

तस्मात्तमोन्धानामियमनीश्वरदृष्टिः। अबोधप्रभवं संसारं कर्मभिः शमयन्ती यज्ञविद्या नूनमन्धतमसमन्धकारेणापि निनीषति।

---

**येनैवमित्यादि**। कुतर्कः यदि कर्तृत्वं न स्यात् ऐश्वर्यमपि न स्यादिति। तस्योत्तरमाह—**अयः स्वभावादिति**। अयो लोहपिण्डः स्वभावादचलम्। वलात्प्रसिद्धहेत्वन्तराभावेऽपीत्यर्थः। यथा अयःपिण्डः चुम्बकसन्निधौ चलो भवति तथा विश्वेक्षितुर्विश्वसाक्षिण ईक्षितेरिता ईक्षणेन प्रेरिता माया जगन्ति तनोतीति यत् इयमेवेशितुः परमेशस्येश्वरता ऐश्वर्यम्। परिणममानमायाधिष्ठातृब्रह्मैवेश्वर इति भावः। अतो जगत्कर्तृत्वमीश्वरत्वं च मायिकमेवेति भावः॥ १६॥ **तस्मादिति**। तमोन्धानामज्ञानावृतचित्तानामनीश्वरदृष्टिरीश्वराभावबुद्धिः 'क्रियाभवोच्छेदकरी न वस्तुधीः' इति यदुक्तं तदपाकरोति।

---

दुष्प्रज्ञत्वं दुर्बुद्धित्वम्। दुर्बुद्धित्वमेवाह—**येनैवमिति**। येन हेतुना एवं पूर्वोक्तप्रकारेण कुतर्केणासत्तर्केणोपहता विमोहिता। तर्कासत्त्वं व्यनक्ति—**अयः स्वभावेति**। ईशितुरीश्वरस्य माया मूलाविद्या जगन्ति भुवनानि तनोत्युत्पादयति। मायाप्रेरकत्वेनेश्वरस्यापि चेष्टावत्त्वमित्याशङ्क्य मायां विशिनष्टि। कीदृशी माया। विश्वेक्षितुर्विश्वसाक्षिण ईक्षितेन ईक्षणमात्रेणेरिता। भगवदीक्षणप्रेरितमायायाः सृष्टिकर्तृत्वं न तु सिसृक्षाद्युपाधिविशिष्टस्य कर्तृत्वमीश्वरस्येति भावः। नन्वचेतनं चेतनाधिष्ठितमेव कार्यकरं दृष्टं यथा चक्षुरादि, माया त्वचेतना कथमन्येषामीक्षणमात्रेण कर्त्रीति वदन् न लज्जस इत्याशङ्क्य दृष्टान्तेनोपपादयति—**अय इति**। स्वभावादचेतनं चेतनाशून्यमत एवाचलं जडमयो लोहं लोहचुम्बकपाषाणस्य संनिधौ समीपे यथा वलाच्चलति एवमचेतनाऽवस्तुभूतापि माया विश्वेक्षितुरीक्षणेरिता जगन्निर्माति। इयमेवेश्वरता ईश्वरस्येति भावः॥ १६॥ इह जगति यदज्ञानाद्रज्जुभुजङ्गाद्याविर्भवति तज्ज्ञानादेव तिरो भवति न कर्मभिरविरोधादित्यभिप्रेत्याह—**अप्रबोधेति**। अप्रबोधादज्ञानात् प्रभवो जन्म यस्य तादृशं संसारं कर्मभिः शमयन्ती यज्ञविद्या नूनं निश्चयेन गाढत-

---

१. 'न्धानामेवेयमीदृशी दृष्टिः। अप्रबोधप्रभवं' इति पाठः।

स्वभावलीनानि तमोमयानि
प्रकाशयेद्यो भुवनानि सप्त ।
तमेव विद्वानतिमृत्युमेति
नान्योऽस्ति पन्था भवमुक्तिहेतुः ॥ १७ ॥

पुरुषः—ततस्ततः ।

उपनिषत्—ततो यज्ञविद्यया विमृश्योक्तम् । सखि, त्वत्संनिकर्षात् दुर्वासनोपहतैरस्मदन्तेवासिभिः कर्मसु श्लथादरैर्भवितव्यम् । तत्प्रसीदतु भवती स्वाभिलषितदेशगमनाय ।

पुरुषः—ततस्ततः ।

उपनिषत्—ततोऽहं तामतिक्रम्य प्रस्थिता ।

पुरुषः—ततस्ततः ।

---

अवोधप्रभवमित्यादिना । अज्ञानमूलत्वात्संसारस्य, अज्ञानस्य च ज्ञानेनैव निवृत्तेर्न कर्मणा संसारनिवृत्तिरिति भावः । विमतमज्ञानं ज्ञानैकनिवर्त्यमज्ञानमूलत्वात् शुक्तिरजतवदित्यनुमानेन सूचितमिति वेदितव्यम् । ज्ञानादेव मुक्तिरिति । अत्र उपनिषदर्थमप्युदाहरति—**स्वभावेत्यादि** । स्वभावेन लीनानि जडानि । यतस्तमोमयानि परस्परं प्रकाश्यप्रकाशकत्वानर्हाणि । प्रकाशान्तरापेक्षाणीत्यर्थः । तानि सप्त भुवनानि यः प्रभासयेत्प्रकाशयेत्स्वात्मावगतप्रकाशसंसर्गेण भासयेत् । 'तमेव भान्तमनु भाति सर्वं तस्य भासा सर्वमिदं विभाति' इति श्रुतेः 'तमेवं विद्वानमृत इह भवति । नान्यः पन्था विद्यतेऽयनाय' इति श्रुतेः । अतिमृत्युमेतीत्यन्वयः ॥ १७ ॥

---

मोऽन्धतमसमपनेतुं तिरोधातुमिच्छतीत्यर्थः । कारणाभावेऽपि कार्यं भवत्विति जल्पन्ती मन्दतमेति भावः । ननु आत्माज्ञानादाविर्भूतं विश्वं ज्ञानादेव तिरोभवति । ज्ञानाज्ञानयोरेव बाध्यबाधकभावो दृष्टः शास्त्रे न कर्मज्ञानयोः । 'ज्ञानमज्ञानस्य घातकम्' इति श्रुतेर्वस्तुज्ञानादेवाज्ञाननाश इत्यभिप्रेत्य राजा आह—**स्वभावेति** । स्वभावलीनानि नश्वराणि तमोऽज्ञानं तन्मयानि तत्स्वभावानि एतादृशानि सप्त भुवनानि यः स्वरूपप्रकाशेन प्रकाशयेत्प्रकटीकुर्यात्, तमेव स्वप्रकाशं विश्वसाक्षिणं विद्वान् तमेवं जानन् अतिमृत्युं मृत्युमतिक्रान्तं परं ब्रह्मैति प्राप्नोति । इतराभिहितं नात्मज्ञानं मोक्षहेतुरिति मतं निरस्यति । नान्योऽस्तीति । भवः संसारस्तत्साध्या मुक्तिस्तद्धेतुः पन्था उपायो नान्योऽस्तीत्यर्थः । 'तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय' इति श्रुतेः ॥ १७ ॥ विमृश्य विचार्य । दुर्वासनोपहतैर्दुर्बुद्धिग्रस्तैरन्तेवासिभिः

उपनिषत्—ततः कर्मकाण्डसहचरी मीमांसा मया दृष्टा—

विभिद्य कर्माण्यधिकारभाञ्जि
श्रुत्यादिभिश्चानुगता प्रमाणैः ।
अङ्गैर्विचित्रैरभियोजयन्ती
प्राप्तोपदेशैरतिदेशकैश्च ॥ १८ ॥

तत इत्यारभ्य मया दृष्टेत्यन्तं सुगमम् ॥—विभिद्येति । कर्माण्यग्निष्टोमादीनि अधिकारभाञ्जि नित्यनैमित्तिककाम्याद्यधिकारयुक्तानि विभिद्य भिन्नानि ज्ञापयित्वा श्रुत्यादिभिः श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यारूपैः षट्प्रमाणैः शेषत्वबोधकैरनुगता । अत्र व्युत्पाद्यव्युत्पादकभावेन संबन्धः । प्राप्ता संगता । उपदेशैरतिदेशकैः । स्वार्थे कः । विचित्रैः आरात्संनिपातभेदेन नानाविधैरङ्गैः सह वर्तमाना कर्माण्यभियोजयन्त्यनुष्ठापयन्ती दृष्टेत्यन्वयः । तदयमत्र निष्कर्षः—त्रिविधमङ्गजातं दृष्टार्थं, अदृष्टार्थं, उभयात्मकं च । यद्दृष्टार्थं जातिगुणकर्मद्रव्यात्मकं तत्र जातिगुणौ 'पशुना यजेत' 'अरुणया क्रीणाति' इति क्रियासाधनत्वेन विनियुक्तौ तत्साधनद्रव्यावच्छेदेन दृष्टेनैवोपकारेण तस्य शेषभावमनुभवतः । कथं पुनर्द्रव्यपरिच्छेदात्क्रियासाधनत्वमिति चेत् विशिष्टद्रव्यस्य क्रियासाधनत्वात् तस्य च विशेषणाधीनप्रतिपत्तित्वादप्रतिपन्नस्य साधनभावासंभवात्तत्प्रत्युपासयोर्जातिगुणयोस्तद्द्वारेण भवति क्रियासाधनत्वम् । गुणस्य हि साधनत्वं श्रुतं यथोक्तेन प्रकारेणोपपादयितुं तद्विशिष्टस्य क्रियासाधनत्वं कल्प्यते तदेव जातिगुणयोर्दृष्टार्थत्वम् । द्रव्यस्य तु साक्षादेव क्रियानिर्वृत्तिः । दृष्टमेव प्रयोजनं संयवनादिकमाचक्षते दृष्टार्थत्वं क्रियायाः । सा च द्वेधा संनिपत्योपकारकरूपा प्रोक्षणादिः । आरादुपकारकरूपा प्रयाजादिः । सन्निपत्योपकारकारीणि दृष्टार्थानि कर्माणि स्वकारणानां कर्मादीनामुत्पत्तिं प्राप्तिं विकृतिं संस्कारं कुर्वन्ति सन्ति साध्यस्य प्रधानस्योपकुर्वन्ति । यथा संयवनं पुरोडाशपिण्डस्योत्पत्तिं, दोहनं च पयसः प्राप्तिं, अवघातो व्रीहीणां विकारम् । अदृष्टार्थं तु सन्निपातसंस्कारं कुर्वत् प्रधानोपकारि भवति । तदेवमुत्पत्त्यादिसाध्यभेदाच्चतुर्विधं भवति । तच्च कर्मादीनामन्यतमे कारके यथायथमुत्पत्त्यादिकं करोति । कर्मण्येव व्रतादि-

शिष्यैः श्रद्धादरैर्मन्दादरैः । स्वस्याभिलषित इष्टः । प्रस्थिता निर्गता । मीमांसास्वरूपमाह—विभज्येति । मीमांसा मया दृष्टेति पूर्वफक्किकास्थपदेष्वन्वयः श्लोके संबध्यते । कीदृशी मीमांसा । अधिकारः कर्मफलभागित्वरूपः तं भजन्ते तानि ज्योतिष्टोमादीनि कर्माणि विभज्य फलभेदात्कर्मभेदं प्रतिपाद्य अङ्गैः प्रयाजानुयाजादिभिर्वि-

१ 'विभज्य' इति पाठः ।

पुरुषः—ततस्ततः ।

उपनिषत्—ततोऽहं तामपि तथैवाश्रयमभ्यर्थितवती । अथ

---

कर्तरि व्रतं करणे प्रयाजशेषाभिघारणं, संप्रदाने पशुपुरोडाशयागः, अपादाने अग्नेस्तृणान्यपचिनोतीति, अधिकरणे दध्यानयनम् । आरादुपकारकं कारकद्वारकं अपूर्वद्वारकं प्रधानस्योपकरोतीत्युभयार्थः पशुपुरोडाशयागः । स हि त्यागांशेनाऽदृष्टं उद्देशांशेन च दृष्टं देवतास्मरणं करोतीत्युभयार्थः । नन्वेवम् 'एकं वा चेदनेकत्वात्' इति न्यायेन विध्युपपत्तेः प्रयोजनद्वयमनुपपन्नमिति चेत् दृष्टार्थत्वादिप्रयोजनापेक्षायां स्मरणं प्रथमं स्वीक्रियते । स्वीकृते च तस्मिन् त्यागांशस्य तत्र प्रयोजनमपश्यतः पुनरपेक्षा जायते । सा चादृष्टकल्पनेन निवर्तते । तेनैवंजातीयकमुभयोर्लिङ्गमुभयोपकारकतामावहति । तत्र निरपेक्षस्वरूपा श्रुतिः । सा द्विविधा । द्वितीया श्रुतिर्वाक्यरूपा श्रुतिश्चेति । 'सर्वभावगता शक्तिर्लिङ्गमित्यभिधीयते । वाक्यं तु पदसंघातमात्रमित्युदितं बुधैः ॥ इतिकर्तव्यताकाङ्क्षा प्रक्रिया परिकीर्तिता । वार्तानुष्ठानसादेश्यभेदेन द्विविधः क्रमः ॥ समाख्या यौगिकी संज्ञा लौकिकी वैदिकी तथा ॥ विनियोजनमेतावदिति भाष्यविदो विदुः' इति ॥ द्विविधं हि शब्दजातम् । उपदेशात्मकमतिदेशात्मकं च । इदमित्थं कर्तव्यमित्युपदेशः । तद्वदिदं कर्तव्यमित्यतिदेशः । तत्रानुपदिष्टधर्मकेष्वैन्द्राग्न्यादिष्वतिदेशेन तत्प्राप्तिः । तच्चोत्तरषट्के कर्मातिदेशनिबन्धनम् । तत्रापि सप्तमे लक्षणे प्रत्यक्षवचननामधेयाभ्यां सापवादः कृत्स्नोऽतिदेशो निरूपितः । आनुमानिकेन वचनेनातिदेशोऽपि सामान्येन तद्विशेषे स्पष्टमेव चिन्तितः । नवमे त्वतिदिष्टानां दशमाद्यसाध्यं कार्यप्राधान्यं सिद्धवत्कृत्य प्रयोगविशेषे विचार ऊहाख्यः कृतः । दशमे बाधाभ्युच्चयद्वारेण पदार्थेयत्ता चिन्तिता । एकादशद्वादशयोः प्रयोगपरिमाणतन्त्रव्रतं ताभ्यां चिन्तितम् । तत्तु चतुर्थाध्यायशेषभूतमपि पदार्थेयत्ताप्रसङ्गादुत्तरषट्के निरूपितमित्यलमतिविस्तरेण । एतत्सर्वमभिसंधायोक्तं ग्रन्थकारेण 'विभिद्य कर्माण्यविकारभाञ्जि' इत्यनेन—चतुर्थपञ्चमैकादशद्वादशाध्यायप्रतिपाद्यं निरूपितम् । उपदेशैरित्यनेन पूर्वषट्कम् अतिदेशैरित्यनेनोत्तरषट्कं निरूपितमिति ॥ १८ ॥ **तत इति** । ततो दर्शनानन्तरं तां मीमांसामपि तथैवाश्रयमभ्यर्थितवती । आर्ये, त्वयि निवस्तुमिच्छामीति यथा यज्ञवि-

---

चित्रैर्नानाभेदभिन्नैः सन्निपत्यारादुपकारिभिः प्राप्तोपदेशैः साक्षादुपदिष्टैः । अतिदेशोऽन्यत्र श्रुतस्यान्यत्र संबन्धस्तेनापि प्रमाणेन प्राप्तेरभियोजयन्त्युपकुर्वाणा । पुनः कीदृशी मीमांसा । श्रुत्यादिभिः श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यादिप्रमाणैरनधिगतार्थबोधकैरनुगता युक्ता ॥ १८ ॥ अभ्यर्थितवती याचितवती । पार्श्ववर्तिनं समीपव-

तयाप्युक्तास्मि भद्रे, किंकर्मासीति । ततो मया तदेवोक्तम् । यस्माद्विश्वमित्यादि पठितम् ।

**पुरुषः**—ततस्ततः ।

**उपनिषत्**—ततो मीमांसया पार्श्ववर्तिनां मुखमालोक्याभिहितम् । अस्त्येवास्माकमस्याः लोकान्तरफलोपभोगयोग्यपुरुषोपनयनेनोपयोगः । तत्क्रियतामेषां कर्मोपयुक्तम् । तत्र तेषामन्तेवासिनां मध्ये केनाप्यन्तेवासिनैतदनुमोदितमेव । अपरेण तु प्रसिद्धप्रतिष्ठेन

---

यामभ्यर्थितवती तथैवेत्यर्थः । अनन्तरं तयाप्युक्तास्मि । अपिशब्दाद्यथा भद्रे, किंकर्मेति यज्ञविद्ययोक्ता तद्वत्किंकर्मासीत्युक्तास्मीत्यर्थः । ततस्तदनन्तरमुत्तरं पूर्वोक्तमेव दत्तमित्यर्थः । पुरुष इत्यारभ्य आलोक्येत्यन्तं सुगमम् । अस्त्येवेत्यादि । मीमांसावाक्यमेतत् । अस्या उपनिषदो लोकान्तरफलोपभोगयोग्यस्य देहादिव्यतिरिक्तस्य । नित्यस्येत्यर्थः । पुरुषस्योपनयनेन समर्पणेन । प्रतिपादनेनेति यावत् । उपयोगः प्रयोजनम् । तत्क्रियतां कर्मोपयुक्तं पुरुषमीमांसासंयुक्तं युक्तियुक्तम् । विचारसहिष्णु यथा भवति तथा क्रियतामित्यर्थः । **तत्रेति** । तत्र सभायां तेषां मध्ये मीमांसान्तेवासिनां मध्ये केनाप्यन्तेवासिना । एकेनैव शिष्येणेत्यर्थः । स शिष्यः प्रभाकर इत्यनुसन्धेयम् । तेन प्रभाकरेणानुमोदितमेव कर्मोपयुक्तं पुरुषं करिष्यामीति । अयमर्थः—ब्रह्मकाण्डं कर्मविधिशेषतोऽर्थवादात्मना विध्येकवाक्यतां संपाद्य जीवात्मपरमेवेति प्रतिपादयामीत्यर्थः । ज्ञानकर्मसमुच्चयवादिना गुरुणा यज्ञविद्यामतं दूषितमेवेत्यभिप्रेत्य तदेव गुरुमतं सिद्धमिति व्युत्पत्तिवादिना भट्टाचार्येण दूषयितुं भट्टाचार्यस्तुतिपूर्विकां फक्किकामाह । गुरुमतं नाम नाविद्यास्तमयो मोक्षः किंतु अत्यन्तदेहोच्छेदः । स च निःशेषसुखदुःखप्रदकर्मक्षयात् तदधिकाद्वादाच्च(?)अनादिदेहसंततिसंचितात्पकर्मक्षय उपभोगान्निःशेषक्षयस्तदर्थं चोदितात्मज्ञानादिति । **अपरेण त्वित्यादि** । अपरेण गुरोरन्येन । तुशब्दः प्रसिद्धपक्षान्तरद्योतनार्थः ।

---

र्तिनम् । किमभिहितं तदाह—अस्त्येवेति । लोकान्तरफलं स्वर्गसुखादिरूपं तदुपभोगे योग्यस्य पुरुषस्योपनयनेन प्रतिपादनेनोपयोगः प्रयोजनं अस्या उपनिषदोऽस्त्येवेति योजना । ततः किं तत्राह—तदिति । तत्तस्माद्धेतोरेषोपनिषत् कर्मणि नियुक्ता ध्रियतां क्रियतामित्यर्थः । एतत्कर्मोपयुक्तत्वम् । अनुमोदितमेव साधु इति स्वीकृतमेव । प्रसिद्धा ख्याता प्रतिष्ठा यस्य तेन मीमांसाया हृदयस्य तात्पर्यस्याधिदैवतं तेन । अधिष्ठातृदेवतयेत्यर्थः । कुमारिलस्वामिना भट्टाचार्येण प्रोक्तं प्रतिपादितम् । किं प्रति-

---

१ 'तद्ध्रियतामेषा कर्मनियुक्ता' इति पाठः ।

मीमांसाहृदयाधिदैवतेन कुमारिलस्वामिनैवं प्रोक्तम् देवि, नेयं कर्मोपयुक्तं पुरुषमुपनयति, किंतु अकर्तारमभोक्तारमीश्वरम् । न चासावीश्वरः कर्मसूपयुज्यते । ततोऽपरेणोक्तम् । अथ किं लौकिकात्पुरुषादन्य ईश्वरो नामास्ति । ततस्तेन विहस्य पुनरुक्तम् । अस्ति । तथाहि—

एकः पश्यति चेष्टितानि जगतामन्यस्तु मोहान्धधी-
रेकः कर्मफलानि वाञ्छति ददात्यन्यस्तु तान्यर्थिने ।

---

प्रसिद्धप्रतिष्ठेन सर्वविद्वज्जनपूज्येन मीमांसाहृदयाधिदैवतेन । पूर्वमीमांसातत्त्ववेदिनेत्यर्थः । कुमारिलस्वामिना भट्टाचार्येणैवमुक्तं वक्ष्यमाणम् । देवीति भट्टाचार्यवाक्यमेतत् । हे देवि पूर्वमीमांसे, इयमुपनिषत् कर्मोपयुक्तं पुरुषं नोपनयति किंतु अकर्तारमभोक्तारमीश्वरम् । न चासौ कर्मसु युज्यत इति । अयमर्थः—आचार्यैः सिद्धव्युत्पत्त्यङ्गीकारात् सिद्धवाक्यानां स्वार्थे तात्पर्याङ्गीकारात् 'सत्यं ज्ञानमनन्तमानन्दं ब्रह्मे'त्यादिपदानां परस्परार्थप्रतिपादनद्वारा अर्थबोधाङ्गीकारात् । 'साक्षीचेता केवलो निर्गुणश्च' इत्यादिश्रुतिसहस्रपर्यालोचनया जीवव्यतिरिक्तेश्वरपरा एव वेदान्ता इति वक्तुं शक्यत इति । ननु ईश्वरत्वं नाम नाधिकारित्वसंपादकं किंतु कर्तृत्वभोक्तृत्वसंपादकम् । अतश्च कर्तारं भोक्तारं ईश्वरं प्रतिपादयति उपनिषदिति बालिशभाषितप्रायमेतदित्याशङ्कते प्रभाकरशिष्यः शालिनाथः । अथ किं लौकिकात्पुरुषात् ईश्वरो नामान्योऽस्तीति । लौकिकाल्लोकान्तरफलोपभोक्तुः । **ततस्तेनेति** । ततस्तदनन्तरं तेन भट्टाचार्येण स शिष्यः प्रभाकरो वेदान्तिनां मतस्वरूपं न जानातीति विहस्योक्तमित्यर्थः । वेदान्तिनां मतस्वरूपं स्वमनीषिकयोल्लिखितं प्रभाकरस्य पुरः प्रतिपादयति—**अस्ति । तथाहि । एक इति ।** एक ईश्वरो जगतां चेष्टितानि पश्यति । अन्यस्तु जीवात्मा चेष्टितानि करोति ।

---

पादितं तदाह—**देवीति** । उपनयति प्रतिपादयति । तर्हि कीदृशं प्रतिपादयतीत्याशङ्क्याह—**किंत्विति** । ननु अकर्ता अभोक्तैव सिध्यतां का हानिस्तत्राह—**न चासाविति** । ननु अकर्तुरभोक्तुरीश्वरस्य कर्मोपयोगे बाधकाभावात्तादृशस्यापि कर्मोपयोगितास्त्वित्याशङ्क्याह—**ततोऽपरेणेति** । अपरेण मीमांसैकदेशिमतावलम्बिना । किमुक्तमित्याह—**अथेति** । लौकिकाल्लोकप्रसिद्धात् पुरुषाज्जीवादन्यो नामेश्वरः किमस्ति । नास्तीत्यर्थः । तेन कुमारिलस्वामिना जीवादन्य ईश्वरो नास्तीति श्रुत्वा विहस्योक्तम् । किमुक्तं तदाह—**अस्तीति** । जीवादन्य ईश्वरोऽस्तीत्यर्थः । तदेवाह—**तथाहि । एक इति** । एक ईश्वरो जगतां चेष्टितानि कर्माणि पश्यति । विश्वसाक्षित्वा-

एकः कर्मसु शिष्यते तनुभृतां शास्तेव देवोऽपरो
निःसङ्गः पुरुषः क्रियासु स कथं कर्तेति संभाव्यते ॥१९॥

राजा—(सहर्षम्) साधु कुमारिलस्वामिन्, साधुप्रज्ञोऽस्यायुष्मन्,

द्वौ तौ सुपर्णौ सयुजौ सखायौ
समानवृक्षं परिषस्वजाते ।

---

अतएव महामोहान्धधीः । एको जीवात्मा कर्मफलानि वाञ्छति । 'स्वर्गकामो यजेत' इत्यत्र स्वर्गकामोऽहं अतो मम स्वर्गः साध्य इत्यादिकाः कर्मवाञ्छाः । अन्यस्त्वीश्वरस्तानि कर्मफलान्यर्थिनेऽधिकारिणे ददाति । अयमर्थः—'स्वर्गकामो यजेत' इत्यत्र यागस्वर्गयोः साध्यसाधनभावः प्रतीयते । साध्यसाधनभावो यागस्य क्षणिकत्वात् स्वर्गस्य देहान्तरकालान्तरभावित्वादुभयोर्न सङ्गच्छत इति कृत्वास्माभिर्मध्ये अपूर्वं कल्प्यते फलप्रदातृत्वेन । तत्तु न सहन्ते वेदान्तिनः । अपूर्वस्याचेतनत्वाज्जडत्वात्फलदातृत्वं न संगच्छत इति क्लृप्तस्यैव परमेश्वरस्य फलदातृत्वं लाघवात्कल्प्यत इति वेदान्तिनां हृदयमिति । एको देवः कर्मसु शिष्यते योज्यते । अपरो देवस्तनुभृतां शास्तेव ममेदं कार्यमिति लोके प्रवर्तते । अनेन लौकिकात्पुरुषादीश्वरो नामान्योऽस्तीति चोद्यं पराकृतमपि पुनः पराकरोति—निःसङ्ग इत्यादिना ॥ १९ ॥ स्वमतस्वरूपनिरूपकं स्तौति । साधु साध्वित्यादि । वेदान्तमार्गं जानासीत्यर्थः । कुमारिलश्लोकं श्रुतिशिरोनिष्ठतया प्रतिपादयति—**द्वौ ताविति** । तथा च श्रुतिः—'द्वा सुपर्णा सयुजा सखया समानं वृक्षं परिषस्वजाते । तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति'

---

दित्यर्थः । तु पुनरन्यो जीवो मोहान्धधीर्मोहावृतज्ञानः । तथोक्तं गीतायाम्—'अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः' इति । एको जीवः कर्मफलानि पुत्रपश्वादीनि वाञ्छति कामयति । तु पुनरन्य ईश्वरस्तानि कर्मफलान्यर्थिनेऽभिलाषवते ददाति । एको जीवः कर्मसु ज्योतिष्टोमादिषु शिष्यते नियोज्यते । आज्ञाप्यत इति यावत् । अपरो देव ईश्वरस्तनुभृतां प्राणिनां शास्तैव । एवं जीवादतिविलक्षण ईश्वरो लौकिकपुरुषादन्यो नेति कथं संभावनापीत्यत आह—निःसङ्ग इति । निःसङ्गः सङ्गरहितः । 'असङ्गो ह्ययं पुरुषः' इत्यादिश्रुतेः । पुरुषः पुराणः पूर्णत्वाद्वा पुरुषः परमात्मा क्रियासु कर्मसु कर्तेति कथं संभाव्यते । न कथंचित्संभावयितुमपि शक्यत इत्यर्थः ॥ १९ ॥ राजा विवेकः । साधुप्रज्ञोऽस्युत्कृष्टप्रज्ञोऽसि । श्लोकेऽर्थे संमतित्वेनार्थवः श्रुतिमवतारयति—**द्वौ ताविति** । तौ प्रसिद्धौ सुपर्णौ सुष्ठु पर्णं गतिर्ययोस्तौ । 'पर्णं गतौ सहाये च पतत्राङ्गरुहेषु च' इति विश्वः । अव्याहतज्ञानावित्यर्थः । सयुजौ सहयो-

एकस्तयोः पिप्पलमत्ति पक्व-
मन्यस्त्वनश्नन्नभिचाकशीति ॥ २० ॥

पुरुषः—ततस्ततः ।

उपनिषत्—ततोऽहं मीमांसामभिमन्त्र्य प्रस्थिता ।

पुरुषः—ततस्ततः ।

उपनिषत्—ततो मया बहुभिः शिष्यैरुपास्यमानास्तर्कविद्या अवलोकिताः ।

काचिद्विश्वविशेषकल्पनपरा न्यायैः परा तन्वती
वादं सच्छलजातिनिग्रहमयैर्जल्पं वितण्डामपि ।

---

अस्यार्थः । द्वा द्वौ सुपर्णा सुपर्णौ पक्षिणौ जीवात्मपरमात्मानौ । 'सुपां सुलुक्' इत्यादिना द्विवचनस्यौकारस्याकारः । द्वौ पक्षिणौ सयुजा सयुजौ सखाया सखायौ समानं वृक्षं मुक्तिपर्यन्तमेकमेव वृक्षरूपं देहमधिष्ठाय सयुजौ मिलितौ सखायौ परस्परमविरुद्धौ वर्तेते इत्यर्थः । तयोर्जीवपरमात्मनोर्मध्ये एको जीवात्मा स्वादु फलं ऐहिकं शब्दादिकं, आमुष्मिकं स्वर्गादिकं स्वादु मधुरं पिप्पलं फलमत्त्यनुभवति । अन्यः परमात्मा तत्फलमनश्नन्ननुभवपराङ्मुखः सन् अभिचाकशीति प्रकाशत इति श्रुत्यर्थः । अनेनैव श्लोकार्थो व्याख्यातः । भट्टाचार्यस्य किंचिज्ज्ञत्वं जीवात्मनोऽन्यः परमात्मा वेदान्तशास्त्रेषु प्रतिपाद्यो विद्यत एवेति एतावन्मात्र एव मतिविश्रान्तेः जीवपरयोरैक्यपर्यन्तमविश्रान्तेरतो जीवपरैक्यज्ञानं गुरुमुखादेवाधिगन्तव्यमिति कौमारिलस्योपदेशः कृतः । अत एव कौमारिलमतनिरासोऽर्थसिद्ध इति ध्येयम् । एतत्सर्वं साधुप्रज्ञोऽसीत्यनेन गम्यते ॥ २० ॥ **ततोऽहमित्यादि** । अभिमन्त्र्य संबोध्य । साधयामीत्युक्त्वेत्यर्थः । तत इत्यारभ्य विलोकिता इत्यन्तं सुगमम् । तर्कविद्या वैशेषिकन्यायसाङ्ख्याः ॥—**काचिदिति** । काचिद्वैशेषिकविद्या द्वित्वपरा । द्वित्वकल्पनं पाकजादिप्रक्रियोपलक्षणम् । विशेषो नाम पञ्चमः पदार्थस्तत्कल्पनपरा । परान्या

---

गवन्तौ सखायौ परस्परानुकूलौ द्वौ जीवात्मपरमात्मानौ समानमेकं वृक्षं शरीरं परिषस्वजाते आलिङ्गयतः स्वीकुर्वत इति यावत् । अनयोः कार्यभेदमाह—तयोर्मध्ये एको जीवः पक्वं पिप्पलं कर्मफलमत्ति भुङ्क्ते, अन्य ईश्वरोऽनश्नन्नभुञ्जानोऽभिचाकशीति । साक्षित्वेन पश्यतीत्यर्थः ॥ २० ॥ ततः तदनन्तरं मया बहुभिः शिष्यैरन्तेवासिभिरुपास्यमानाः सेव्यमाना न्यायविद्याः पातञ्जलन्यायकणादसांख्यनिर्मिताः शास्त्ररचनाः प्रतिपादयति—**काचिदिति** । काचित् पतञ्जलिनिर्मिता विश्वसाधो विशेषो जगतः

अन्या तु प्रकृतेर्विभज्य पुरुषस्योदाहरन्ती भिदां
तत्त्वानां गणनापरा महदहंकारादिसर्गक्रमैः ॥ २१ ॥

**पुरुषः**—ततस्ततः ।

**उपनिषत्**—तथैवाहं ताः समुपस्थिताः । ताभिश्चानुयुक्तया

---

आन्वीक्षिकी सच्छलजातिनिग्रहमयैः छलसहितजातिनिग्रहस्थानप्रचुरैर्न्यायैरनुमानैर्जल्पं वादं वितण्डामपि तन्वती । अन्या तु सांख्यविद्या प्रकृतेर्मूलप्रकृतेः पुरुषस्य भिदां भेदं विविच्य उदाहरन्ती प्रतिपादयन्ती महदहंकारादिसर्गक्रमैः । आदिशब्देन पञ्चतन्मात्रादयो गृह्यन्ते । तत्त्वानां गणनापरा 'पञ्चविंशतिरात्मा भवति' इति श्रुतेः । पञ्चविंशतितत्त्वानि प्रसिद्धानि । 'प्रकृतेर्महान् महतोऽहंकारः अहंकारात्पञ्चतन्मात्राणि पञ्चतन्मात्रेभ्यो भूतानि भूतेभ्योऽखिलं जगत्' इति सर्गक्रमः ॥ २१ ॥ **तथैवाहमित्यादि** । अहं कयाप्यभियुक्तया तर्कविद्यानां मध्ये एकया । कयेत्यत्र वीप्सा किं कर्मेत्युक्तवतीत्यर्थः । ताभिस्तिसृभि-

---

क्लेशाद्यसंसृष्टत्वादि तत्कल्पनपरा । तत्प्रतिपादनपरेत्यर्थः । आत्मा निर्लेपः क्लेशैरपरामृष्टोऽकर्ताऽभोक्तेत्येवमादि कल्पयन्ति पातञ्जलाः । उक्तं चोदयनाचार्यैः 'क्लेशकर्मविपाकाशयैरपरामृष्टो निर्माणकायमधिष्ठाय संप्रदायप्रवर्तकोऽनुग्राहकश्च' इति । 'काचिद्द्वित्वविशेषकल्पनपरा' इति पाठे द्वित्वाद्युत्पत्तिविनाशक्षणगणनारूपा ये विशेषास्तत्कल्पनपरा तत्प्रतिपादनपरा अक्षपादमुनिप्रणीता विद्या । परा गौतमप्रणीता न्यायविद्या । न्यायैः नीयते प्राप्यते विवक्षितोऽर्थो यैस्ते न्यायाः पञ्चावयवानुमानवाक्यानि तैर्वादं तत्त्वबुभुत्साकथां, छलं अर्थान्तरेण प्रयुक्तस्य शब्दस्यार्थान्तरवर्णनं, जातिरसदुत्तरं, निग्रहः पराहंकारनिराकरणं, तन्मयैः तत्प्रधानैः । न्यायैरिति त्रिष्वपि संबन्धनीयम् । जल्पं विजिगीषुकथाम्, वितण्डामपि परपक्षदूषणावसानां, कथामपि न्यायैस्तर्कैस्तन्वती विस्तारयन्ती । अन्या सांख्यनिर्मिता विद्या प्रकृतिं गुणत्रयसाम्यावस्थां जगत्कारणभूतां विभज्य पृथक्कृत्य पुरुषस्यात्मनो भिदां भेदमुदाहरन्ती कथयन्ती मयावलोकितेति पूर्वफक्किकास्थेनान्वयस्त्रिष्वपि योजनीयः । कीदृशी सांख्यविद्या । महदहंकारादीनां सर्गः सृष्टिस्तत्क्रमैः तत्त्वानां पञ्चविंशतितत्त्वानां गणना संख्या तस्यां परा सावधाना प्रकृतेर्महान् महतोऽहंकारः अहंकारात्पञ्चतन्मात्राणि एवं गणनापरेत्यर्थः । एतावता सांख्यपातञ्जलन्यायवैशेषिकशास्त्राणां क्षणलवादिगणनयैवायुःपर्यवसानात् पुरुषार्थोपयोगित्वाभावादनादरणीयत्वं तेषामिति भावः ॥ २१ ॥ **तथैवाहमिति** । मीमांसामिवेत्यर्थः । ता विद्याः प्रति समुपस्थिता आगता अनुयुक्तया किं ते कार्यमिति

---

१ 'प्रकृतिं' इति पाठः ।

मया तदेव कर्मोदाहृतम् । यस्माद्विश्वमित्यादि । ततस्ताभिः सप्रकाशोपहासमुक्तम्—आः वाचाले, परमाणुभ्यो विश्वमुत्पद्यते । निमित्तकारणमीश्वरः । अन्यया तु सक्रोधमुक्तम्—आः पापे, कथमीश्वरमेव विकारिणं कृत्वा विनाशधर्मिणमुपपादयसि । ननु रे प्रधानाद्विश्वोत्पत्तिः ।

राजा—अहो तर्कमतयस्तर्कविद्या एतदपि न जानन्ति । सर्वं प्रमेयजातं घटादिवत्कार्यमिति परमाणुप्रधानोपादानकारणमप्युपेक्षणीयमेवेति । तथाहि—

---

रन्तुयुक्तयां पृष्टया यस्माद्विश्वमुदेतीति व्याख्यातं तत्र तस्मिन्नर्थे उपहासः कृतः । आः वाचाले इति । आः निपातः कोपे । वाचालत्वं बहुगर्ह्यवाक्त्वम् । गालिप्रदानमेतत् । परमाणुभ्य इत्यादीश्वर इत्यन्तं सुगमम् । अन्यया सांख्यया विद्यया । सक्रोधमित्यारभ्य विश्वोत्पत्तिरित्यन्तं सुगमम् । तद्दूषयति—अहो इत्यादि । परमाणूपादानवादस्तावन्न संगच्छते परमाणूनां दृश्यत्वेन का-

---

पृष्टया कर्मोदाहृतं कार्यमुक्तम् । किं तदित्याह—यस्मादिति । सप्रकाशोपहासं स्पष्टोपहाससहितं यथा स्यात्तथेत्यर्थः । सोपहासामुक्तिं प्रकटयति—आः वाचाले इति । आः इति कोपे । वाचालेऽनुपयुक्तभाषणशीले परमाणुभ्यश्चतुर्विधेभ्यो विश्वं जगदुत्पद्यतेऽतस्त एवोपादानभूता इत्यर्थः । ईश्वरः कर्तृत्वान्निमित्तं कुलालवदिति भावः । अन्यया दूषणपुरःसरमेवमुत्तरितमित्याह—अन्ययेति । आः पापे ब्रह्मोपादानवादिनि ब्रह्मैवोपादानमिति मन्वाना मृद उपादानत्वाद्विकारित्वं यथा घटशरावादिरूपेण तथा ब्रह्मण उपादानत्वे विकारित्वान्नश्वरत्वमिति वदन्ती नापत्रपस इति तात्पर्यार्थः । सांख्यविद्ययेदमुत्तरमभाणीत्याह—नन्विति । रे इति धिक्संबोधने । प्रधानात्प्रकृतेरेवोपादानाच्चिदवच्छिन्नाद्विश्वोत्पत्तिः पुरुषस्य तु पुष्करपलाशवन्निर्लेपत्वमिति भावः । उक्तं च—'मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त । षोडशकस्तु विकारो न प्रकृतिर्न विकृतिः पुरुषः' इति । अनेककुतर्कोपप्लवेऽवश्यापेक्षणीयो विवेक इत्याह—राजेति । राजा विवेकः । दुर्मतित्वमुपपादयति—एतदपीति । परमाणवश्च प्रधानं प्रकृतिश्च तयोरुपादानकारणं समवायिकारणं सर्वं प्रमेयं प्रमाविषयः पक्ष उत्पद्यते कार्यत्वात् घटवत् यन्नैवं तन्नैवं यथा आत्मेत्यन्वयव्यतिरेकेण परमाणुप्रधानादीनामुत्पत्तिमत्त्वे भावकार्यत्वात्सोपादानत्वं वाच्यम् । उपादानगवेषणायामन्यस्याभावादात्मैवोपादानम् । नच विकारित्वापत्तिरिति वाच्यम् । अधिष्ठातृत्वादित्यवगन्तव्यम् । विस्तरः शा-

---

१ 'दुर्मतयः' इति पाठः ।

अम्भःशीतकरान्तरिक्षनगरस्वप्नेन्द्रजालादिवत्
कार्यं मेयमसत्यमेतदुदयध्वंसादियुक्तं जगत् ।
शुक्तौ रूप्यमिव स्रजीव भुजगः स्वात्मावबोधे हरा-
वज्ञाते प्रभवत्यथास्तमयते तत्त्वावबोधोदयात् ॥ २२ ॥

विकारशङ्का तु मुग्धवधूविकल्पविलसितमिव । तथाहि—

---

र्यत्वादुपादेयत्वावश्यंभावात् । यद्यपीश्वरो निमित्तकारणमेवेत्युक्तं तदप्ययुक्तम् । 'यतो वा' इत्याद्यभिन्ननिमित्तोपादानत्वप्रतिपादकश्रुतिविरोधात् । अतएव प्रधानोपादानवादोऽपि न युज्यते । प्रधानस्याचेतनत्वे 'तदैक्षत' इत्यादिचेतनोपादानत्वप्रतिपादकश्रुतिविरोधादुपेक्षणीयमित्यनेन शिष्टकोपो दर्शितः । 'हेतुमान्बकवृत्तिश्च वाङ्मात्रेणापि नार्चयेत्' इति मनुवचनात् । तथाहीत्यादितत्त्वावबोधोदयादित्यन्तं सुगमम् । मध्याह्नार्कमरीचिकास्विवेति श्लोकव्याख्यानेनैव व्याख्यातप्रायत्वात् ॥ २२ ॥ विकारशङ्का त्वित्यादि । मुग्धवधूविकल्पविलसितं मुग्धवधूनां बालिकानां विकल्पः वचनानि संभाषणानि तेषां विलसितम् ।

---

स्याज्ज्ञातव्यः । एतदेवोपपादयति—तथाहि । अम्भ इति । एतत्परिदृश्यमानं जगत्कार्यमत एवासत्यं मिथ्या अनिर्वचनीयमिति । कार्यत्वे हेतुमाह—मेयमिति । ज्ञानगोचरमित्यर्थः । यतो ज्ञानविषयोऽतः कार्यमित्यर्थः । अस्मिन्नर्थे दृष्टान्तः । अम्भःशीतकरः जलचन्द्रः, अन्तरिक्षनगरं गन्धर्वनगरम्, स्वप्नो लोकप्रसिद्धः, इन्द्रजालं मन्त्रादिनान्यथाविघट्यमानस्यान्यथाप्रतीतिः, आदिपदादन्ये भ्रमाः पीतशङ्खादयः तद्वत् यथा जलचन्द्रादयो मेयत्वात्कार्यत्वादनिर्वचनीया एवं जगदिति ध्वनितम् । जगतः कार्यत्वमुपपादयति । उदय उत्पत्तिः । ध्वंसो विनाशः, आदिपदाद्वृद्ध्यपचयौ । तद्युक्तं जगतो जडत्वादस्वप्रकाशतया ज्ञानविषयत्वम् । आत्मनस्तु स्वप्रकाशतया न ज्ञानविषयत्वमिति भावः । ननु अनित्यत्वेऽपि जगतो न कदाचिदनीदृशं जगदित्युक्तेर्जगत एवंरूपेणैव सर्वदा सत्त्वात्कथं मुक्तिरित्याशङ्क्याह—स्वात्मावबोध इति । स्वात्मावबोधे स्वप्रकाशे हरौ हरत्यज्ञानं तत्कार्यमिति हरिः परब्रह्म तस्मिन्नज्ञाते सति जगत्प्रभवत्युत्पद्यते, अथानन्तरं तत्त्वावबोधोदयात्तत्त्वावबोधस्याद्वितीयब्रह्मसाक्षात्कारस्योदयादुत्पत्तेर्जगदस्तमयते प्रलीयते । उभयत्र दृष्टान्तः । शुक्तौ रूप्यमिव, स्रजि मालायां भुजगः सर्प इव । यथा मालाऽज्ञाने शुक्त्यज्ञाने च रज्जुरजते उत्पद्येते तयोश्च तत्त्वावबोधादुभयं विलीयते एवमात्माज्ञानाज्जगद्विवर्तते तज्ज्ञानाद्विलीयत इत्यर्थः । न कदाचिदित्युक्तिस्तु जगतो बहुकालावस्थायित्वेनोपपद्यते । अन्यथा श्रुतिविरोध इति भावः ॥२२॥ पातञ्जलपूर्वपक्षमधिक्षिपति—विकारशङ्का त्विति । मुग्धवधूः पामरस्त्री तस्या विकल्पो मनोविकारस्तस्य विलसितमिव चेष्टितमिव विकारशङ्काद्युक्तमपि नास्ति ।

शान्तं ज्योतिः कथमनुदितानन्दनित्यप्रकाशं
विश्वोत्पत्तौ व्रजति विकृतिं निष्कलं निर्मलं च ।
तद्वन्नीलोत्पलदलरुचामम्बुवाहावलीनां
प्रादुर्भावे भवति नभसः कीदृशो वा विकारः ॥ २३ ॥

**पुरुषः**—साधु साधु प्रीणयति मानसं ममायं प्रज्ञावतो विमर्शः । (उपनिषदं प्रति) ततस्ततः ।

**उपनिषत्**—ततस्ताभिः सर्वाभिरेव क्रुद्धाभिरुक्तम्—अहो, विश्वविलयेन मुक्तिमेषां वदन्ती नास्तिकपथं प्रस्थिता निगृह्यतामिति । ततः ससंरम्भं मां निग्रहीतुं प्रधाविताः सर्वाः ।

**पुरुषः**—(सत्रासम्) ततस्ततः ।

---

रूपकमेतत् । अविमृश्यवचनप्रायमित्यर्थः ॥—शान्तं ज्योतिरित्यादि । शान्तं निर्विकारं, ज्योतिः प्रकाशकं, अनुदितानन्दनित्यप्रकाशं अनुदितो जन्मरहितः । नित्य इति यावत् । 'निष्कलं निर्मलं शान्तम्' इति श्रुतेः । निष्कलं निर्विशेषम् । उक्तमर्थं सोदाहरणं द्रढयति—तद्वदिति । नीलोत्पलदलरुचामम्बुवाहावलीनां मेघपङ्क्तीनां प्रादुर्भावे सति वियतो विकारः कीदृशस्तद्वत् । तादृश इत्यर्थः । मेघकालिमा आकाशं यथा न स्पृशति तद्वदविद्याकालिमा ब्रह्म न स्पृशति । आनन्दो नाम निर्वहणसन्धेः सप्तममङ्गम् । मतान्तरैस्तिरोहितस्येष्टार्थस्य पुनः प्राप्तिः । तल्लक्षणं तु 'इष्टार्थसिद्धिरानन्दः' इति ॥ २३ ॥ पुरुष इत्यारभ्य

---

आसन्नारोप्यत इति भावः । विकाराभावं प्रकटयति—तथाहि । शान्तमिति । शान्तमविकारि, ज्योतिः प्रकाशान्तरनिरपेक्षं, निष्कलं निरंशं, निर्मलज्ञानशून्यं च, अनुदितः न उदितोऽनुत्पन्नः अनस्तः न अस्तः अतएव नित्यो यः प्रकाशस्तद्रूपम् । एतैर्विशेषणैः सर्वथा विकारयोग्यतापि नास्तीति सूचितम् । ईदृशं विश्वोत्पत्तौ विकृतिं विकारं कथं व्रजति प्राप्नोति । न कथमपीत्यर्थः । अमुमर्थं लोकसिद्धदृष्टान्तेन निश्चिनोति । शश्वन्निरन्तरं नीलोत्पलदलवत् रुक् कान्तिर्यासां ताः तासामम्बुवाहा मेघास्तेषामावलीनां पङ्क्तीनां प्रादुर्भावे सत्युत्पत्तौ सत्यां नभस आकाशस्य कीदृशो वा कीदृशोऽपि विकारो भवति । अपितु नेत्यर्थः ॥ २३ ॥ प्रीणयति संतोषयति । विमर्शो विचारः । नास्तिकपथं वेदनिन्दितमार्गम् । निगृह्यतां वध्यताम् । ससंरम्भं सकोपं

---

१ 'दितानस्त' इति पाठः । २ 'शश्वत्' इति पाठः ।

उपनिषत्—ततोऽहं सत्वरतरं परिक्रम्य दण्डकारण्यं प्रविष्टा। ततो मन्दारशैलोपकल्पितस्य मधुसूदनायतनस्य नातिदूरे—

वाह्वोर्भग्ना दलितमणयः श्रेणयः कङ्कणानां
चूडारत्नग्रहनिकृतिभिर्दूषितः केशपाशः।

इत्याद्यवस्था मम संजाता।

पुरुषः—ततस्ततः।

उपनिषत्—ततो देवायतनान्निर्गत्य गदापाणिभिः पुरुषैरतिनिर्दयं ताड्यमानास्ता दिगन्तमतिक्रान्ताः सर्वाः।

राजा—(सहर्षम्) न खलु भवतीमतिक्रामतो भगवान् विश्वसाक्षी क्षमते।

पुरुषः—ततस्ततः।

उपनिषत्—

छिन्ना मुक्तावलिरपहृतं स्रस्तमङ्गाद्दुकूलं
भीता गीताश्रममथ गलन्नूपुराहं प्रविष्टा॥ २४॥

---

उपनिषदित्यन्तं सुगमम्। वाह्वोर्भग्ना इत्यादिश्लोके व्याख्यातं प्राक्। **ततो देवायतनादित्यादि**। गदापाणिभिर्विष्वक्सेनादिभिः। तास्तर्कविद्याः। अत्र परवादिनिर्गमनेन दुःखनिवृत्तेः प्रतिपादनात्समयो नामाष्टममङ्गं स निर्वहणसन्धेः समयः। 'समयो दुःखनिर्गमः' इति। सहर्षमित्यारभ्य उपनिषदित्यन्तं सुगमम्। **—भीतेति**। वाह्वोर्भग्ना इत्यादिश्लोकस्य चतुर्थचरणः—इदं भयजनितधावनवशान्नूपुराणां गलनमित्यर्थः। वेदान्तमतेऽयमाशयः। सर्वे एव भगवद्गीतापाठका उपनिषत्सु नाधीतिनः। अतश्च तस्मिन्प्रदेशे गीतारूपेणाहं वर्ते॥ २४॥

---

परिक्रम्य निर्गत्य मन्दरशैलस्य मन्दरपर्वतस्योप समीपे कल्पितस्य निर्मितस्य नातिदूरे निकटे वाहुभङ्गाद्यवस्था मम संजातेत्यग्रेतनेनान्वयः। वाह्वोरित्येतत् प्रथमं व्याख्यानम्। देवतायतनाद्देवतागृहात्पुरुषैर्गदापाणिभिरतिक्रान्ता। अतिक्रम्योल्लङ्घ्य दिगन्तंगताः सर्वा विद्याः। अतिक्रामतोऽभिभवतः। स्वाध्यस्तं विश्वं तादात्म्यसंबन्धात्साक्षादीक्षत इति विश्वसाक्षी क्षमते। सोढुं शक्नोतीत्यर्थः। प्राक्तनस्य वाह्वोर्भग्ना इत्यस्य पदस्यान्यदुत्तरार्धं पठति—**छिन्नेति**। मुक्तावलिर्मुक्ताहारस्त्रोटितोऽङ्गात्स्रस्तमधः पतितं दुकूलमपहृतं बलाद् गृहीतम्। अथानन्तरमहं भीता सती गीताश्रमं प्रविष्टा। कीदृश्यहम्। ग-

तत्र वत्सया गीतया मां तत्रागतामालोक्य ससंभ्रमं मातर्मातरिति परिरभ्योपवेशितास्मि । विदितवृत्तान्तया तया चोक्तम् । अम्ब, नात्र खेदयितव्यं मनः । ये खलु त्वामप्रमाणीकृत्य यथेष्टमसुरसत्त्वाः प्रचरिष्यन्ति तेषामीश्वर एव शास्ता । उक्तं च तेन भगवता तानधिकृत्य । तथाच गीतायाम्—'तानहं द्विषतः क्रूरान्संसारेषु नराधमान् । क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु' इति ।

**पुरुषः**—(सकौतुकम्) देवि, त्वत्प्रसादाज्ज्ञातुमिच्छामि कोऽयमीश्वरो नामेति ।

---

मातर्मातरिति संभ्रमाद्विरुक्तिः । उपनिषदो गीतामातृत्वं गीताया उपनिषत्प्रसूतत्वात् । अतएव भगवद्गीतासूपनिषत्स्विति व्यवहारः । असुरसत्त्वाश्चरिष्यन्ति । अत्रायमर्थः । अस्मत्समीपे यावदवस्थानं भवत्यास्तावत्कालमसुरेभ्यो भयं नास्ति । उपनिषदं त्वामप्रमाणीकृत्य चत्वारश्चासुरास्त्वयि चरिष्यन्ति । त्वामप्यप्रमाणीकृत्य चरिष्यन्तीत्यर्थः । चतुरस्तान्सुरद्विषः क्रूरनराधमानशुभसंज्ञकानासुरीषु योनिष्वेवाजस्रं क्षिपामि । एतदुक्तं भवति भगवद्गीतासु सप्तमेऽध्याये—'तानहं द्विषतः क्रूरान्संसारेषु नराधमान् । क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु' इति, 'मामात्मपरदेहेषु प्रद्विषन्तोऽभ्यसूयकाः' इत्यनेन प्रतिपादितान् द्विषतः 'प्रभवन्त्युग्रकर्माणः क्षयाय जगतोऽहिताः' इत्यनेन प्रतिपादितानुग्रकर्मणः क्रूरान् । 'यक्ष्ये दास्यामि मोदिष्य इत्यज्ञानविमोहिताः' इत्यादिप्रतिपादितान् अशुभसंज्ञकान् असुरानुल्लङ्घितवेदमार्गान् एवं चतुर्विधानसुरानासुरीष्वेव योनिषु व्याघ्रसिंहादियोनिषु क्षिपामीति गीतार्थः । अत्र प्रकृतार्थस्य खेदनिवारणद्वारा स्थिरीकरणात्कृतिर्नाम निर्वहणसन्धेरेनवममङ्गम् । तल्लक्षणं तु—'स्थिरीकरणमर्थस्य लब्धस्य कृतिरुच्यते' इति । कोऽयमीश्वरो नामेति । ईश्वर-

---

लन्तीस्खलन्ती नूपुरे चरणभूषणे यस्याः सा ॥ २४ ॥ तत्रेत्यादि । वत्सया गीतया । उपनिषन्मूलत्वाद्वत्सयेत्युक्तम् । मातर्मातरिति । उक्त्वेति शेषः । मां परिरभ्यालिङ्ग्याहमुपवेशितास्मीति योजना । विदितवृत्तान्तया ज्ञातसमाचारया । असुराणां दैत्यानां सत्त्ववन्मनोवत्सत्त्वं चेतो येषां ते । निर्दयहृदया इत्यर्थः । प्रचरिष्यन्ति प्रवर्तिष्यन्ते । शास्ता दण्डकर्ता । कुत्रोक्तमित्याह—तथाच गीतायामिति । उक्तमाह—तानिति । अहं तान्क्रूरानत एव नराधमान् तथा द्विषतो द्वेषयुक्तानशुभान्पापिष्ठान्संसारेष्वासुरीष्वेव योनिष्वजस्रमनवरतं क्षिपामि । तेषां कदापि संसारान्निस्तारो नास्तीति भावः । सकोपमिवेत्यत्र विलोक्य वदतीति शेषः । बहिर्मुखं प्रति कथमात्मस्व-

उपनिषत्—(सकोपमिव) को नामात्मानमजानन्तमन्धमिव प्रत्युत्तरं दास्यति ।

पुरुषः—(सहर्षम्) कथमहमात्मा पुरुषः परमेश्वरः ।

उपनिषत्—एवमेतत् । तथाहि—

असौ त्वदन्यो न सनातनः पुमान्
भवान्न देवात्पुरुषोत्तमात्परः ।
स एष भिन्नस्त्वदनादिमायया
द्विधेव विम्वं सलिले विवस्वतः ॥ २५ ॥

---

मजानन्तं प्रत्युत्तरं को वा दास्यति । विपरीतोऽयं प्रश्नः । कथमात्मा परमेश्वर इति वक्तव्ये कोऽयमीश्वरो नामेति विरुद्धोक्तिः । अनेनोपनिषदामतिशयप्रीत्या पुरुषस्य वहुमानप्रतीतेर्भाषाख्यं निर्वहणसन्धेर्दशममङ्गम् । तदुक्तम्—'वहुमानादिसंप्राप्तिर्भाषितं परिकीर्तितम्' इति । कथमात्मा परमेश्वर इति संसारित्वाविरुद्धसंसर्गादिति भावः ॥—असौ त्वदन्य इति । असौ सनातनः पुमान्परमेश्वरस्त्वदन्यो न भवति । भवांश्च पुरुषोत्तमाद्देवात्परोऽन्यो न भवति । त्वत्त्वत्तः सकाशादनादिमायया स एष भिन्नः प्रतिभाति । यथा सलिल उपाधौ सति विवस्वतो विम्वप्रतिम्वयोरैक्यमेवम् ॥ २५ ॥ भगवत्योपनिषदा सम्यगुक्तमप्यर्थं

---

रूपं वर्णयितुं शक्यत इत्याह—को नामेति । को नाम जनः आत्मानं स्वस्वरूपमजानन्तं प्रति उत्तरं दास्यति । न कोऽपीत्यर्थः । अन्धमिवेति दृष्टान्तः । केनचिदन्धेन भगवत्स्वरूपं मम लोचनगोचरं करिष्यसीति पृष्टेन यथान्धं कोऽप्युत्तरयति तथेत्यर्थः । स्वरूपपरूपाभेदमुपपादयति—असाविति । असावपरोक्षः पुमान्पुरुषः 'यत्साक्षादपरोक्षात्' इति श्रुतेः । त्वदन्यो न । त्वत्तोऽन्यः भिन्नो न भवतीति शेषः । 'उदरमन्तरं कुरुते । अथ तस्य भयं भवति' इति श्रुतेः । भवान्पुरुषोत्तमाद्देवात्परमात्मनः स्वप्रकाशात् 'उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः' इति स्मृतेः परोऽन्यो न । 'तत्त्वमसि' इति श्रुतेः । कीदृशः पुमान् । सनातनोऽविनाशी । ननु बाधितमर्थं वेदोऽपि कथं वोधयेत् । 'सूर्यो यूपः । यजमानः प्रस्तरः' इत्यादिवत् । किंच प्रत्यक्षपरिगृह्यमाणे भेदे कथं स्वरूपाद्वैतं प्रतिपाद्यत इत्याशङ्क्य भेदस्त्वन्यकृतो न वास्तव इत्याह—स एवेति । स एवेश्वराभिन्न एव त्वमनादिमाययानाद्यविद्यया भिन्नो भेदं गतः। नन्वाविद्यकेऽपि भेदे सति कथमहमीश्वरो भवेयमित्याशङ्क्य मिथ्याभूतो भेदः पारमार्थिकमभेदं न विरोद्धुं शक्नोतीत्याह । सलिले जले विवस्वतः सूर्यस्य विम्वं मण्डलं द्विधेव द्विप्रकारमिव । तथोक्तम् 'एक एव हि भूतात्मा भूते भूते व्यवस्थितः । एकधा बहुधा चैव दृश्यते जलचन्द्रवत् ॥' अधिकं शास्त्रादवगन्तव्यं इह विस्तरभयाद्विरमामः

---

१ 'स एव भिन्नस्त्वमनादि' इति पाठः ।

पुरुषः—(विवेकं प्रति) भगवन्, उक्तमप्यर्थं भगवत्या न सम्यगवधारयामि ।

अवच्छिन्नस्य भिन्नस्य जरामरणधर्मिणः ।
मम ब्रवीति देवीयं सत्यानन्दचिदात्मताम् ॥ २६ ॥

विवेकः—पदार्थानवज्ञानाद्वाक्यार्थो नावगम्यते । आर्येणोक्तं तत्सत्यमेव ।

पुरुषः—तदवबोधाय भगवानुपायमाज्ञापयतु ।

विवेकः—अयमुच्यते—

एषोऽस्मीति विविच्य नेतिपदतश्चित्तेन सार्धं कृते
तत्त्वानां विलये चिदात्मनि परिज्ञाते त्वमर्थे पुनः ।

---

नावधारयामि न निश्चिनोमि । तदेवाह—**अवच्छिन्नस्येत्यादि** । अवच्छिन्नस्य लिङ्गदेहाद्यवच्छिन्नस्य अत एव भिन्नस्य प्रतिशरीरं भिन्नस्य जरामरणधर्मिणः स्थूलोऽहं कृशोऽहमिति देहधर्माध्यासात् । जरामरणधर्मित्वं जरामरणधर्मकारणत्वादीनामुपलक्षकम् । इयं देव्युपनिषत्सत्यानन्दचिदात्मतां कथयति तन्न प्रतीयत इत्यर्थः । तदुक्तम्—'वेदान्तोक्तात्मविज्ञानविचारितमतिस्तु या । ब्रह्मण्यविद्या साधारा स्थूलसूक्ष्मात्मना स्थिता ॥' इति ॥२६॥ पदार्थानवज्ञानाद्वाक्यार्थो नावगम्यते अतः पदार्थज्ञानपूर्वकं वाक्यार्थज्ञानं नास्तीत्यर्थः । पुरुष इत्यारभ्य उच्यत इत्यन्तं सुगमम् । अयमुच्यत इति । अयमुपायः । तमुपायप्रकारं तावदाह—**एषोऽस्मीति** । चित्तेन सार्धमन्तःकरणेन सहितम् । संवलितमिति यावत् । अस्मीत्यहंप्रत्ययं नेतिपदतः नेतिनेतीति श्रुत्या विविच्य विभागं कृत्वा । अहंप्रत्ययेऽयमन्तःकरणांशः अयमात्मांश इति विभज्येत्यर्थः । तदनन्तरं तत्त्वानां स्थूलानां विलये सूक्ष्मेष्ववस्थानेषु पञ्चीकृतानां भूतानामुपसंहारेण स्वात्मना प्रकृतिरूपेणावस्थाने कृते सति । आरोपाप-

---

॥ २५ ॥ तत्त्वमस्यादिवाक्यादपि जायमानं ज्ञानं विचारं विनानवधारणमेवेत्याह—पुरुष इति । असंभावित एवार्थ इत्याह—अवच्छिन्नस्येति । इयं देव्युपनिषदवच्छिन्नस्य शरीरावच्छिन्नस्य । परिच्छिन्नस्येति यावत् । भिन्नस्य भेदबुद्ध्या गृहीतस्य जरामरणे धर्मौ यस्य एतादृशस्य मम नित्यस्य सुखज्ञानस्वरूपतां ब्रवीति निरूपयति । इदमसंभावितमिवेति लक्ष्यत इत्यर्थः ॥ २६ ॥ पदार्थानवज्ञानात्तत्त्वपदार्थयोः सम्यगनवबोधात् वाक्यार्थो नावगम्यत इत्युपनिषत्प्रतिपादिततत्त्वमस्यादिमहावाक्यार्थस्याखण्डैकरसस्य जीवपराभेदस्यानिर्धारणादित्यर्थः । तदवबोधाय वाक्यार्थज्ञानाय भगवान्विवेक आज्ञापयतु कथयतु । एषोऽस्मीतीति । चिदात्मनि तत्पदार्थे निष्कृष्टेश्वरचैतन्ये । त्वमर्थे त्वंपदार्थे निष्कृष्टजीवचैतन्ये परिज्ञाते सति सम्यगवबुद्धे सति । पुनरनन्तरं

श्रुत्वा तत्त्वमसीति बाधितभवध्वान्तं तदात्मप्रभं
शान्तं ज्योतिरनन्तमन्तरुदितानन्दः समुद्द्योतते ॥ २७ ॥

पुरुषः—(सानन्दम् ।) श्रुतमर्थं परिभावयति ।

(ततः प्रविशति निदिध्यासनम् ।)

निदिध्यासनम्—आदिष्टोऽस्मि भगवत्या विष्णुभक्त्या । यथा निगूढमस्मदभिप्रायमुपनिषद्विवेकेन सह बोधयितव्या । त्वया

---

वादाभ्यां तत्त्वंपदार्थयोः शोधने कृते सतीति यावत् । पुनस्तदनन्तरमात्मनि परमात्मनि त्वमर्थे जीवात्मनि च ज्ञाते संलक्षिते सति । ततः किं वृत्तमिति तदाह—श्रुत्वेत्यादि । तत्त्वमसीति वाक्यश्रवणानन्तरं वाक्यजनितेनापरोक्षज्ञानेन बाधितभवध्वान्तं निर्मूलितसंसाराज्ञानं तदात्मप्रभं तत्प्रसिद्धम् । यद्वा तत्तदानीमुपदेशसमये आत्मप्रभं स्वयंप्रकाशं, शान्तमुदासीनं, ज्योतिस्तेजोरूपं, अनन्तमपरिच्छिन्नं, अन्तरुदितानन्दः अन्तः अन्तःकरणसाक्षात्कारवृत्तौ उदितानन्दः प्रतिफलितस्वरूपः सन् एष जीवः समुद्द्योतते । सम्यक्प्रकाशत इत्यर्थः । अतश्च सर्वेषां देवानां वाक्यैकवाक्यतया तत्त्वमसीति महावाक्येनान्वयः । महावाक्येनान्वितानां सर्वासामुपनिषदामुपक्रमोपसंहाराभ्यासापूर्वताफलार्थवादोपपत्तिभिः षड्भिस्तात्पर्यलिङ्गैर्ब्रह्मप्रतिपादकत्वमेव । न च शब्दानां वाक्यैकनियता व्युत्पत्तिः, सिद्धपदानामपि व्युत्पत्तिदर्शनात् । 'प्रभिन्नकमलोदरे मधूनि मधुकरः पिबति' इत्यादौ तु समभिव्याहारात् व्युत्पत्तिदर्शनात् । किंच विधिरत्र पदवृत्तिरूपा लक्षणा योग्यार्थस्मृतिरूपेति वाच्यम् । रामायणभारतकथादौ कथामात्रविवक्षया कथितेऽपि परप्रतिपत्तौ जातायां योग्यार्थस्मृतिरूपलक्षणानां वदतातिसाहसमनुष्ठितम् । अत एव योग्येतरान्वितस्वार्थपरं पदकदम्बकं वाक्यमिति मतमेव सम्यगिति

---

तत्त्वमसीति वाक्यं श्रुत्वा तत् आत्मप्रभं स्वप्रकाशं ज्योतिरन्तर्मनोवृत्तावखण्डवाक्यार्थरूपं समुद्द्योतते प्रकाशते । तथोक्तं छान्दोग्ये—'तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो' इति ज्योतिषो विशेषणानि । अनन्तं वस्तुतो देशतः कालतश्चेति त्रिविधपरिच्छेदशून्यं, बाधितं तिरस्कृतं भवः संसारस्तस्य ध्वान्तं मूलकारणमज्ञानं येन, तथा शान्तं निरुपद्रवं उदितानन्दमनस्तमितस्वरूपम् । तत्त्वंपदार्थप्रकारमाह । कस्मिन्सति । एषोऽहंकारः नास्मि इति चित्तेन सार्धं मनसा सह विविच्य पृथक्कृत्वा परितः समन्तात् । सर्वेषामित्यर्थः । सर्वेषां तत्त्वानां विलये विनाशे कृते सति । अर्थाद्विवेकत :तत्त्वपदार्थशोधनादसंभावनादिनिवृत्तौ तत्त्वमसीत्यादिमहावाक्यावधारणं निश्चयरूपं भवतीति भावः ॥ २७ ॥ परिभावयति विचिन्तयति । श्रवणमनने निरूपिते, इदानीं निदिध्यासनप्रवेशमाह—तत इति । नितरां गूढं गुप्तं यथा स्यात्तथा विवेकेन सहोपनिषदस्मदभिप्रायं बोधयितव्य इति योजनीयम् । गुप्तास-

च पुरुषे वस्तव्यमिति। (विलोक्य) एषा देवी विवेकपुरुषाभ्यां नातिदूरे वर्तते। यावदुपसर्पामि (उपसृत्य उपनिषदं प्रति जनान्तिकम्) देव्या विष्णुभक्त्या समादिष्टं यथा संकल्पयोनयो देवता भवन्ति। मया च समाधानेन विदितं तथा आपन्नसत्त्वा भवतीति। तत्र च क्रूरसत्त्वा विद्या नाम कन्या त्वदुदरे वर्तते प्रबोधोदयश्च। तत्र विद्यां सङ्कर्षविद्यया मनसि संक्रामयिष्यसि। प्रबोधचन्द्रं पुरुषे समर्प्य वत्सविवेकेन सह मत्समीपमागमिष्यसीति।

ध्येयम् ॥२७॥ तत्र चेति। तत्र तयोरपत्ययोर्मध्ये क्रूरस्वभावा विद्या नाम स्त्र्यपत्यम्। तस्याः क्रूरत्वं महामोहकुलविवेककुलयोर्नाशकत्वात्। प्रबोधचन्द्रश्च त्वदुदरे वर्तत इत्यन्वयः। तत्र तयोर्मध्ये विद्या स्त्र्यपत्यं सङ्कर्षविद्या। प्रणवोपनिषदा मनसि संक्रामयिष्यसि स्थापयिष्यसि। तथाचाथर्वश्रुतिः—'अथ हैनं पिप्पलादोऽङ्गिरा सनत्कुमारं पप्रच्छ' इत्यारभ्य 'व्यापनाद्व्यापी महादेवः' इत्यन्तेन खण्डद्वयेन प्रणवस्य द्वितीयतृतीयमात्राप्रशंसा कृता। तृतीयखण्डे तुरीयमात्रा सङ्कर्षविद्येत्युक्तम्। तथाच तृतीयः खण्डः—'पूर्वास्याजाचरितं द्वितीया स्वप्नं तृतीया सुषुप्तं चतुर्थी तुरीयामात्रा ब्रह्मभवत्येष सङ्कर्षः। तस्माद्ध्यानादौ प्रयुज्यते मुच्यत इत्यासत्यं' इत्यन्ताथर्वशिखोपनिषत्। अस्यामुपनिषदि प्रणवस्य चतुर्थमात्राभिदेवतेत्युक्तम्। अतश्च संकर्षविद्यया विद्यां मनसि संक्रामयिष्यसीत्यनेन मनोदाहकत्वं सङ्कर्षविद्यायाः प्रतीयते। सङ्कर्षविद्यानुसंधानमहिम्ना दग्धमनसो जीवन्मुक्ता इति गम्यते। विद्यां मनसीत्यनेन संक्रमणोत्था अविद्यानिवृत्तिरूपा मुक्तिरुक्ता। प्रबोधचन्द्रं पुरुषे समर्प्येत्यनेन स्वरूपावस्थानरूपा मुक्तिरुक्ता। सङ्कर्षणविद्ययेति पाठे यया विद्यया संकर्षणो बलभद्रो देवकीगर्भाद्रोहिणीगर्भं प्रापितस्तया विद्ययोपनिषद्गर्भाद्विद्या कन्यास्ति स्थापिता,

दीयवार्तोपनिषद्विवेकयोरग्रे कथनीयेत्यर्थः। किं बोधयितव्येत्याह—त्वया चेति। पुरुषे जीवे। जनान्तिकं लोकसमक्षम्। समादिष्टमर्थमाह—यथेति। संकल्पयोनयः संकल्पो मनसो व्यापारः स एव योनिरुत्पत्तिकारणं यासां ताः भवन्ति। संकल्पमात्रादेवोत्पत्तिर्न मैथुनेनेति भावः। 'ब्रह्म वा इदमग्र आसीत्' इत्यारभ्य 'इदं सर्वमभवत्' इत्यन्तेन संकल्पप्रभवत्वं दर्शितं बृहदारण्यके। त्वया कथमेतज्ज्ञातमित्याह—मयेति। समाधानेन। योगसामर्थ्यजन्यध्यानेनेत्यर्थः। आपन्नसत्त्वा धृतगर्भा स्त्री। विवेकसंकल्पादेव गर्भाधानमिति भावः। क्रूरसत्त्वा क्रूराभिप्राया जगद्विनाशकत्वात्। प्रबोधोदयश्च। तत्र मनसि सङ्कर्षणविद्यया योगेनाकर्षणरूपया विद्यया विद्यामात्मसाक्षात्काररूपां संक्रामयिष्यसीति योजना। श्रूयते हि संकर्षणवि-

१ 'प्रबोधोदयं च पुरुषे सम्यग्विवेकेन सह। ततो मत्सकाशमागमिष्यसि' इति पाठः।

उपनिषत्—यदादिशति देवी। (इति विवेकमादाय निष्क्रान्ता।)

(निदिध्यासनं पुरुषो विशति[1]।)

पुरुषः—(ध्यानं नाटयति।)

(नेपथ्ये आश्चर्यमाश्चर्यम्।)

उद्दामद्युतिदामभिस्तडिदिव प्रद्योतयन्ती दिशः
प्रत्यग्रस्फुटदुत्कटास्थि[2] मनसो निर्भिद्य वक्षस्थलम्।
कन्येयं सहसा समं परिकरैर्मोहं ग्रसन्ती भज-
त्यन्तर्धानमुपैति चैकपुरुषं श्रीमान्प्रबोधोदयः॥ २८॥

---

प्रबोधः पुरुषः स्थापित इति सा विद्या प्रणवात्मिकैवेति ध्येयम्॥ उपनिषदित्यादि। देवी विष्णुभक्तिरुपनिषद्विवेकमादाय निष्क्रान्तेत्यनेन संभोगस्य नाटके निरूपयितुमनौचित्यमित्युक्तम्। अनेनोपनिषद्विवेकयोर्निर्गमनेन स्वरूपज्ञाने संजाते वेदान्तानामपि प्रपञ्चान्तःपातेन तद्वृत्तिनिवृत्तिरिति गम्यते। न च वेदान्तानामपि मायिकत्वेनासत्यत्वात्सत्यस्वरूपावगमकत्वं न युज्यत इति वाच्यम्। असत्यस्यापि दर्पणप्रतिबिम्बस्य सत्यबिम्बगमकत्वदर्शनादित्यलमतिप्रसङ्गेन॥—उद्दामेति। उद्दामद्युतिदामभिः दीर्घतरकान्तिरज्जुभिः तडिदिव विद्युदिव दिशः प्रकाशयन्ती। प्रत्यग्रस्फुटदुत्कटास्थि प्रत्यग्रमभिनवं यथा तथा स्फुटन्ति दलन्त्युत्कटान्यस्थीनि कीकससन्धयो यस्मिन्कर्मणि तद्यथा भवति तथा मनसः संबद्धं वक्षस्थलं हृदयपुण्डरीकं निर्भिद्य इयं कन्या विद्यावृत्तिज्ञानं सहसा शीघ्रं परिकरैर्विलासैः सह मोहं ग्रसति। अन्तर्धानं व्रजतीत्यन्वयः।

---

यथा संकर्षणो देवकीजठराद्रोहिणीजठरं प्रापित इति श्रीमद्भागवते। श्रवणमनने निरूपिते इत्युक्तं तत्र श्रवणं नामाद्वैते ब्रह्मण्युपनिषदां तात्पर्यावधारणं, मननं नाम युक्तिभिरनुचिन्तनम्। एते अर्थान्निरूपिते। निदिध्यासनं नाम विजातीयप्रत्ययतिरस्कारेण सजातीयप्रत्ययप्रवाहीकरणं तदप्यर्थादेवेति ज्ञातव्यम्। विद्याया अन्तःकरणवृत्तिरूपत्वान्मनसि संक्रमणं युक्तमिति भावः। ध्यानं नाटयतीति। निदिध्यासनं विचारविशेषात्मकम्। स च विचारविशेषो ध्यानात्मा ध्यानरूपं। निदिध्यासनं पुरुषं प्रविश्य नाटयति विस्तारयति। उद्दामेति। इयं कन्या विद्यारूपा सहसान्तर्धानं भजति तिरोधानं प्राप्नोति। कीदृशी कन्या। मनसो वक्षःस्थलं निर्भिद्य निर्गता इति शेषः। कीदृशं वक्षःस्थलम्। प्रत्यक्षं समक्षं स्फुटन्ति भिद्यन्ते उत्कटानि स्थूलान्यस्थीनि यस्मिंस्तत्। पुनः कीदृशी कन्या। उद्दामा अप्रतिहता द्युतय एव दामानि मालास्ताभिस्तडिदिव विद्युदिव दिशः प्रद्योतयन्ती प्रकाशयन्ती। पुनः कीदृशी कन्या। परिकरैः सेवकैः कामादिभिः समं सार्धं मोहं ग्रसन्ती गिलन्ती। उत्पन्नमात्रा विद्या

---

१ 'पुरुषं प्रविशति' इति पाठः। २ 'प्रत्यक्षस्फुट' इति पाठः।

(ततः प्रविशति प्रबोधोदयः ।)

**प्रबोधोदयः—**

किं वाप्तं किमपोहितं किमुदितं किं वा समुत्सारितं
स्यूतं किं नु विलायितं नु किमिदं किंचिन्न वा किंचन ।
यस्मिन्नभ्युदिते वितर्कपदवीं नैवं समारोहति
त्रैलोक्यं सहजप्रकाशदलितं सोऽहं प्रबोधोदयः ॥ २९ ॥

अयमर्थः । वृत्तिर्ज्ञानं कतकरजोन्यायेन विद्यां नाशयित्वा स्वयमपि नश्यति । तदनन्तरं श्रीमान्प्रबोधोदयश्च पुरुषमेवोपैतीत्यन्वयः । जीवन्मुक्तः प्राणान्धारयन्नेवाविद्याविमुक्तः कथम् । अविद्ययास्ति त्रिविधः परिणामः । कर्तृकार्यकारणरूप एकः, ज्ञातृज्ञेयज्ञानरूपोऽन्यः, भोक्तृभोग्यभोगरूपोऽपरः । तस्य त्रिविधस्य निवृत्तावौदासीन्येनावस्थानं जीवन्मुक्तिः। अविद्यानिवृत्तौ कथं देहाद्यनुवृत्तिरिति चेत् । मैवम् । देहादिकं निवृत्तमेव किंतु बाधितानुगतं दग्धरशनावत् । यद्वा परप्रतीत्या देहप्रतिभासो न स्वप्रतीत्या । नन्वेवं रज्जुसर्पादौ स्वप्रतीत्यैव रज्जौ सर्पभ्रमः स्वप्रतीत्यैव तन्निरासो न परप्रतीत्येति चेत् । सत्यम् । क्वाचित्कमेतत् । मरुमरीचिकादिभ्रमस्थलेषु सर्वेषां भ्रान्त्युत्पत्तिः समाना केषांचिन्मरुभूमिस्थले जलभ्रान्तिः, पुरुषे जलनिमग्नपुरुषभ्रान्तिरुत्पद्यते तस्य तु नास्त्येव तद्वदिति । जीवन्मुक्तिः स्वानुभवैकवेद्या । मुक्तोऽहमिति प्रतीतेः । अत एव अविद्यालेशोऽप्यस्ति । तस्य लेशस्य नाशः स्वत एव विद्यासंततेर्वा । तदुक्तं संक्षेपशारीरके—'जीवन्मुक्तिस्तावदस्ति प्रतीतेर्द्वैतच्छायारक्षणायास्तु लेशः । तस्मिन्नर्थे स्वानुभूतिः प्रमाणं तस्याभीष्टा निर्मिता निर्वृतिश्च ॥' अविद्यासन्ततेर्लेशनाशः । तस्य विद्यालेशस्य । अत्र महाश्चर्यप्रतीतेरुपगूहनं नाम निर्वहणसन्धेरेकादशमङ्गम् । तल्लक्षणं तु— 'अद्भुतार्थस्य संप्राप्तिरुपगूहनमुच्यते' इति ॥ २८ ॥ ततः प्रविशतीति । तत्र किं वाप्तमित्यादेरयमर्थः । यस्मिंश्चन्द्रे बोधचन्द्रे उदिते सति त्रैलोक्यं सहजप्रकाशेन परिपूर्णब्रह्माकारवृत्त्या दलितं बाधितं सदेवमनेन प्रकारेण विवेकपदवीं विवेकज्ञानविषयतां समारोहति प्राप्नोतीत्यन्वयः । तदेवाह—किं वाप्तमित्यादिना । त्रैलोक्यमाप्तं किं वा आपोहितं किं वा । न प्राप्तं नापि बाधित-

मोहादि सर्वं विनाश्य स्वयमपि नश्यतीति भावः । च पुनरेषः श्रीमान्प्रबोधोदयो निरतिशयब्रह्मप्रकाशक एकं पुरुषं क्षेत्रज्ञमुपेत्याविर्भवति । चकारो भजत्युपैत्योः समानकालार्थः ॥ २८ ॥ किं व्याप्तमिति । सोऽहं प्रबोधोदयोऽस्मि । स कः । यस्मिन्प्रबोधेऽभ्युदिते जाते त्रैलोक्यं जगत् एवमनेन प्रकारेण वितर्कपदवीं तर्कविषयं न समारोहति न प्राप्नोति । कीदृशं त्रैलोक्यम् । सहजप्रकाशेन स्वाभाविकप्रकाशेन दलितं

१. 'किं व्याप्तं' इति पाठः ।

(परिक्रम्य) एष पुरुषः । यावदुपसर्पामि । (उपसृत्य) भगवन्, प्रबोधचन्द्रोदयोऽहमभिवादये ।

पुरुषः—(साह्लादम्) एहि पुत्र, परिष्वजस्व माम् ।

(प्रबोधोदयस्तथा करोति ।)

पुरुषः—(सानन्दम्) अहो, विघटिततिमिरपटलं प्रभातं संजातम् । तथाहि—

मोहान्धकारमवधूय विकल्पनिद्रा-
मुन्मथ्य कोऽप्यजनि बोधतुषाररश्मिः ।
श्रद्धाविवेकमतिशान्तियमादिकेन[1]
विश्वात्मकः स्फुरति विष्णुरहं स एषः ॥ ३० ॥

---

मित्यर्थः । उदितं किमुत्सारितं किं वा । नोत्पन्नं नापि नष्टमित्यर्थः । स्यूतं किं नु विलायितं किमिदं नु । आकाशादिक्रमेणाविर्भावकार्यस्य कारणे विलय इत्येतदपि न वास्तवमित्यर्थः । इदं जगत् किं वा नवा किंचन । सदसत्त्वाभ्यामनिर्वचनीयमित्यर्थः ॥ २९ ॥ परिक्रम्येत्यारभ्य परिष्वजस्वेत्यन्तं सुगमम् । अहो इत्यादि । विघटिततिमिरपटलं निष्कासिताज्ञानसन्तति निवारितध्वान्तजातं च प्रभातं प्रकृष्टः प्रकाशः प्रातःकालश्च ॥ **मोहान्धकारेति** । मोहोऽज्ञानमेवान्धकारस्तमिस्रमवधूय तिरस्कृत्य । विकल्पनिद्राम् । विकल्पो नाम जात्यादियोज-

---

विनाशितम् । तर्कमेव प्रकटयति । किं व्याप्तं किमाक्रान्तम्, किमपोहितं दूरीकृतम्, किमु हृतं नीतम्, किं वा किमु समुत्सारितमपसारितम्, किं नु स्यूतं उच्चावचवस्त्रवत्समीकृतं, किमिदं नु विलायितं स्त्यानघृतवद्द्रवीकृतं किंचिदस्तीति शेषः । इत्यथवा किंचन किमपि नास्तीत्यर्थः । नु किमित्यादि वितर्कोऽर्थे । आत्मप्रबोधे सम्यगुदिते सांसारिकत्रैलोक्यविषयानेकतर्ककर्कशा परिभावना विलीयते । अन्यथा तर्कदुर्गमप्रकारविकारपरिखाभिरावृतो न कथंचन गणयतीति भावः ॥ २९ ॥ निर्विकल्परूपतया विद्याप्रबोधयोराकारो निरूपयितुं न शक्यत इति तयोरवस्थैव पात्रद्वारा निरूपितेति ज्ञेयम् । यथायोग्यसंभावनया पुरुषे प्रबोधस्य जातत्वाद्वत्स इति संबोधनम् । विघटिततिमिरपटलं तिमिरमज्ञानभवं पटलमाच्छादकं विघटितं विनाशितं यस्मिन् एवंभूतं प्रभातमिव संजातं 'संसाररात्र्यपगमाद्बोधः प्रातःक्षणो मनः' इत्युक्तत्वादिति भावः । तदेव दर्शयति—तथा हि । मोहेति । कोऽपि विशिष्याशक्यवचनः । तुषारा हिमा रश्मयो यस्य प्रबोधश्चासौ तुषाररश्मिश्च तादृशः । प्रबोधचन्द्र इत्यर्थः । तथाजनि प्रादु-

---

१. 'यमादि येन विश्वात्मकं' इति पाठः ।

सर्वथा कृतकृत्योऽस्मि भगवत्या विष्णुभक्तेः प्रसादात् । सोऽहमिदानीम्—

सङ्गं न केनचिदुपेत्य किमप्यपृच्छन्
गच्छन्नतर्कितफलं विदिशं दिशं वा ।
शान्तो व्यपेतभयशोककषायमोहः
स्वायंभुवो मुनिरहं भवितास्मि सद्यः ॥ ३१ ॥

---

नात्मको जगद्भ्रमः स एव निद्रा स्वप्नः । निद्राशब्देन रात्रिरपि लक्ष्यते । श्रद्धाविवेकमतिशान्तियमादिकेन । श्रद्धा गुरुदेववाक्ययोर्विश्वासः, विवेकमतिर्नित्यानित्यवस्तुविवेकविषया, शान्तिरौदासीन्यम्, यमश्चित्तवृत्तिनिरोधः, एतदादिकेनैतत्प्रमुखेन ज्ञानसाधनेन विश्वात्मकः सन् यः स्फुरति स एष विष्णुरहम् । अयमर्थः । 'तत्त्वमसि' 'सत्यं ज्ञानमनन्तं ब्रह्म' इति वाक्यानि ब्रह्मोपदेशवाक्यानि । तदनन्तरभवानि 'अहं स एषः', 'अहं ब्रह्मास्मि' इत्यादीनि अनुभववाक्यानि । अतश्च पूर्वमुपदेशाख्यमुदाहृतमिति ध्येयम् । अत्र विष्णुरहं स एषः सर्वथा कृतकृत्योऽस्मि विष्णुभक्तेः प्रसादादित्यनेन प्रकृतकार्यस्यानुसंहितत्वेनानुसरणात्पूर्वभावाख्यं निर्वहणसंधेर्द्वादशमङ्गम् । 'पूर्वभावः स विज्ञेयः प्रकृतस्यानुसर्पणम्' इति तल्लक्षणात् ॥३०॥ **सङ्गमिति** । न केनचित्सङ्गमुपेत्य । सर्वत्रासङ्गः सन्नित्यर्थः । किमप्यपृच्छन्प्रश्नमकुर्वन् । अतर्कितफलं अनुद्देशफलम् । क्रियाविशेषणमेतत् । विदिशं विदिग्भागं गच्छन् । यादृच्छिकगमनं कुर्वन्नित्यर्थः । शान्त उदासीनः । व्यपेतभयशोककषायमोहः । व्यपेता गलिताः भयं भीतिः, शोको दुःखं, कषायो रागद्वेषादिकालुष्यं, मोहोऽज्ञानं यस्मादिति । स्वायम्भुवो नित्यमुक्तः मुनिर्निदिध्यासवान् अहं सद्यो भवितास्मि । भवामीत्यर्थः । 'सायंगृहः' इति पाठे सायंकाले गृहमागत इत्यर्थः । 'सोऽहंग्रहः' इति पाठे तु सोऽह-

---

भूतः । येन प्रबोधचन्द्रेण कृत्वा । वेदबोधितफलावश्यंभावित्वनिश्चयः श्रद्धा, दृश्यमनात्मदृष्टिरात्मेत्यादिर्विवेकमतिः, शान्तिरिन्द्रियनियमः, यमनियमादिकं व्याख्यातं, विश्वात्मकं जगद्रूपं स एष विष्णुरिति प्रस्फुरति प्रकाशते । किं कृत्वा । मोहः संसारहेतुरज्ञानं तमेवान्धकारमावरणमवधूय निरस्य विकल्पो भ्रम एव निद्रा तामुन्मथ्य त्यक्त्वा । 'यमादिकेन' इति पाठे यमादिकेन बोधतुषाररश्मिरजनीत्यन्वयः ॥ ३० ॥ उत्पन्नब्रह्मसाक्षात्कारस्य वर्तमानप्रारब्धस्यावस्थामाह—**सङ्गमिति** । सोऽहं सायंकालेन विशिष्टं स्थानमेव गृहं यस्य स सायंगृहो मुनिर्मननशीलः सद्यो भविता । इदानीं भविष्यामीत्यर्थः । सङ्गं यदृच्छावशात् न केनचिदप्युपेत्य प्राप्य किमप्यपृच्छन् न पृष्टवान् । प्रयोजनाभावादिति भावः । दिशं प्राच्यादिं, विदिशमाग्नेय्यादिम् । न

---

१. 'सायंगृहो' इति पाठः ।

(ततः प्रविशति विष्णुभक्तिः ।)

**विष्णुभक्तिः**—(सहर्षमुपसृत्य) चिरेण खल्वस्माकं संपन्नाः सर्वे मनोरथाः । येन प्रशान्ताराति भवन्तमवलोकयामि ।

**पुरुषः**—देव्या विष्णुभक्तेः प्रसादात्किं नाम दुष्करम् । (इति पादयोः पतति ।)

**विष्णुभक्तिः**—(पुरुषमुत्थापयति ।) उत्तिष्ठ वत्स किं ते भूयः प्रियमुपकरोमि ।

**पुरुषः**—अतः परमपि किं प्रियमस्ति । यतः—

प्रशान्तारातिरगमद्विवेकः कृतकृत्यताम् ।
नीरजस्के सदानन्दे पदे चाहं निवेशितः ॥ ३२ ॥

---

मिति ग्रहो ग्रहणं ज्ञानं यस्य सः एवंविधः सन् अहं मुनिर्भवितासीत्यर्थः ॥ ३१ ॥ ततः प्रविशतीत्यारभ्य पुरुषमुत्थापयतीत्यन्तं सुगमम् । **उत्तिष्ठेति** । उपकरोम्युपहरामि । ददामीत्यर्थः ॥—**प्रशान्तेति** । प्रशान्तो विगलितोऽरातिः शत्रुर्महामोहो यस्य सः । कृतं कृत्यं यस्य स कृतकृत्यस्तस्य भावस्तत्ता । अयमर्थः— अविद्यानिवृत्तिरेव कृतकृत्यता । नीरजस्के निस्तमस्के निष्कलङ्के । सदानन्दे सच्च तदानन्दं च सदानन्दे पदे वस्तुनि चाहं जीवात्मा निवेशितः सारूप्यं प्रापितः। अयं भावः । विवेको राजा मन्मित्रं निःसपत्नं राज्यं कुर्वन् कृतकृत्योऽभवत् । भगवत्या विष्णुभक्त्या मन्मित्रे विवेके कृतकृत्यतां नीते सति अहमपि सदानन्दरूपेणावस्थित इति विष्णुभक्तेः सकाशात्फलप्राप्तिप्रतिपादनात्फलाप्तिर्नाम

---

तर्कितं फलं प्रयोजनं यथा स्यात्तथा गच्छन्परिभ्रमन् शान्तो रागद्वेषादिशून्यः व्यपेता गताः भयं च शोकश्च कषायश्च प्रारब्धातिरिक्तकर्मफलभोगः मोहश्च यस्मात्तादृशः ॥ ३१ ॥ प्रशान्ताराति निर्दलितमोहं भवन्तं विवेकम् । अतः परमतोऽस्मात्परमुत्कृष्टम् । अतः परमित्युक्तस्यार्थं वदन्फलितमर्थमाह—प्रशान्तेति । विवेकः कृतकृत्यतामगमत्परिनिष्पन्नकार्योऽभूत् । कीदृशो विवेकः । प्रशान्तो ध्वस्तोऽरातिर्मोहरूपः शत्रुर्येन सः । यद्वा । प्रकर्षेण शान्तः कामक्रोधाद्यरिषड्वर्गो येन । विद्याप्रबोधौ श्रीमत्या विष्णुभक्तेः प्रसादान्महामोहं ससैन्यं विनाश्य श्रीमता विवेकेन समुत्पादिताविति ध्वनितम् । भो नीरजाक्षि कमलनयने, सदानन्दे पदेऽविनाशिपरब्रह्मपदे जीवन्मुक्तिलक्षणेऽहं निवेशितः स्थापितः । इतोऽन्यः पुरुषार्थो नास्तीति भावः। 'नीरजस्के सदानन्दे' इति पाठे निर्गतं रज आवरणरूपं यस्मात्तस्मिन्निरावरणे पदे इत्यस्य

---

१. 'नीरजाक्षि' इति पाठः ।

तथाप्येतदस्तु—(भरतवाक्यम्।)

पर्जन्योऽस्मिन् जगति महतीं वृष्टिमिष्टां विधत्तां
राजानः क्ष्मां गलितविविधोपप्लवाः पालयन्तु।
हत्वोन्मेषोपहततमसस्त्वत्प्रसादान्महान्तः
संसाराब्धिं विषयममतातङ्कपङ्कं तरन्तु ॥ ३३ ॥

(इति निष्क्रान्ताः सर्वे।)

इति श्रीकृष्णमिश्रविरचिते प्रबोधचन्द्रोदयनाम्नि नाटके
जीवन्मुक्तिर्नाम षष्ठोऽङ्कः ॥ ६ ॥

**समाप्तमिदं नाटकम्।**

---

त्रयोदशमङ्गम्। तल्लक्षणं तु 'फलाप्तिः फलनिष्पत्तिः' इति ॥ ३२ ॥ **तथापीति**। एतदस्तु वक्ष्यमाण आशीर्वादो भूयात्। भरतवाक्यमेतत् ॥ **पर्जन्य इत्यादि**। इष्टां सस्यादिगुणाम्। राजानः प्रजारञ्जनशीलाः गलितविविधोपप्लवा अतिवृष्ट्याद्युपद्रवरहिताः। उक्तं च—'अतिवृष्टिरनावृष्टिर्मूषकाः शलभाः शुकाः। अत्यासन्नाश्च राजानः षडेता ईतयः स्मृताः ॥' इति। तत्त्वस्य स्वरूपज्ञानस्योन्मेषाद्विकासादुपहततमसो विगलिताज्ञानाः त्वत्प्रसादात्तव विष्णुभक्तेः प्रसादात् महान्तो महानुभावाः संसाराब्धिं संसार एवाब्धिः सागरो दुरन्तत्वात् तं। विषयेषु ममत्वाभिमानः स एव पङ्कः कर्दमो यत्र तं तरन्त्वित्याशीर्वादः। अत्र शुभाशंसनप्रतीतेः प्रशस्तिर्नाम निर्वहणसन्धेश्चतुर्दशमङ्गम्। तदुक्तम्—'प्रशस्तिः शुभशंसनम्' इति ॥३३॥ इति षष्ठोऽङ्कः। समाप्तं नाटकमिति। षड्भिरङ्कैरङ्कितं साङ्गं नाटकमुदाहृतमित्यर्थः ॥ ॥ इदमिदानीमिह विज्ञातव्यम्। ख्यातनिवृत्तं धीरोदात्तनायकमुद्धतोपनायकमलङ्घितानौचित्यं शृङ्गारशान्तवीररसान्यतरप्रधानमुपसर्जनीभूतकरुणारसं संधिपञ्चकान्वितं चतुःषष्ट्यङ्गसमेतं उपसंध्युपयुक्तं अलंकारैरलंकृतं पताकास्थानकान्वितं विष्कम्भादिपञ्चकप्रपञ्चितं भारत्यादिरीतिपरिष्कृतं परिभाषापाठ्यादिभिर्विशेषितं अवस्थानुकृतिविलसितं नाटकमिति। यथो-

---

विशेषणम् ॥ ३२ ॥ नीरजस्कं सकलशास्त्ररहस्यं प्रबोधचन्द्रोदयाख्यनाटकच्छलेनापाततः प्रदर्श्य स्थले स्थले पूर्वपक्षापरपक्षौ कृत्वा वेदान्तसिद्धान्तानपि प्रदर्श्य विवेकपुरःसरं कामक्रोधादिपाखण्डागमपराजयद्वारा च सर्वानपि संसारनिराकरणपरिपन्थिनः पराभूयान्तेऽन्तेवासिनमतिदयापात्रं सम्यगवबोध्य विष्णुभक्तिं प्रार्थयन्तः श्रीकृष्णमिश्राः ग्रन्थान्ते आशीर्लक्षणं मङ्गलमाचरन्ति—तथाप्येतदस्त्विति। **पर्जन्य इति**। पर्जन्यो जलपूर्णो मेघोऽस्मिञ्जगत्यस्यां भूमौ महतीमिष्टां समये यावदपेक्षि-

क्रमभिनवगुप्तपादैः—'अर्थप्रकृत्यवस्थात्मसन्धिसन्ध्यङ्गवृत्तिमत्। अर्थोपक्षेपकैर्युक्तं पताकास्थानकादिभिः ॥ अलंकारैः समायुक्तं सन्धिभिश्चोपसन्धिभिः। रसौचित्य-विलासैश्च वृत्तानौचित्यवर्जितम् ॥ धीरोदात्ताद्यवस्थानुकृतिर्नाटकमुच्यते' इति । अत्राह ध्वनिकारः—'अनौचित्यादृते नान्यद्रसभङ्गस्य कारणम् । प्रसिद्धौचित्यब-न्धस्तु रसस्योपनिषत्परा ॥' अयमर्थः—विरोधिरससंबन्धिविभावादिपरिग्रहेणा-नौचित्यं विज्ञेयं यथा । शान्तरसविभावेषु मस्कर्यादिषु तत्तद्विभावतयैव निरू-पितेषु समनन्तरमेव शृङ्गारादिविभावतया तद्वर्णनमनुचितं, यथा वा प्रियं प्रति प्रणयकलहे कुपितासु नायिकासु वैराग्यकथाकथनादिभिरनुनयेऽनौचित्यमित्या-द्यूह्यम् । अत्र शान्तरसः पञ्चसन्धिव्यापितया पुनः पुनरनुसन्वीयमानः प्राधान्यं भजते, रसान्तरैरन्तरालवर्तिभिर्यैः समावेशस्तस्य प्राधान्यं नोपहन्ति । तदौचि-त्यपरिज्ञानम् । यथोक्तं ध्वनिकृता—प्रसिद्धेऽपि प्रवन्धानां नानारसनिबन्धने । एको रसोऽङ्गीकर्तव्यस्तेषामुत्कर्षमिच्छता । कार्यमेकं यथाव्यापि प्रवन्धस्य विधीयते । तथा रसस्यापि विधौ विविधो नैव विद्यते' इति अस्यार्थः। मुखादि-पञ्चसन्धिमयस्य प्रवन्धशरीरस्य यथा कार्यमेकमनु यो यो व्यापारः कल्प्यते, नच तत्कार्यान्तरैः संकीर्यते, नच तैः संकीर्यमाणस्य प्राधान्यमुपहीयते; तथैव रसस्याप्येकस्य प्रधानभूतस्य रसान्तरसंनिवेशे क्रियमाणे न कश्चिद्विरोधः प्रत्युत प्रत्युदीरितविवेकानामनुसन्धानवतां सचेतसां तथाविधे विषये प्रह्लादातिशयः प्रवर्तते । ततश्चाङ्गाङ्गिभावनिवन्धनं नाटकादौ कर्तव्यमेवेत्याह ध्वनिकारः—'अविरोधी विरोधी वा रसोऽङ्गी तु रसान्तरैः। परिपोषं च नेतव्यो यथा स्यादविरो-धिता' । परिपोषो नाम आन्तरालिकानां रसानां प्रधानेन रसेन तुल्यतया वर्णनं तत्र कर्तव्यमिति । अत्र लोचनाकारः—'परिपुष्य रसं मुख्यं समीपवर्तिन इतरे रसा-स्ततः किंचिदूनपरिपोषवन्तः कर्तव्याः' इति । अत्र तुलिकाविरोधगन्ध एव नास्ति। अपि विच्छित्त्यन्तरमेव तदित्यभिप्रायः । अतः प्रकृतशान्तरसः पुरुषाश्रयतया वर्णितः । इतरे रौद्रादयो रसास्तद्विरुद्धा महामोहविवेकाद्याश्रयतया वर्णिता इति भिन्नाश्रयै रौद्रादिभिः सह शान्तस्य विरोधगन्ध एव नास्तीति सम्यक् नाटकस्य शान्तरसप्राधान्यं वर्णयितुं युज्यत एव । ननु भरते—'शृङ्गारवीरकरुणाद्भुतहा-

ताम् । इष्टामिति पाठेनातिवृष्टिं निवारयति । विधत्तां करोतु । गलितो नष्ट उपप्लवो देशराज्याद्युपद्रवो येभ्यस्ते राजानः क्ष्मां पृथिवीं पालयन्तु । संसारिभ्य आशिषो दत्वा ज्ञानिभ्योऽपि ददाति । महान्तो ज्ञानिनस्त्वत्प्रसादाद्विष्णुभक्तिप्रसादात्संसार एवाब्धिः समुद्रस्तं तरन्तु । समुद्रसाम्यमाह । विषयाः स्रगादयः, ममता ममत्वाभि-मानः, आतङ्को भयमेतान्येव पङ्कः कर्दमो यस्मिंस्तम् । कीदृशा महान्तः । तत्त्वानामुन्मेषः साक्षात्कारस्तस्मादुपहतं विनाशितं तमोऽज्ञानं येषां ते । विष्णुभक्तेः

स्यभयानकाः । वीभत्सरौद्रनामानौ नाट्ये चाष्टौ रसाः स्मृताः ॥' इति । अत्राह शृङ्गनाचार्यः । चकार एवकारार्थः । नाट्येऽष्टावेव रसाः न संख्यान्तरसंख्येया इति । अतश्च रसान्तरस्य निर्विकारत्वात् 'शान्तं मेनिरे रसम्' इति एवकाराद्यावृत्त्या शान्तरसं माधुरिका वर्णयन्ति । तत्र वत्सलरसस्यैव एवकारव्यावृत्त्यत्वात् । यथाह भोजः—'शृङ्गारवीरकरुणाद्भुतहास्यरौद्रवीभत्सवत्सलभयानकशान्तनाम्ना । आम्नासिषुर्दश रसान्कवयो वदन्तु शृङ्गारमेव रसनाद्रसमामनन्ति ॥' इति । नच भोजवचनगतयोर्द्वयोरष्टसंख्यानियममप्यवच्छेद्यत्वमिति वाच्यम् । 'शृङ्गारवीरकरुणाद्भुतहास्यभयानकाः । बीभत्सरौद्रशान्ताश्च रसाः पूर्वैरुदाहृताः ॥' इति वचनादयमेव पक्षः साधीयान् । शमदमस्थायीकस्य शान्तरसस्यापि विमलान्तःकरणैः साध्यमानत्वात् । अन्यथा शमस्थायीनिरूपणं महात्मकृतमसमञ्जसं स्यादित्यभिनवगुप्तपादैरुक्तत्वात् [ अतो भोजेन स्थूलदर्शिना पूर्वाचार्याणां मतमाश्रित्य] वत्सलभावरूपस्य रसत्वमुक्तमिति सर्वमनवद्यम् । अत्र रघुवंशादिकाव्येभ्यो नाटकस्य विशेषतो रसप्राधान्यात्कविभिरप्रमादिभिर्भवितव्यम् । प्रमादाख्यो दोषो द्विविधः अव्युत्पत्तिनिबन्धनः, शक्तिनिबन्धनश्चेति । 'अव्युत्पत्तिकृतो दोषः स झटित्यवभासते । प्रबन्धमुक्तके वापि रसादीन्बोद्धुमिच्छता ॥ यत्नः कार्यः सुकविना परितो रोधिनामिति' । अत्रैतदुपसंहारनाटकविषये प्रतिभावतापि सावधानमनसा सूक्ष्मेक्षिकया भवितव्यमित्यास्तां तावत् ॥

शुभमस्तु सर्वजगतः परहितनिरता भवन्तु भूतगणाः ।
दोषाः प्रयान्तु शान्तिं सर्वत्र जनः सुखी भवतु ॥
पाशाङ्कुशैक्षवशरासनपुष्पबाणमाणिक्यवेणुरमणीयकरारविन्दे ।
सौभाग्यसीम्नि तरले तमसः परस्मिन्नापाटले महसि मज्जतु मानसं मे ॥
यशस्करे कर्मणि मित्रसङ्ग्रहे प्रियासु नारीषु धनेषु बन्धुषु ।
क्रतौ विवाहे व्यसने रिपुक्षये धनक्षयेऽष्टासु न गण्यते बुधैः ॥

इति श्रीमद्राजाधिराजपरमेश्वरश्रीमत्प्रतापश्रीकृष्णरायमहासाम्राज्यधुरन्धरश्रीसाल्वतिम्मदण्डनायकभागिनेयनाण्डिल्लगोपमन्त्रिशेखरविरचितायां प्रबोधचन्द्रोदयव्याख्यायां चन्द्रिकाख्यायां षष्ठोऽङ्कः समाप्तः ॥६॥

---

प्रसादात्सर्वं प्राप्यत इति भावः ॥ ३३ ॥ अङ्कसमाप्तिं द्योतयति—इति निष्क्रान्ताः सर्वे इति । अङ्कसमाप्तौ सर्वेषां निष्क्रमणमित्यर्थः ॥

सप्राकृतं संस्कृतमत्र किंचिद्व्याख्याय तात्पर्यमवर्णि किंचित् ।
तत्राप्यशुद्धं यदि किंचिदस्ति तच्छोधनीयं विबुधैर्न मूर्खैः ॥

इति श्रीमद्भट्टविनायकात्मजदीक्षितरामदासविरचिते प्रकाशाख्ये प्रबोधचन्द्रोदयव्याख्याने [illegible] षष्ठोऽङ्कः समाप्तः ॥ ६ ॥

# विक्रेयाणि संस्कृतपुस्तकानि ।

| | मू. रु. | आ. |
|---|---|---|
| अद्भुतदर्पणनाटकम्—श्रीमहादेवकविविरचितम्. ... | ।॥ | ८ |
| अभिज्ञानशाकुन्तलं नाटकम्—कालिदासकृतम्, राघवभट्टप्रणीतया अर्थद्योतनिकाख्यटीकया सहितम्. ... | १॥ | ।· |
| अमृतोदयनाटकम्—श्रीगोकुलनाथकृतम्. ... ... | ।॥ | ८ |
| अनर्घराघव नाटक—श्रीमुरारिकृत, रुचिपत्युपाध्यायकृत टीकेसहित. ... ... ... ... ... ... ... | २ | ।· |
| उत्तररामचरितम्—महाकविश्रीभवभूतिप्रणीतं, वीरराघवकृतया टीकया समेतम्. ... ... ... ... ... ... | १ | ८ |
| कर्पूरमञ्जरीसट्टकम्—श्रीराजशेखरकृतं, वासुदेवकृतया टीकया सहितं, बालभारतनाटकं च. ... ... ... ... | १ | ८ |
| कंसवधनाटकम्—महाकविश्रीशेषकृष्णकृतम्. ... ... | ।॥· | ८ |
| कर्णसुन्दरीनाटिका—महाकविश्रीबिल्हणकृता. ... ... | ।॥· | ८ |
| चैतन्यचन्द्रोदयं नाटकम्—श्रीकविकर्णपूरविरचितम्. ... | १। | ।· |
| धनंजयविजय—श्रीकाञ्चनाचार्यविरचित. ... ... | ३ | ८ |
| प्रसन्नराघवं नाटकम्—श्रीजयदेवकविविरचितम्. ... | ।॥ | ८ |
| महावीरचरितं नाटकम्—भवभूतिकृतं, वीरराघवकृतटीका | १॥ | ।· |
| मालविकाग्निमित्र—काटयवेमकृत कुमारगिरिराजीय व्याख्यासमेतम् । ... ... ... ... ... ... | ।॥। | ८ |
| मालतीमाधवं नाटकम्—भवभूतिकृतं, त्रिपुरारिकृतटीकया, [illegible]देवकृतटीकया, जगद्धरकृतटीकया च सहितम्. ... | २। | ।· |
| रत्नावलीनाटिका—श्रीहर्षदेवकृता, गोविन्दकृतटीकासहिता. | १। | ।· |
| विद्यापरिणयः—आनन्दरायमखिविरचितः. ... ... | ॥ | ८ |
| विदग्धमाधवम्—(नाटकं) श्रीरूपगोस्वामिप्रणीतम्. ... | १ | ।· |
| दूताङ्गदं नाटकम्—श्रीसुभटकविविरचितम्, एकाङ्कात्मके अस्मिन्नाटके रावणपुरतोऽङ्गदकृतस्य दौत्यस्य सम्यग्वर्णनीयस्य विवेचनं कृतमस्ति. ... ... .... ... ... | ८ | ८॥ |
| पार्वतीपरिणयनाटकम्—महाकविबाणभट्टप्रणीतं. ... | ।· | ८ |

पांडुरंग जावजी—निर्णयसागराध्यक्षः,

पो० काळबादेवी, मुंबई.